सरस्वतीभवन-ग्रन्थमाला

[ ३१ ]

पार्थसारथिमिश्रविरचितं

# तन्त्ररत्नम्

[ पञ्चमो भागः ]




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ 31 ]

# TANTRARATNAM

[ *Part V* ]

by

**PĀRTHASĀRATHIMIŚRA**

Editors

**Ācārya Paṭṭābhirāma Śāstrī**

Ex-Head of the Deptt. of Mīmāmsā-Sāhitya

Sampurnanand Sanskrit Vishvavidyalaya

&

**Śrī Rāmanātha Dīkshita**

Ex–Dean of the Oriental Faculty

Banaras Hindu University




Chief Editor of the Granthamālā

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ

'VĀGĪŚA ŚĀSTRĪ

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

VARANASI

1979

Published by —
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,
Varanasi.

Available At—
Publication Section,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi–221002.

First Edition : 500 Copies
Price Rs. 46–60

Printed by—
Ghanashyāma Upādhyāya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press,
Varanasi

सरस्वतीभवन-ग्रन्थमाला

[ ३१ ]

पार्थसारथिमिश्रविरचितं

# तन्त्ररत्नम्

[ पञ्चमो भागः ]

सम्पादकौ

आचार्यश्रीपट्टाभिरामशास्त्री 'विद्यासागरः'

मीमांसा-साहित्यविभागाध्यक्षचरः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

प० श्रीरामनाथदीक्षितः

प्राच्यविद्यासङ्कायाध्यक्षचरः

काशीहिन्दूविश्वविद्यालयस्य




ग्रन्थमालाया मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०३६ तमे वैक्रमाब्दे    २००१ तमे शकाब्दे    १९७९ तमे खैस्ताब्दे

प्रकाशकः—
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणसी ।

प्राप्तिस्थानम्—
प्रकाशनविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी—२२१००२.

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम् : ४६-६० रूप्यकाणि



मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी.

# प्रास्ताविकम्

वेदाः खलु भारतीयसंस्कृतिभवनस्याऽऽधारस्तम्भाः सन्ति । तेषां व्याख्यानाय वेदाङ्गानि दर्शनानि पुराणानि च प्रवृत्तानि । आद्यद्वये ज्योतिषं निरुक्तं च विहाय सकलानां तेषां सूत्रशैल्याऽनितरसाधारणं निबन्धनम् । तेषु सर्वेषु जैमिनिना प्रणीतस्याधिकरणसहस्रात्मकस्य द्वादशलक्षण्यपरपर्यायस्य कर्मकाण्डमीमांसाशास्त्रस्य प्राचीनत्वं विपश्चिदपश्चिमैरास्थीयते । यद्यपि ब्रह्मसूत्रे जैमिनीयानि मतानीव काशकृत्स्नस्यापि 'अवस्थितेरिति काशकृत्स्नः' (१।४।२२) इति मतमुल्लिख्यते, महाभाष्यादावाचार्यकाशकृत्स्नकृतमीमांसाग्रन्थोऽपि संकेत्यते, तथापि साम्प्रतमुपलब्धं जैमिन्युपज्ञं मीमांसादर्शनमनन्यं प्राचीनं च सिध्यति । पाणिनिसमकालिकेन भगवतोपवर्षेण मीमांसा-सूत्रस्य काचिद् वृत्तिर्लिखिताऽऽसीदिति शाबरभाष्यतो ज्ञायते । बोधा-यनापरपर्यायोऽसौ पुरुषोत्तमाचार्येति नाम्ना प्रथित आसीदित्यपि समामनन्ति सम्प्रदायानुयायिनः ।

श्रीमद्भागवतपुराणानुसारेण ( १०।७४।८ ) कौत्सकुलोत्पन्नो जैमिनिर्यौधिष्ठिरे क्रतावार्त्विज्यमभ्युपजगाम । युधिष्ठिरकृते मयसभा-प्रवेशोत्तरवर्तिनि समारम्भे समुपस्थितोऽयमासीत् । शरपञ्जरमधि-शयानस्य भीष्मस्य सनीडे समुपस्थितेषु मुनिषु जैमिनिरप्यन्यतमो निर्दिष्टो महाभारतस्य शान्तिपर्वणि (४७।६५) । जनमेजयविभाविते सर्पसत्रेऽयमुद्गातृपदमलमकार्षीत् । कृष्णद्वैपायनादेष सामवेदमधीत-वानिति महाभारतीय आश्वमेधिकपर्वणि (५७।७४) वर्णितम् ।

शारीरकमीमांसादर्शने व्यासेन जैमिनेरेकादशतोऽधिकेष्वपि सूत्रेषु मतमुद्धृतम् । यथा--'साक्षादप्यविरोधं जैमिनिः' (१।२।२८),

'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति' (१।२।३१), 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' ( १।३।३१ ), 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' (१।४।१८), 'धर्मं जैमिनिरत एव' (३।२।४०), 'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः' (३।४।२), 'परामर्शं जैमिनिरचोदना चापवदति हि' (३।४।१८), 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः' (३।४।४०), 'परं जैमिनिमुख्यत्वात्' (४।३।१२), 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' ( ४।४।५ ), 'भावं जैमिनिर्विकल्पामननात्' ( ४।४।११ )। एवं तावत् स्वगुरुदेवेन समुद्धृतस्य जैमिनेर्महिमा नूनं जागर्ति भारतीयदर्शनवाङ्मये।

कृष्णद्वैपायनव्यासशिष्येषु जैमिनेरेव सर्वतोदिक्का प्रतिभा चकास्ति मूर्द्धन्यतमा। वदिके वाङ्मयेऽस्य नाम्ना जैमिनीयसंहिता, जैमिनीयोपनिषद्ब्राह्मणम्, जैमिनिसामगानम् इति, वेदाङ्गवाङ्मये—जैमिनिनिघण्टुः, जैमिनिगृह्यसूत्रम् इति, पुराणेतिहासवाङ्मये जैमिनिभारतम् (अश्वमेधः), जैमिनिभागवतम्, जैमिनिपुराणम् इति, स्मृतिवाङ्मये जैमिनिस्मृतिरिति च ग्रन्थाः प्रसिध्यन्ति। परवर्तिन्यां लाङ्गलेः सामवेदीयशिष्यपरम्परायामपि जैमिनेर्नाम दृश्यत इति विज्ञायते जैमिनिद्वयम्। ज्योतिषविषयकस्य जैमिनिसूत्रस्यापि कर्ता श्रूयते जैमिनिः कश्चित्। एवं सत्यपि मीमांसादर्शनकारोऽयं जैमिनिर्नूनं कृष्णद्वैपायनव्याससमकालिकः।

वेदप्रतिपाद्यार्थनिश्चये ब्राह्मणग्रन्थेषु कर्मकाण्डप्रमुखयज्ञार्थप्रतिपादनरूपस्तदीयोऽन्यतमो विधिरभ्युपेयते। ब्राह्मणग्रन्थानां विविधमतविचिकित्सितं वाक्यार्थं निश्चेतुकामो जैमिनिरवतारयामास वाक्यार्थविचारशास्त्रं कर्ममीमांसापरपर्यायं मीमांसादर्शनं नाम। वेदानां पूर्वभागात्मकानि कर्मकाण्डोद्भावकानि ब्राह्मणानि, उत्तरभागात्मिकाश्चो-

पनिषद इति ब्राह्मणग्रन्थानां वाक्यार्थविनिश्चयाज्जैमिनिसूत्राणि पूर्वमीमांसापदेन, औपनिषदविषयविवेचनाच्च ज्ञानकाण्डात्मकानि ब्रह्मसूत्राणि वेदान्तापरपर्यायतयोत्तरमीमांसापदेन प्रसिद्धि भेजिरे। कालकृतं पौर्वापर्यं तत्र नास्ति। वेदनित्यतां स्वीकुर्वाणस्यापि मीमांसादर्शनस्यानीश्वरवादित्वमाख्यायते न तु नास्तिकत्वम्। वैदिकाः शब्दाः, तदर्थाः, तदुभयसंबन्धाः, वाक्यानि, तेषां क्रमश्च मीमांसादृशा नित्यत्वमावहन्ति। धर्माख्यं विषयं वक्तुं विजृम्भते प्रयोजनं मीमांसायाः। वैदिकं कर्मकाण्डानुष्ठानमधिकृत्य मीमांसा ग्रन्थव्याख्याविषयकान् नियमान् विन्यस्यतीति न्याय इति प्राचीनतममभिधानं दर्शनस्यास्य। एवं तावन्मीमांसकाः खलु प्रथमनैयायिकपदभाजो भवन्ति। स्वमतप्रतिपादनशैली मीमांसकानां तर्कसंवलिता समर्था च विराजते। व्याकरणं यथा पदसाधुत्वलक्षणमभ्युपेयते, प्रमाणपरिज्ञानाय च न्यायशास्त्रमङ्गीक्रियते, तथैव वाक्यज्ञानाय मीमांसादर्शनमाश्रूयते। वाक्यज्ञानार्थं तच्छरणमन्तरा नोपायोऽन्योऽस्ति कश्चन।

मीमांसासूत्राणामर्थस्फोरणाय यद्यपि पूर्वमुपवर्षवृत्तिर्भवदासीया च वृत्तिरास्तामिति ज्ञायते, तथापि साम्प्रतं गुप्तकालस्थितस्य शबरस्वामिनो भाष्यमेव जागर्ति पुरातनम्। एतदाधारीकृत्य १–षष्ठख्रीस्तशताब्दस्थितेन गुरुनाम्ना प्रसिद्धेन प्रभाकरेण, २–सप्तमख्रीस्तशताब्दस्थितेन कुमारिलभट्टेन, ३–द्वादशख्रीस्तशताब्दस्थितेन मुरारिमिश्रेण चेति त्रिभिष्टीकाकृद्भिः क्रमशो भाट्टमतम्, गुरुमतम्, मुरारिमतं चेति त्रयः सम्प्रदायाः प्रवर्तिता इत्यनेन शक्यते विज्ञातुं परमो महिमा शाबरभाष्यस्य। यत्र प्रभाकरेण बृहत्याख्यायां टीकायां शाबरभाष्यसिद्धान्ता एवानुमोदिताः, तत्र कुमारिलेन क्वचित् क्वचिद् भाष्यसिद्धान्तप्रत्यादेशपूर्वकं स्वकीयं निरवग्रहमतमप्याविर्भावितम्।

कुमारिलेन शाबरभाष्ये या टीका विरचिता, सा त्रिषु भागेषु

परिसमाप्तिमानीता। टीकायाः प्रथमो भागः श्लोकवार्त्तिकाख्यो विराजते। स जैमिनिसूत्रस्य प्रथमाध्यायीयप्रथमपादपर्यन्तमेव समवतिष्ठते। तन्त्रवार्त्तिकाख्यो द्वितीयो भागः प्रथमाध्यायीयद्वितीयपादादारभ्य तृतीयाध्यायं यावद् विराजते। टुप्टीकाख्यस्तृतीयो भागो यद्यपि द्राघीयांश्चतुर्थाध्यायतो द्वादशाध्यायं यावत् समुद्भासते, तथापि तृतीयभागस्यास्य व्याख्यानं भागद्वयवद् विस्तृतं नास्तीति विभाव्य त्रयोदशखीस्तशताब्दात् पूर्वभवेन यज्ञात्मनन्दनेन मैथिलेन श्रीपार्थसारथिमिश्रेण तत्र तन्त्ररत्नाख्या व्यतानि व्याख्या। स्वपितुः सकाशादेव तेन समधिगता विद्येति न्यायरत्नमालायाश्चरमेण पद्येन विज्ञायते—

> भुवनत्रयविख्यात – श्रीमद्यज्ञात्मनन्दनः।
> तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः॥ इति।

तदिदं पार्थसारथिमिश्रविरचितं तन्त्ररत्नं सप्तशतवर्षाणामनन्तरं १९३० तमे खीस्ताब्दे चतुर्थाध्यायीयद्वितीयपादस्य द्वाविंशसूत्रं यावद् महामहोपाध्यायैः डा० गङ्गानाथझामहोदयैः प्रथमभागात्मकं सरस्वतीभवनग्रन्थमालाया एकत्रिंशप्रसूनतया सम्पादितम्। पञ्चमाध्यायीयद्वितीयपादस्य १९ सूत्रपर्यन्तं द्वितीयभागतया पण्डितगोपालशास्त्रिनेनेमहोदयेन समपादि। इह टुप्टीका पार्थक्येन न मुद्रिता। तन्त्ररत्नव्याख्यायामेव सा कात्स्न्येन समावेशिता। तज्ज्ञानार्थं तत्र लघुकोष्ठकैष्टुप्टीकांशः कुण्डलितोऽभूत्। पार्थसारथिमिश्रस्येदं महद् वैशिष्ट्यं यट् टुप्टीकया सार्धं समन्वयमातन्वती तेन स्वकीया व्याख्या तथा कौशलेन वितता यथा टुप्टीकायास्ततः पार्थक्यं न विभाव्यते सरलतया।

यद्यपि टुप्टीकायाः केचिदंशा यथायथं तन्त्ररत्ने नोपलभ्यन्ते, तथापि ते व्याख्यारूपतया तत्रात्मसात्कृता एव। आनन्दाश्रमसंस्कृत-

ग्रन्थावलीप्रकाशितस्य टुप्टीकाग्रन्थस्याऽऽत्रारेणेह कानिचिदुदाहरणानि प्रस्तूयन्ते—

| टुप्टीकाग्रन्थे विद्यमानः पाठः | तन्त्ररत्नस्य पञ्चमे भागेऽनुपलब्धः |
|---|---|
| १—अत्राभिधीयते ( १८११ पृ० ) | १६ पृ०, ७ पङ्क्तौ |
| २—तद् यदि यागान्तरं न लभ्येत (१८१६ पृ०) | २४ पृ०, १४ पङ्क्तौ |
| ३—एकेन प्रधानं वस्तु, द्वितीयस्य तु प्रोक्षणादिविशिष्टार्थत्वेन प्राप्नोति (१८१६ पृ०) | २५ पृ०, ५ पङ्क्तौ |
| ४—सापेक्षाश्च कर्तारः, तस्माद् विवक्षिते बहुवचनम् (१८४१ पृ०) | ३५ पृ०, ५ पङ्क्तौ |
| ५—यदि स्पर्शोऽभिधीयेत ( १७४७ पृ० ) | ४२ पृ०, १३ पङ्क्तौ |
| ६—क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ( १८५० पृ० ) | ४३ पृ०, ३ पङ्क्तौ |
| ७—प्रकरणान्तराभावाद् दक्षिणान्तराभावाद् दक्षिणान्तरत्वात् (१८७८ पृ०) | ६३ पृ०, १ पङ्क्तौ |

तन्त्ररत्ने क्वचित् क्वचिट्टुप्टीकावाक्यसंघातानामाद्यांशो व्याख्यायते, ततो वाक्यमध्यमांशं हित्वाऽन्तिमांशो व्याख्यायते। तदनु पर्यन्ते समुज्झिता मध्यमांशा अपि विश्लेष्यन्ते। यथा—

**गृहमेधीये तु दृष्टोपकारावाज्यभागौ पुनः। श्रुतौ, शक्नुतो गुणावेकैकस्याम्। तस्यां गिरापदस्य प्रतिषिध्यमानस्य यत् कार्यं लक्ष्यते, तत्रेरापदं विधीयते। तस्मात् कार्यलक्षणार्थं गिरापदमुच्चार्यते, न प्रतिषेधार्थम्, वाक्यभेदादिदोषप्रसङ्गात्। न चापि लक्षणया कार्यापत्तिः। यथा—पृष्ठ्यः षडहः सन्तिष्ठत इति। अभावः संस्था, अभावेन प्रतिषेधो लक्ष्यते। प्रतिषेधेन लक्षणया कार्यं गम्यम्। देवग्रहणं यत्र, यत्रापि संदंशाभावः, तत्रापि क्रमादेवाङ्गत्वमिति। तस्मात्**

**समुच्चयः**' इत्येतादृशष्टुप्टीकाया मूलपाठः पूर्वनिर्दिष्टस्य ग्रन्थस्य १६०७ तमे पृष्ठे मुद्रितोऽस्ति । ततः **'जुहोतिशब्दसामान्यात्** स्थानसामान्यात् पूर्वबाधः— — —'इत्याद्यंशो नूतनकण्डिकातः समारब्धः ।

तन्त्ररत्नग्रन्थे ( पञ्चमे भागे ) तु टुप्टीकायाः 'गृहमेधीये तु दृष्टोपकारावाज्यभागौ पुनः ( श्रूयेते तौ ) शक्नुतः' इत्यंशः ( स्थूलाक्षरैर्मुद्रितः ) व्याख्यातः, ततोऽन्ते 'तस्मात् समुच्चयः' इत्यंशः स्थूलाक्षरैर्मुद्रितः । मध्यमांशा उज्झिताः । तद्व्याख्यामकृत्वाऽग्रिमकण्डिकायाः 'जुहोतिशब्दसामान्यात्' इत्याद्यंशं व्याख्याय समुज्झिता मध्यमांशा एवं व्याख्याताः—'उच्यते—एवं सति वाक्यभेदः प्राप्नोति । विधायकशक्तिकल्पना चैकैकस्य स्यात् । तस्माद् गिरापदस्य प्रतिषिध्यमानस्य यत् कार्यं साधनाकाङ्क्षं लक्ष्यते, तत्रेरापदं विधीयते' इति । इत्थं खलु प्राक्तनान् सर्वान् अंशान् परतो व्याख्याय श्रीपार्थसारथिमिश्रेण यद्यपि सकला टुप्टीका तन्त्ररत्ने समाहृता, तथापि 'देवग्रहणं यत्र, यत्रापि संदेशाभावः, तत्रापि क्रमादेवाङ्गत्वमिति' इति टुप्टीकांशः सर्वथा समुज्झितः, तदीया व्याख्यापि नोपन्यस्ता । 'प्रतिषेधेन च लक्षणया कार्यं गम्यम्' इति टुप्टीकांशः स्थूलाक्षरैर्नास्ति मुद्रितः ।

तृतीयभागः खलु पञ्चमाध्यायस्य द्वितीयपादतः षष्ठाध्यायं यावत् चतुर्थो भागश्च नवमाध्यायपर्यन्तः पण्डितराजशास्त्ररत्नाकरपदवाक्यमाननिपुणादिविरुदविभूषितेन मीमांसकप्रवरेण श्री ति० वे० रामचन्द्रदीक्षितमहोदयेन पण्डितश्रीक्षेत्रेशचन्द्रचट्टोपाध्यायस्य प्रधानसम्पादकत्वे पाठभेदप्रदर्शनपूर्वकं टिप्पण्यादिभिः समलङ्कृतौ महता प्रावीण्येन सम्पादितौ १९६३, १९७२ तमयोः खीस्ताब्दयोश्चास्यामेव ग्रन्थमालायां क्रमशः प्रकाशितौ । यद्यपि सरस्वतीभवनपुस्तकालये द्वादशसंख्याका हस्तलेखा विद्यन्ते तन्त्ररत्नस्य, तथापि स्पष्टानां पूर्णानां च त्रयाणामेव तेषामुपयोगो विहितोऽत्र सम्पादने । तत्र स्थूलाक्षरैर्मुद्रापितष्टुप्टीकांशः पाठकानां समजनि सौकर्यंकरः ।

टुप्टीका जैमिनीयेषु सर्वेषु सूत्रेषु न समासाद्यत इति तन्त्ररत्नमपि तावत्स्वेव सूत्रेषु संदृब्धम्। यद्यपि पार्थसारथिमिश्रैस्तन्त्ररत्नादावन्ते च नाचरितं मङ्गलाचरणम्, तथापि नैतावता तदीयमनीश्वरवादित्वं शक्यतेऽभ्युपगन्तुम्। तेन न्यायरत्नमालारम्भे यन्मङ्गलं समनुष्ठितं तेन तस्य वैष्णवत्वं समाश्रूयते। आउफ्रेख्तसंकलितेन 'कैटलागस् कैटलोगोरम्' इत्याख्येन विवरणपुस्तकेन सप्तग्रन्थानां प्रणेताऽयं सिध्यति मिश्रमहाभागः। तेषां नामानि सन्ति—( १ ) तन्त्ररत्नम् (प्रस्तुतम्), ( २ ) न्यायरत्नमाला, ( ३ ) न्यायरत्नाकरः, ( ४ ) शास्त्रदीपिका, ( ५ ) तर्कपादः, ( ६ ) मीमांसावादः, ( ७ ) मीमांसावादार्थश्चेति। श्रीमिश्रस्त्रयोदशख्रीस्तशताब्दभवेन श्रीप्रत्यक्स्वरूपेण नयनप्रसादिन्यां स्मृत इति सा तत्स्थितेश्चरमा कालसीमा। अष्टमख्रीस्तशताब्दस्थितस्य श्रीशङ्कराचार्यसमकालिकस्य श्रीकुमारिलभट्टस्यैकशताब्दानन्तरं दशमख्रीस्तशताब्दारम्भस्तदीया पूर्ववर्तिनी कालसीमा संप्रधारयितुमुचिता।

सुधीशिरोमणिभिः पण्डितराज-शास्त्ररत्नाकरेत्यादिविविधविरुदावलीविभूषितैर्भारतराष्ट्रपतिसभाजितैर्मीमांसकप्रवरैः श्रीपट्टाभिरामशास्त्रिवर्यैः सरस्वतीभवनस्थहस्तलेखद्वयसाहाय्येन टुप्टीकामुद्रितपुस्तकाधारेण च पाठनिर्धारणपूर्वकं विविधाभिष्टिप्पणीभिर्भूमिकया च समलङ्कृत्य सम्पादितस्य तन्त्ररत्नस्य द्वादशाध्यायान्तश्चरमोऽयं पञ्चमो भागः सरस्वतीभवनग्रन्थमालाया एकविंशप्रसूनतया प्रकाशमानीयमानो नूनं विद्वत्तल्लजान् प्रीणयिष्यतीति दृढं विश्वसिति

सं० सं० विश्वविद्यालये
हरितालिकायां २०३६ वै०
(२५-८-१९७९ खी० शनौ)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# किञ्चिन्निवेदनम्

श्रीपार्थसारथिमिश्रप्रणीतस्य तन्त्ररत्नस्य सरस्वतीभवनग्रन्थमालानुक्रमेण प्रथमो द्वितीयश्च भागः १९३०-१९३३ ई० वर्षेषु प्रकाशितः। तयोः क्रमशः पुण्यश्लोका म० म० श्रीगोपीनाथकविराजाः, पण्डितप्रवराः नेने इत्युपाह्वाः श्रीगोपालशास्त्रिणश्च सम्पादका आसन्। भागद्वये चतुर्थाध्यायतः पञ्चमाध्यायद्वितीयपादस्य नवमाधिकरणान्तोंऽशः प्रकाशितः। ततः संस्कृतविश्वविद्यालयाधिकारिणो ग्रन्थरत्नस्यास्य सम्पादनाय जगति लब्धप्रतिष्ठान् पूर्वोत्तरतन्त्रयोरप्रतिहतं वैदुष्यमावहतः श्रीरामचन्द्रदीक्षितान् न्ययूयुजन्। ते पञ्चमाध्यायद्वितीयपादस्य दशमाधिकरणमारभ्य षष्ठाध्यायान्तं तृतीयं भागम् १९६३ ई० वर्षे सुसम्पाद्य सप्तमाध्यायमारभ्य नवमाध्यायान्तं चतुर्थभागं सम्पादयितुं प्रवृत्ता अपरिसमाप्यैव तं भागं दुर्दैववशेन स्वर्लोकमगमन। ततोऽवशिष्टभागस्य सम्पादनाय विश्वविद्यालयाधिकारणो मां पण्डित-श्रीरामनाथदीक्षितञ्चादिदिशुः। आपतत्स्वपि भूयस्सु प्रत्यूहेषु दैवानुग्रहेण कथमपि पञ्चमो भागो दशमाध्यायतो द्वादशाध्यायान्तस्सम्पादितः। इत्थमस्य ग्रन्थस्य १९३० ई० वत्सरादारभ्य १९७९ ई० वर्षं एकोनपञ्चाशद्वर्षव्यापिना कालेन सम्पादनं सम्पन्नमिति खेदोऽपि भवति मोदोऽपि।

तन्त्ररत्नमिदं भट्टकुमारिलप्रणीतटुप्टीकायाः शाबरभाष्यव्याख्याया व्याख्यानरूपम्। भट्टपादैः शाबरभाष्यस्य खण्डशो व्याख्यात्रयं प्राणायि—तर्कपादस्य श्लोकवार्त्तिकमिति प्रथमाध्यायद्वितीयपादतस्तृतीयाध्यायान्तभाष्यस्य तन्त्रवार्त्तिकमिति चतुर्थाध्यायतो द्वादशाध्यायान्तभाष्यस्य टुप्टीकेति च। तत्र श्लोकवार्त्तिकस्य न्यायरत्नाकर इति टुप्टीकायास्तन्त्ररत्नमिति च व्याख्ये श्रीपार्थसारथिमिश्रोऽकरोत्। टुप्टीकाग्रन्थोऽतिसंक्षिप्तो व्याख्यासापेक्ष इति पार्थसारथिमिश्रस्य व्याख्याकरणे प्रवृत्तिरभवदिति प्रतीयते। टुप्टीकाव्याख्येयमति-

विलक्षणा श्रीपार्थसारथिमिश्रस्य । प्रतीकग्रहणपूर्वकं मूलं न व्याख्याति । मूल-वाक्यानि समग्राण्यनूद्य मध्ये मध्ये मूलगतपदानां विवरणपराणि पदानि संयोज्य वाक्यानि पूरयति । व्याख्याकरणशैलीयं प्राचीना । अनया शैल्या प्रयोजनद्वयं लभामहे—मूलवाक्यानामर्थप्रतिपत्तिः शुद्धमूलपाठश्चेति । व्याख्या-सहितमातृकासु तद्रहितमातृकासु च पाठभेदास्समुपलभ्यन्ते । कः पाठः साधीयान् कश्च न साधीयानिति सन्देहे व्याख्यासहितमातृकापाठ एव साधीया-निति प्रत्येतुं काचन पट्टिकाधस्तात् प्रदर्श्यते—

| मुद्रितटुप्टीकापाठः | तन्त्ररत्नोद्धृतः पाठः |
| --- | --- |
| १. 'अस्मिन् सारस्वते सत्रे श्रवश्च ते गो आयुषी यजमाना पयोरह्नोः शिष्टिः स्वाहा दर्शपूर्णमासौ एतत्सारस्वतं सत्रम्, नात्र कामोऽस्याश्चोदकेन' (पृ० १८४५ आ० सं० | १. अस्मिन् हि सारस्वते सत्रे गोआयुषी एकाहौ पौर्णमास्यमावास्ययोरह्नोः यथाक्रमं दर्शपूर्णमासौ, एतदेव सारस्वतं सत्रम, न कामेष्ट्याः, न चैतत्सत्रम्' (पृ० ४० सं० वि० सं०) |
| २. 'तदेव विकृतिर्निराकांक्षात् स्वीकरोति' (पृ० १८६५) | २. 'तदेव तां निराकांक्षीकरोति' (पृ० ५७) |
| ३. 'यन्नियुन्वितत्यधा' (पृ० १८७३) | ३. 'यन्नियुञ्जीत तत्परिधौ' (पृ०६१) |
| ४. 'षड्विंशत्यो विराजः' (पृ० १८८१) | ४. 'षट्त्रिंशिन्यो विराजः' (पृ० ६५) |
| ५. 'गवादयस्तु यद्यप्यर्थवादत्वेनोपयुक्ताः' (पृ० १८८२) | ५. 'गवादयस्तु यद्यप्यर्थवादत्वेनोक्ताः' (पृ० ६६) |
| ६. 'न च शब्दस्समुच्चयार्थो भवति' (पृ० १८९२) | ६. 'चशब्दस्समुच्चयार्थो भवति' (पृ० ७३) |
| ७. 'गवादयः स्वार्थवक्तारो न द्योतकाः' (पृ० १८९३) | ७. 'चादयस्स्वार्थवक्तारो न द्योतकाः' (पृ० ७४) |
| ८. 'स एव नाद्यः, एवं च शब्दः' (पृ० १८९३) | ८. स एव न्यायः' (पृ० ७४) |
| ९. 'तेनोपकारमन्तरेण सम्भवन्तीति तत्सद्भावः' (पृ० १९०७) | ९. ते च प्रकारा उपकारमन्तरेण न सम्भवन्ति' (पृ० ८९) |

एवमनेकेषु स्थलेषु व्याख्यासहितटुप्टीकामातृकासाहाय्येन शुद्धाः पाठा अस्मिन् संस्करणे निवेशिताः। व्याख्याशैल्येतादृशी। तथाहि—

| टुप्टीकामूलम् | तन्त्ररत्नव्याख्या |
| --- | --- |
| १. 'यदि ब्रह्मशब्दोऽनुवादः स सर्वमिति विधीयते। तथा सति न ज्ञायते किं तत्सर्वमिति' (पृ० ३२) | १. यदुक्तं सर्वत्वं विधीयत इति तत्राह—यदि तावत् केवलो ब्रह्मशब्दोऽनुवादः सर्वमिति विधीयते यद् ब्रह्मणे तत्सर्वमिति। तथा सति न ज्ञायते किं तत् सर्वं यद् विधीयत इति। |
| २. 'कथं तर्हि पूर्वः पक्षः? श्रुत्या धेनुशब्दो धान एव वर्तते। गोद्रव्यन्तु न शब्देन। द्रव्यत्वस्य चोदकेन प्राप्नोति। तत्र चानुमानिकश्शब्दो विद्यते। एवं पूर्वः पक्षः' (पृ० ४९) | २. यद्यसाधारणगुणवाचित्वमविवादं कथं तर्हि पूर्वः पक्षः? उत्तरम्—श्रुत्या धेनुशब्दो धान एव गुणे वर्तते। गोद्रव्यन्तु अस्याधारभूतं न शब्देन उक्तं नापि चोदकेन, लक्षणया तु गम्यते केवलम्। अजा द्रव्यं त्वस्य चोदकेन प्राप्नोति। तत्र चानुमानिकश्शब्दो विद्यते तस्मिन् विद्यमाने नाशब्दपरिग्रहो युक्त इति पूर्वः पक्षः। |
| ३. 'विकृतिसिध्यर्थं प्रकृतिं तावन्निरूपयामः। ततो द्रव्यस्यैव निवर्तिका धेनुः' (पृ० ७३) | ३. भाष्योक्तं कारणसन्देहं दर्शयति —विकृतिसिध्यर्थं प्रकृतिं तावन्निरूपयामः। यदि प्रकृतौ गवादयः प्रधानभूतदक्षिणां प्रति ततः प्रतिप्रधानं गुणसम्बन्धात् प्रत्येकं गवादीनां दक्षिणात्वाद् दक्षिणात्वेन विधीयमानैकद्रव्यस्यैव निवर्तिका धेनुः। |

स्थूलाक्षराङ्किताः पङ्क्तयः वार्त्तिकस्य सूक्ष्माक्षराङ्किताश्च व्याख्यायाः पङ्क्तय इति ज्ञेयम्। एतादृशी व्याख्याशैली श्रीवाचस्पतिमिश्रैः विधिविवेकव्याख्यायां न्यायकणिकायामपि समाश्रिता। व्याख्यारूपोऽप्ययं ग्रन्थः सर्वैरपि मीमांसकैः प्रमाणिकत्वेन स्वीकृतः। खण्डदेव-कमलाकरभट्टप्रभृतयः परवर्तिनो मीमांसकाः पार्थसारथिमिश्राभिमतं पक्षमनूद्य तत्र तत्र खण्डयन्ति, तथापि 'इत्युक्तं तन्त्ररत्ने' 'इति पार्थसारथिः' इत्येवं तदभिमतञ्च पक्षं स्वीकुर्वन्ति। सर्वत्र प्रमाणविरुद्धः पदार्थोऽनुपादेय एव भवति, किन्तु यत्र युक्त्या पदार्थप्रसाधनं तत्र युक्तौ न्यूनाधिकभावस्तिष्ठत्येव। एतेन खण्डनस्थलेषु युक्त्या वा प्रमाणेन वा तत्खण्डनमिति प्रेक्षणीयं भवति। यदि युक्त्या तत्, न तर्हि तस्यानुपादेयता। यदि च प्रमाणेन तत्, तर्ह्यनुपादेयतैव तस्य। पार्थसारथिस्तु न क्वापि प्रमाणविरुद्धं किञ्चिदभिदधाति।

मीमांसायां प्रस्थानद्वयम्—अधिकरणप्रस्थानम्, प्रमाणप्रमेयप्रस्थानमिति। तत्र पार्थसारथिमिश्र उभयोरपि प्रस्थानयोर्वैदुष्यमावहन् अधिकरणप्रस्थानस्य मार्गदर्शकः। सूत्रभाष्यवार्त्तिकानन्तरं तत्तदधिकरणज्ञानसम्पादनाय शास्त्रदीपिकां प्रणीय पार्थसारथिमिश्रः परवर्तिनां ग्रन्थकर्तॄणां सत्यमेव मार्गप्रदर्शकः। अधिकरणानि च प्रायः श्रौतपदार्थभूयिष्ठानि। श्रौतेषु पदार्थेषु सम्यग् ज्ञातेष्वेवाधिकरणस्वरूपं रचयितुं ज्ञातुञ्च शक्यत इति निर्विवादम्।

तत्र पार्थसारथिसमये सूत्रतद्भाष्यतद्वार्त्तिकारूढतयैव मीमांसाया अध्ययनक्रम आसीत्। एतादृशः कालः कश्चन एष्टव्य एव, यत्र च मीमांसाया अध्ययनं स्वस्वगुरुपारम्पर्येणैव प्रचलति स्मेति। एवं स्वीकारे स्वाध्यायाध्ययनविधिरेव प्रमाणम्। स च विधिः साङ्गस्वशाखाया अध्ययनमर्थज्ञानाय विधत्ते। पदपदार्थज्ञाने निरुक्तव्याकरणादिभिर्जातेऽपि, असन्दिग्धं वाक्यार्थज्ञानं मीमांसासापेक्षमित्यध्ययनविधिरेव मीमांसाशास्त्रारम्भं प्रयुङ्क्त इति शास्त्रमर्यादा। सेयं मर्यादा जैमिनिसूत्राणां प्रवृत्तेः पूर्वमपि लोकैराद्रियते स्मेति स्वीकर्तव्यमेव, अन्यथा स्वाध्यायाध्ययनविधौ 'स्व'पदस्यानर्थक्यापत्तेः। तदानीन्तने काले न खल्वध्ययनं बोधमात्रेण पर्यवसितमभवत्, किन्त्वाचरणान्तम्। आचरण-

मपि नेतरान् मोहयितुम् , किन्तु प्रचाराय च । एवमध्ययनम्, तदवबोधः, अवबुद्धस्याचरणम्, आचरितस्य प्रचारणमितीमे चत्वारो व्यापारा अवदानन्याये-नैकः पदार्थः । न ह्यद्यतनेष्विव विना बोधेनाध्ययनम्, जातेऽपि बोधे प्रयोगा-भावः, प्रयोगोऽपि जनसंमोहनायेति क्रमस्तदानीमभवत् । किन्त्वेवन्तु सम्भवितु-मर्हति यत् स्मृतिशक्तेः क्षीणतेति । तामिमां परिस्थितिमवगत्य महर्षिजैमिनेः सूत्राणां प्रणयने प्रवृत्तिरजायत । ततो वेदार्थविचारक्रमः सूत्रारूढस्समजायत । एवं गच्छति बहुतिथे काले पूर्वापेक्षया स्मृतिशक्तेर्ह्रासतां लोकेष्वनुभवन्तः श्रीशबरस्वामिनो भाष्यमभाषिषुः । स्मृत्यधिकरणभाष्यसन्दर्भविलोकनेन विषयोऽयं द्रढीभवति । तथाहि—

'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्'

इति जैमिनेः स्मृत्यधिकरणसिद्धान्तसूत्रं विवृण्वानाश्शबरस्वामिनो लिखन्ति—'अस्या एव स्मृतेर्द्रढिम्नः कारणमनुभास्यामहे । तत्तु नानुभवनम् ...... ग्रन्थस्त्वनुमीयेत' इत्यादि ।

अत्र वार्त्तिककारा अपि वदन्ति—'शाखानां विप्रकीर्णत्वात् पुरुषाणां प्रमादतः । नाना प्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते' इति ।

अनेन सन्दर्भद्वयेनेदमस्माभिरभ्यूहितुं शक्यते—यज्जैमिनेः काल एव स्मृतिमूलभूताः श्रुतयोऽध्ययनाध्यापनपरम्परालोपेन लुप्ताः, परम्पराक्रमेणाध्येतॄणां स्मृतिशक्तेर्लोपः, कर्मानुष्ठाने च शैथिल्यम्, वैदिककर्मानुष्ठान औदासीन्यम्, वैदिकमार्गाच्च लोकानां प्रच्यवनमित्यादिकं प्रारभत इति । तदस्याः परिस्थिते-रवरोधाय भाष्यवार्त्तिकादिग्रन्थानां प्रादुर्भावः, ततो बहोः कालादनन्तरं दशम-शतके पार्थसारथेर्ग्रन्थाः । सूत्र-तद्भाष्यतद्वार्त्तिकाध्ययनद्वारा मीमांसाशास्त्रगत-विषयाधिगमे क्लेशमनुभवतश्छात्रानवगत्यैव पार्थसारथिमिश्रश्चतुरो ग्रन्थान् प्राणैषीत्—शास्त्रदीपिका, न्यायरत्नमाला न्यायरत्नाकरः तन्त्ररत्नञ्चेति । अस्य काले मिथिलायां श्रौतकर्मानुष्ठानपरम्परा विशेषेण प्रचलितासीत् । तद्बलेनैव ग्रन्थप्रणयनेऽस्य प्रवृत्तिर्जाता । प्रान्तभेदेन कर्मणां ज्योतिष्टोमादीनां प्रयोगे किञ्चिदिव वैलक्षण्यमाचारात् स्यादेव न प्रमाणतः । स्वप्रणीतेषु ग्रन्थेषु

क्वचिदाचारमूलाः पदार्था भवेयुः, ते चोपलभ्यमानप्रमाणविरुद्धा अपि भवेयुः । तदादाय परवर्तिनां खण्डनमपि सम्भवेत् । तावता पार्थसारथि प्रणीतग्रन्थेष्व-प्रामाण्यबुद्धिरयुक्ता ।

तदिदं क्वचिदुदाहरणे विमृशामः—दशमाध्यायपञ्चमपादस्याष्टमाधिकरणे 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति वाक्यमुदाहृत्य विचारः प्रवर्तितः । प्रतिष्ठारूपफलमिच्छन् यजमानः सामिधेनीषु मन्त्रेषु एकविंशितिसंख्यां सम्पादयेदिति वाक्यस्यार्थः । प्रकृतौ दर्शपूर्णमासयोः सामिधेनीमन्त्रा एकादश पठिताः । तत्र प्रथमामुत्तमाञ्च ऋचं त्रिस्त्रिरभ्यस्य पञ्चदश संख्या सम्पादनीया भवति—'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' 'पञ्चदशसामिधेनीरनुब्रूयात्' इति । प्रथमाया उत्तमायाश्च ऋचः त्रिस्त्रिरभ्यासे सति एकादश ऋचः पञ्चदश सम्पद्यन्ते । इयं प्राकृती स्थितिः । विकृतौ तु तत्रैकविंशतिसंख्यायाः सम्पाद-नीयत्वेन विधानम् । सेयं संख्या कथं सम्पादनीयेति विचारः । तत्र त्रयः पक्षाः—किं प्राकृतीभ्य एकादशभ्योऽधिकानामृचामागमेन सङ्ख्यापूरणम् । न च प्रथमोत्तमयोरभ्यासः ? अथवा प्रथमोत्तमयोरेव यावदेकविंशत्यादिसंख्यापूरणम-भ्यासः ? उत प्राकृतीभिरेकादशभिरधिकाभिश्चागमिताभिः प्रथमोत्तमयोरभ्यासेन च संख्यापूरणम् इति । एवं संशये तृतीयः पक्षः सिद्धान्तः—प्रकृतौ एकादश ऋचः, तासु प्रथमोत्तमयोस्त्रिस्त्रिरभ्यास इति पञ्चदश । अवशिष्टाः षड् ऋचो दाशतयीभ्य आगमयितव्या इति ।

तत्र द्वितीये यथाप्रकृति प्रथमोत्तमयोः ऋचोस्त्रिस्त्रिरभ्यासेन संख्यापूर्ति-रिति पक्षे, प्रथमाया ऋचो द्विरावृत्तिः उत्तमायाश्चतुरावृत्तिरिति क्रमेणाप्यभ्यासो भवितुमर्हतीति पार्थसारथिमिश्रोऽभिप्रैति । खण्डदेवाचार्यैः तत्खण्ड्यते—'द्विचतुरभ्यासेनापि संख्यासम्पत्तिसिद्धेः त्रित्वानुवादानुपपत्तिरिति पार्थसारथ्युक्त-मपास्तम्' (भा० दी० १०-५-८) इति । पूर्वपक्षिणोऽयं द्वितीयः पक्षः । स च यावत्संख्यापूरणमभ्यासमिच्छति, नागमम् । अभ्यासश्च प्रकृतौ विहितः—'त्रिः प्रथमाम्' इत्यादिना । तादृशोऽभ्यासो विकृतावतिदिष्टः । प्रकृतौ एकादशसु ऋक्षु पञ्चदशैव संख्या सम्पादनीया । तत्र प्रथमाया उत्तमायाश्चर्चः त्रिस्त्रिरभ्यासे

षट् सम्पद्यन्ते, अवशिष्टनवसंख्यायोगे पञ्चदश जायन्ते। विकृतौ एकविंशति-संख्या सम्पादनीया। प्रकृतिवत्प्रथमाया उत्तमायाश्च वारद्वयं त्रिस्त्रिरभ्यासे द्वादश भवन्ति, नवसंख्यायोगेनैकविंशतिसंख्या सिध्यति। पार्थसारथिमतेन प्रथमाया द्विरभ्यासः उत्तमायाश्चतुरभ्यासः। एवं वारद्वयमभ्यासे कृते द्वादश सिध्यन्ति। नवसंख्यया द्वादशसंख्याया योजनेन सैवैकविंशतिसंख्या निष्पद्यते। उभयथापि पूर्वपक्षिणो मतं सिद्धं भवति। तत्र खण्डदेवाचार्याणाम् 'समं स्याद-श्रुतत्वात्' इति न्यायोऽवलम्बः। स च न्यायः—अभ्यासो यथा समस्स्यात् तथा-विधोऽवलम्बनीय इत्युपदिशति, द्विचतुरभ्यासे च विषमोऽभ्यासः स्यात्। पार्थसारथिमिश्रस्तु 'समं स्यात्' इति न्यायमन्यथा नयति—यत्रैकेन वाक्येनैका-र्थोऽनेकस्य विधीयते तत्रैव समविभागः। यत्र तु वाक्यद्वयेनानेकमनेकस्य विधीयते तत्र विधिद्वयव्यापारयोरैकरूप्ये प्रमाणाभावान्न समविभागस्य प्रवृत्तिरिति। एतेन सन्दर्भेणेदं निर्गलति यद् युक्त्या पदार्थोपपादनस्थले सा युक्तिर्न व्यवतिष्ठते, प्रमाणपुरस्सरं पदार्थोपपादनस्थले तु व्यवस्थितमेव तद् भवतीति।

एवं मीमांसाकुतूहले कमलाकरभट्टः क्वचित् क्वचित् पार्थसारथिमिश्रं समर्थयते—'तदुक्तं पार्थसारथिमिश्रैः' इति। क्वचिच्च खण्डयति 'पार्थसारथिस्तु वेदान्ताध्ययनशून्यो भ्रान्त एव' इति (मीमांसाकुतूहलमातृका पृ० ३६)। मीमांसकसम्मतं मोक्षस्वरूपं किमिति विचारावसरे कमलाकरभट्टः—'अस्तु तर्हि मीमांसकमतम्। तथा हि—ज्ञानकर्मसमुच्चयाज्जडबोधात्मकस्यात्मनो नित्ययोर्ज्ञानसुखयोरुद्बोधाज्ज्ञानेन च सुखस्य विषयीकरणान्नित्यसुखाभिव्यक्ति-र्मुक्तिरिति भाट्टाः। दुःखाभाव एव मोक्ष इति तदेकदेशिनः पार्थसारथ्यादयः। तत्त्वयुक्तमिति वक्ष्यामः' इत्युपक्रम्य खण्डनान्ते पार्थसारथिं वेदान्ताध्ययन-शून्यं वदति। अत्रायं विषयविवेकः—

श्लोकवार्त्तिके भट्टपादाः सांख्याभिमतविवेकज्ञानस्य मोक्षसाधनत्वं वेदा-विहितत्वेन निरस्य तदभिमतं मोक्षरूपमपि प्रत्यस्यान्ते उपसंहरन्ति—

तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते' (श्लो० वा०, पृ० ४७५) इति।

'प्रपञ्चसम्बन्धो बन्धः, तदभावो मोक्षः। तेन निष्पन्नानां देहानां प्रध्वंसाभावः, यश्चानुत्पन्नानां प्रागभावः स मोक्षः। कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति' इति पार्थसारथेर्न्यायरत्नाकरः। अनन्तरं भट्टपादैः—

न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्।
न च क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥

इति मोक्षस्याभावात्मकस्यापि नित्यत्वम्, कर्मक्षयादेव च तत्सिद्धिरभिहिता—

तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये।
उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः॥ इति।

अस्यैव वार्तिकसन्दर्भस्य सारः पार्थसारथिमिश्रेण सङ्गृहीतः—'तस्मात् सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्चोत्पन्नानां धर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेनात्मज्ञानेन च विरोधात्, उत्पाद्यानाञ्च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात् विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानाञ्चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्, असति शरीरारम्भे पूर्वशरीरनिपाते चाशरीरोऽवस्थितो मुक्तो भवति' इति। (शा० दी०, पृ० १३० नि० सं०)

कमलाकरभट्टस्तु 'विमुक्तश्च विमुच्यते' इति नित्यमुक्तत्वश्रुतिम्, 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति प्रियत्वश्रुतिञ्चोदाहृत्य 'सुखं त्वेव विजिज्ञासितव्यम् सुखं भगवो विजिज्ञासे, यो वा भूमा तत्सुखम्, नाल्पे सुखमस्ति भूमानं भगवो विजिज्ञासे' इत्यादिश्रुतिभिः सुखरूपत्वमात्मन उक्त्वान्ते उपसंहरति—'तस्मान्नित्यसुखज्ञानात्मनः स्वरूपावस्थानं मुक्तिः' (मीमांसाकुतूहलमातृका, पृ० ३९) इति। 'वार्तिकारूढाभावमुक्तिवादस्तु परमतमिति राणकादिक्षुण्णः सिद्धान्तः' (पृ० ३९) इति च वदति। किञ्च, व्याकरणाधिकरणे भट्टपादैरुक्तं 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते इत्यात्मनः परमात्मप्राप्त्यवस्थाफलवचनं नार्थवादः' इति वचनं प्रमाणीकृत्य

लिखति—'तस्मात् सिद्धं नित्यसुखाभिव्यक्तिर्मुक्तिरिति। तत्त्वतस्त्वस्माकं मोक्षो वेदान्तिमतादभिन्न एव' (पृ० ३७) इति।

अत्र पार्थसारथिमिश्रस्याभिप्रायः—परमात्मप्राप्तेर्मोक्षत्वे भट्टपादैरपूर्वाधिकरणे 'अहंप्रत्ययेन हि चैतन्यस्वभावस्यात्मनोऽस्तित्वमात्रमवगम्यते, सर्वेषां चैतन्यात्मकत्वाद्यविभागादुपनिषत्स्वैकात्म्यव्यवहारः' इत्याद्युक्तं वचनं न सङ्गच्छेत इति। अत्रत्यो विशेषविचारोऽस्मत्सम्पादनकर्मीभूते 'मीमांसाकुतूहल'-भूमिकासन्दर्भे द्रष्टव्यः। एवञ्च पार्थसारथिमिश्रस्तद्विरचिता ग्रन्थाश्च मीमांसकसमाजे प्रामाणिकत्वेन समाद्रियन्ते। परवर्तिभिः क्वचित् क्वचित् खण्डने क्रियमाणेऽपि सूक्ष्मेक्षिकया विचार्यमाणे पार्थसारथिमिश्रस्याशय उन्नेतुं शक्यत इति सिद्धम्।

अतिगभीरस्य भट्टपादवार्त्तिकस्य व्याख्यासम्पादनं नाम न साधारणं कर्म। तत्रापि टुप्टीकाया अतिसंक्षिप्ताया विशदीकरणमनितरसाधारणशक्तिसम्पन्नेनैव कर्तुं शक्यम्। तदिदं पार्थसारथिमिश्रेण कृतं नाम्ना तन्त्ररत्नम्। 'तन्त्ररत्नमिदं भट्टकुमारिलप्रणीतटुप्टीकायाः शाबरभाष्यव्याख्याया व्याख्यानरूपम्' इत्यवादिष्म लोकोक्तिमनुसृत्य। परन्तु ग्रन्थपरिशीलने कृते प्रतिभायात् यट्टुप्टीकाशाबरभाष्याशयप्रकाशनपरमिदं ग्रन्थरत्नम् इति। तथाहि भट्टपादाः श्लोक-तन्त्रवार्त्तिकयोः प्रत्यधिकरणं भाष्याशयं प्रकाशयाञ्चक्रिरे। तत्रैवोपरितनाध्यायविषयाः स्फुटीकृता इति मन्वानाः चतुर्थाध्यायमारभ्य विशिष्टान्यधिकरणानि विवादास्पदान्येव व्याचख्युः। परं पार्थसारथिमिश्रः प्रत्यधिकरणं भाष्याशयं प्रकाशयामास। सर्वतन्त्रस्वतन्त्रयशात्मतनूजं पार्थसारथिमिश्रं पूर्वोत्तरमीमांसापारदृश्वानः श्रीमदप्पयदीक्षितखण्डदेव-कमलाकरभट्ट-श्रीमधुसूदनसरस्वती-ब्रह्मानन्दसरस्वतप्रभृतयः स्वोक्तार्थे प्रमाणयन्ति।

न केवलं भट्टमतावलम्बिनां शास्त्रकाराणां प्रमाणमात्रं श्रीमान् पार्थसारथिः, परं गुरुमतानुयायिनामपि। गुरुमतपक्षपाती""न्यायरत्नमाला व्याख्याने पार्थसारथिमिश्रस्य वैदुष्यं सबहुमानमुट्टङ्कयति स्म—

अविमलविभक्तमार्गयोर्मतयोर्भट्टगुरूपदिष्टयोः ।

उभयोरपि पार्थसारथिः प्रथितः प्राथमिकेऽपि ।। इति ।

अत एव वाराणसेया महामहोपाध्यायाः श्रीगोपीनाथकविराजा महान्तं क्लेशं स्वीकृत्यास्य ग्रन्थरत्नस्य तन्त्ररत्नस्य सम्पादनकर्मणो बीजावामकार्षुः, परमभागधेयं ममैतादृशस्य ग्रन्थस्य सम्पादनकर्मणि विश्वविद्यालयाधिकारिणो मां न्ययूयुजन्निति । तदस्य प्रकाशनं बहुभ्यो वर्षेभ्यः पूर्वमारब्धमपि नैकविधैः प्रत्यूहैरवरुद्धं सत्संप्रति तत्ससम्पन्नमिति प्रसीदामः । अद्यतनकुलपतिमहोदयाः श्रीबद्रीनाथशुक्लमहाभागा एतादृशेषु संस्कृतविश्वविद्यालयोन्नत्यौपयिकेषु कार्येषु विशेषेण दत्तचित्तास्सन्तीति परमां मुदमवाप्नुमः । पठनपाठनं तु साधारणम् । नेदं विश्वविद्यालगौरवसमेधकम्, किन्तु कुत्रचित्कोणे निलीनानां मातृकारूपेण संस्थितानां ग्रन्थरत्नानामनुसन्धानात्मिकया दृष्ट्या सम्पादनं तत्प्रकाशनमेव विश्वविद्यालयस्य यशःप्रदम् । तदेतादृशे कार्ये विहितमतीन् कुलपतीन् शतशो धन्यवादैः पूरयामः । किञ्च प्रकाशपथमानीतानामपि सम्प्रत्यनुपलम्भदोषेण दूषितानां ग्रन्थानां पुनः प्रकाशनाय दत्तमानसाः कुलपतयो भवेयुरिति विश्वसिमः ।

फाल्गुनशुक्लपूर्णिमा
वै० सं० २०३५
(१३-३-१९७९)
वाराणसी

इति विदुषामाश्रवः
पट्टाभिरामशास्त्री
साहित्यमीमांसाविभागाध्यक्षचरः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# अधिकरण-सूची


अधिकरणनामानि — पृ०सं०

**दशमाध्यायस्य प्रथमः पादः**

१. अर्थलोपाद्बाधाधिकरणम् — १-११
२. विकृतिष्वन्वारम्भणीयाया बाधाधिकरणम् — ११-१२
३. अनुमत्यादिविकृतिष्वन्वारम्भणीयाया बाधाधिकरणम् — १३-१४
४. अन्वारम्भणीयायामन्वारम्भणीयाबाधाधिकरणम् — १४-१५
५. खलेवाल्यां यूपाहुतेर्बाधाधिकरणम् — १६
६. खलेवाल्यां स्थाण्वाहुतेर्बाधाधिकरणम् — १६-१७
७. स्वाहाकाराधिकरणम् — १८-१९
८. आग्नेयाज्यभागस्यारादुपकारकत्वाधिकरणम् — २०-२१
९. पशुपुरोडाशस्य देवतासंस्कारकत्वाधिकरणम् — २१-२५
१०. चरोः प्राकृतहविर्बाधाधिकरणम् — २५-२६
११. चरोः स्थाल्यां पाकाधिकरणम् — २६-२७

**द्वितीयः पादः**

१. कृष्णलचरौ पाकानुष्ठानाधि० — २७-२८
२. कृष्णलेष्वर्थलोपादुपस्तरणादि बाधाधि० — २९
३. कृष्णलचरौ भक्षाबाधाधिकरणम् — २९-३०
४. कृष्णलचरौ सहत्वविधानाधि० — ३०-३१
५. कृष्णलाचरौ परिहरणीयस्य ब्रह्मसम्बन्धाधिकरणम् — ३२
६. कृष्णलचरौ यथाकालभक्षणाधि० — ३३
७. कृष्णलचरौ व्यपदेशबाधाधि० — ३३-३४

अधिकरणनामानि | पृ०सं०


८. स्वयं कर्तृककर्मसु दक्षिणादानबाधाधि० ३४
९. सत्रे शेषभक्षबाधाभावाधि० ३५
१०. सत्रे ऋत्विग्वरणबाधाधि० ३५
११. सत्रे परिक्रयबाधाधि० ३५
१२. उदवसनीये दक्षिणादानादीनां बाधाभावाधि० ३५-३६
१३. पृष्ठशमनीयस्यैकैकश्येनानुष्ठानाधि० ३७-३९
१४. पृष्ठशमनीये ऋत्विग्वरणबाधाभावाधि० ३९
१५. सारस्वतेष्टौ दानस्यापूर्वार्थताधि० ३९-४१
१६. द्रेष्याय दक्षिणादानकथनस्यापूर्वार्थताधि० ४१-४२
१७. अस्थियज्ञे जीवदधिकाराधि० ४२-४३
१८. अस्थियागे इष्टिजपादीनां बाधाधि० ४३
१९. अस्थियज्ञे शुक्रान्वारम्भणादीनां बाधाभावाधि० ४३
२०. अस्थियज्ञे पुरुषार्थानां बाधाधि० ४३-४४
२१. अस्थियज्ञे सूक्तवाकाशासनबाधाधि० ४४
२२. अस्थियज्ञे ऋत्विक्कामानां निवृत्त्यधि० ४४
२३. सर्वस्वारे मरणोत्तरभाविनामङ्गानां बाधाभावाधि० ४५
२४. सर्वस्वारेऽस्थियज्ञवदनुष्ठानाधि० ४५
२५. सर्वस्वारे आयुराशंसनस्य बाधाभावाधि० ४५-४६
२६. सत्रे ऋतुयाज्यावरणहिरण्यदानयोर्बाधाभावाधि० ४६
२७. पवमानेष्टौ निर्वापबाधाभावाधि० ४६-४८
२८. सप्तदशशरावचरौ मुष्टिबाधाधि० ४८
२९. द्यावापृथिव्यादावुपदिष्टगवाजबाधाधि० ४८-४९
३०. खलेवालीचित्रेष्टितण्डुलेषु खादिरत्रैहत्वानियमाधि० ४९-५१
३१. खलेवाल्यां तक्षणादीनां बाधाधि० ५१-५२
३२. खलेवाल्यां भूमिसमीकरणादीनां बाधाधि० ५२-५३

अधिकरणनामानि — पृ०सं०

१३. महापितृयज्ञे धानास्ववघातबाधाभावाधि० ५३-५४
१४. तत्रैव वार्त्तिकमतेन श्रपणप्रतिप्रसवाधि० ५४-५६

## तृतीयः पादः

१. विकृतिषूपदिष्टैरेकादशप्रयाजादिभिरितरेषां प्राकृतगुणानामतिदेशाधि० ५६-५८
२. हिरण्यगर्भाधिकरणम् ५८-६०
३. सौमिकचातुर्मास्येषु वाजिनासादनादीनां कर्मान्तराभावाधि० ६०-६१
४. चयनश्रुतानां दीक्षाहुतिमन्त्राणां प्राकृतमन्त्रैस्समुच्चयाधि० ६१-६२
५. पुनराधानदक्षिणयाधानदक्षिणाबाधाधि० ६२-६३
६. आग्रयणदक्षिणया प्राकृतदक्षिणाबाधाधि० ६३
७. वासोवत्सयोरन्वाहार्यधर्मकताधि० ६३
८. वत्से पाकबाधाधि० ६३
९. वाससि पाकलोपाधि० ६४
१०. वासोवत्सयोरभिघारणबाधाधि० ६४
११. ज्यौतिष्टोमिकदक्षिणासु गवां द्वादशशतसंख्याधि० ६४-७१
१२. ज्योतिष्टोमे गोदक्षिणाया विभज्यदातव्याधि० ७१-७२
१३. समाख्यानुरूपेण दक्षिणाविभागाधि० ७२
१४. भूसंज्ञकक्रतावुपदिष्ट दक्षिणया प्राकृतदक्षिणाबाधाधि० ७२-७६
१५. नैमित्तिकगोदक्षिणासंख्यया प्राकृतगोसंख्याबाधाधि० ७६
१६. त्रिवत्ससोमक्रयणेन प्राकृतसोमक्रयणानां बाधाधि० ७७-७८
१७. प्राकाशाधिकरणम् ७८-८२
१८. उपहव्याश्वदक्षिणया कृत्स्नक्रतुदाक्षिण्य निवृत्त्याधि० ८२-८३
१९. सोमचमसाधिकरणम् ८३-८४
२०. यजुर्युक्ताधिकरणम् ८४

अधिकरणनामानि पृ०सं०

## चतुर्थः पादः


. नक्षत्रेष्टौ उपहोमनारिष्ठानां समुच्चयाधि० ८५-९१

२. बृहस्पतिसवादिषु वैकृतप्राकृतग्रहाणां समुच्चयाधि० ९१-९८

३. वाजपेये क्रतुपशूनां समुच्चयाधि० ९८

४. आमनहोमानूयाजानां समुच्चयाधिकरणम् ९८

५. महाव्रते पत्नीकर्तृकोपगानस्य भिन्नकर्तृकत्वाधि० ९९

६. गौग्गुलवाधिकरणम् १००

७. महाव्रते तार्प्यदर्भमयाभ्यां प्राकृतवाससमुच्चयाधि० १००

८. महाव्रते श्लोकादिसामभिराग्निष्टोमस्तोत्राणां समुच्चयाधि० १००

अथवा

वैकृतकौत्सादिभिः प्राकृतसाम्नां वाधाधि० १०१

९. वैकृतसामभिः प्राकृतानां तत्समसंख्याकसाम्नां बाधाधि० १०१

१०. विवृद्धन्यूनस्तोमकेषु सामावापोद्वापाधि० १०१-१०२

११. विवृद्धस्तोमकेषूत्तरयोः पवमानयोस्साम्नामावापोद्वापाधि० १०२-१०३

१२. विधिशब्दाधिकरणम् १०४-१०८

१३. वैकृतेष्वावाहनादिषु वैधपदेन देवताप्रकाशनाधि० १०८-१०९

१४. सगुणदेवतानामावाहनादिषु सगुणदेवताशब्दोच्चारणाधि० १०९-११०

१५. आज्यभागयोर्निर्गुणशब्दोच्चारणाधि० ११०

१६. विधिगतोस्त्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवताभिधानाधि० ११०-१११

१७. अवभृथे सगुणयोरग्नीषोमयोर्निगदेषूच्चारणाधि० १११

१८. पशुपुरोडाशे स्विष्टकृद्देवतायाः निर्गुणानुकीर्तनाधि० ११२

१९. अनूयाजस्विष्टकृद्यागस्यावापिक स्विष्टकृत्संस्कारार्थत्वाधि० ११२

२०. याज्यपुरोनुवाक्ययोस्संस्कृतित्वाधि० ११३

| अधिकरणनामानि | पृ०सं० |
|---|---|
| २१. मनोताधिकरणम् | ११३-११५ |
| २२. पृष्ठकण्वरथन्तरस्य स्वयोनौ गेयाधि० | ११५-११७ |
| २३. कण्वरथन्तरे स्वयोन्युत्तरयोरबाधाधि० | ११७ |
| २४. विकृतिषु स्तुतशस्त्रयोरविकाराधि० | ११७ |
| २५. पृथदाज्यकानुयाजेषु आज्यपशब्दस्य बाधाभावाधि० | ११७-११८ |

पञ्चमः पादः

| | |
|---|---|
| १. विकृतिष्वेकदेशग्रहणे पाठक्रमेण ग्रहणाधि० | ११८ |
| २. एकत्रिकाधिकरणम् | ११८-१२० |
| ३. धूर्गानाधिकरणम् | १२० |
| ४. द्विरात्रादिषु दाशरात्रिकाङ्गानुष्ठानाधि० | १२०-१२१ |
| ५. चयने ओषधिवपनार्थानां मन्त्राणामनियमोपादानाधि० | १२१ |
| ६. विवृद्धस्तोमकेषु सामावापाधि० | १२२-१२३ |
| ७. बहिष्पवमाने ऋगागमाधि० | १२३ |
| ८. सामिधेनीष्वागमेन संख्यापूरणाधि० | १२३-१२४ |
| ९. षोडशिनः प्राकृतत्वाधि० | १२४-१२६ |
| १०. आग्रयणात्षोडशिग्रहणाधि० | १२६-१२७ |
| ११. तृतीयसवने षोडशिग्रहणाधि० | १२७-१२८ |
| १२. षोडशिनः सस्तुतशस्त्रत्वाधि० | १२८-१३० |
| १३. अङ्गिरसां द्विरात्रे षोडशिनियमाधि० | १३०-१३३ |
| १४. नानाहीनाधिकरणम् | १३३ |
| १५. जगत्सामाधिकरणम् | १३३-१३५ |
| १६. संसवाधिकरणम् | १३५ |
| १७. ज्योतिष्टोमे ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधि० | १३५-१३६ |
| १८. ऐन्द्रवायवस्य कामसंयुक्तेष्वप्यग्रप्रतिकर्षाधि० | १३६ |

| अधिकरणनामानि | पृ०सं० |
|---|---|
| १९. शुक्रादीनां ग्रहाणां प्रतिकर्षाधि० | १३५-१३७ |
| २०. शुक्रादीनामुपांश्वन्तर्यामतः ऊर्ध्वं प्रतिकर्षाधि० | १३७ |
| २१. शुक्रादिग्रहसादनप्रतिकर्षाधि० | १३७-१३८ |
| २२. शुक्रादीनां प्रदानप्रतिकर्षाभावाधि० | १३८ |
| २३. त्र्यनीकाधिकरणम् | १३८-१३९ |
| २४. व्यूढद्वादशाहस्य समूढविकारत्वाधि० | १३९ |
| २५. संवत्सरसत्रे त्र्यनीकाविवृध्याधि० | १३९-१५१ |
| २६. व्यूढात्मकद्वादशाहे मन्त्राणामेव छन्दोव्यतिक्रमाधि० | १५१ |

**षष्ठः पादः**

| | |
|---|---|
| १. साम्नां तृचे गानाधिकरणम् | १५२ |
| २. स्वर्दृगधिकरणम् | १५२-१५३ |
| ३. गावामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोः प्रत्यहमेकैकस्यानुष्ठानाधि० | १५३-१५५ |
| ४. प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम् | १५५-१५७ |
| ५. सर्वपृष्ठाधिकरणम् | १५७ |
| ६. वैरूपसामाधिकरणम् | १५७-१५८ |
| ७. अग्निष्टुति त्रिवृत्त्वस्य स्तोत्रान्तस्तोममात्रबाधकत्वाधि० | १५८ |
| ८. उभयसामाधिकरणम् | १५८-१५९ |
| ९. मध्वशनाधिकरणम् | १५९ |
| १०. षडहावृत्तौ मध्वशनादेः सकृतनुष्ठानाधि० | १५९-१६० |
| ११. गवामयने मध्वशनादेरावृत्त्यधि० | १६० |
| १२. द्वादशाहे सत्रे सत्रिणां मधुभक्षणाधि० | १६१ |
| १३. मानससंग्रहस्य दशमाहङ्गत्वाधि० | १६१ |
| १४. सत्रस्य बहुकर्तृकत्वाधि० | १६१-१६२ |
| १५. सत्रे यजमानानामेवर्त्विक्त्वाधि० | १६२ |

अधिकरणनामानि पृ०सं०

१६. सत्राहीनलक्षणाधि० १६३

१७. पौण्डरीकेऽयुताश्वसहस्रयोस्सकृद्दानाधि० १६३

१८. पौंडरीके प्रत्यहं विभज्य दक्षिणादानाधि० १६४

१९. मनुलिङ्गानामृचां दाशतयीभ्यस्समानयनाधि० १६४

२०. ज्योतिष्टोमे वाससि सोममानाद्यनुष्ठानाधि० १६४

२१. अहर्गणे वासोन्तरोत्पादनाधि० १६५

२२. अहर्गणे सोमोपाहरणकालेवासोन्तरोत्पादनाधि० १६५

## सप्तमः पादः

१. पशौ हृदयाद्यङ्गानामेव हविष्ट्वाधि० १६६-१६८

२. हृदयादीतरावयवानां हविष्ट्वपरिसंख्याधि० १६८

३. त्र्यङ्गाधिकरणम् १६९-१७१

४. अध्यूघ्न्या होतुः प्राकृतेडाभक्षनिवृत्त्यधि० १७१

५. वनिष्ठोर्भक्षविकाराधि० १७१

६. पशौ मैत्रावरुणस्यापि शेषा भक्षप्रतिपादनाधि० १७२

७. मैत्रावरुणस्यैकभागत्वाधि० १७२

८. प्रतिप्रस्थातुर्भक्षाभावाधि० १७२-१७३

९. आज्यभागाधिकरणम् १७३-१७८

१०. गृहमेधीये स्विष्टकृदनुष्ठानाधि० १७८

११. आज्यभागाधिकरणप्रयोजनप्रतिपादनाधि० १७९

१२. प्रायणीयातिथ्ययोः शंय्विडान्तताधि० १७९

१३. तत्रैव पूर्वशंय्विडान्तत्वाधि० १७९-१८०

१४. उपसदधिकरणम् १८१

१५. अवभृथस्यापूर्वत्वाधि० १८१

१६. वाजपेये वैकल्पिकप्राकृताङ्गनां नियमविधित्वाधि० १८२

१७. विकृत्युपदिष्टद्रव्यदेवताभिः प्राकृतद्रव्यदेवताबाधाधि० १८२-१८३

अधिकरणनामानि | पृ०सं०

१८. वैकृतौदुम्बरत्वेन प्राकृतखादिरत्वबाधाधि० १८४
१६. सोमारौद्रचरौ व्रीहिभिर्यवानां बाधाधि० १८४
२०. पशौ हृदयाद्यङ्गानामपि पञ्चावदानाधि० १८४-१८५

## अष्टमः पादः

१. अनूयाजमहापितृयज्ञयोर्येयजामहादिनिवृत्त्यधि० १८६-१६१
२. पशावाज्यभागप्रतिषेधस्यार्थवादत्वाधि० १६१-१६२
३. अतिरात्रे षोडशिग्रहप्रतिषेधाधि० १६२
४. जर्तिलयवाग्वधिकरणम् १६३-१६४
५. त्र्यम्बकहोमाधिकरणम् १६४
६. उपवादाधिकरणम् १६४-१६५
७. दीक्षितदानहोमादीनां तत्कर्तृकत्वपर्युदासाधि० १६५-१६६
८. विशेषेण सामान्यबाधि० १६६-२००
६. उपसंहाराधिकरणम् २००
१०. अनुपसंहाराधिकरणम् २००-२०१
११. अग्न्यतिग्राह्याधिकरणम् २०२
१२. चतुरवत्ताधिकरणम् २०३-२०४
१३. उपांशुयाजे चतुरवत्तसम्पत्त्यधि० २०५
१४. असोमयाजिनः पुरोडाशद्वयानुवादत्वाधि० २०५-२०६
१५. उपांशुयाजे ध्रौवाज्यविधानाधि० २०६-२०७
१६. उपांशुयाजे देवतानियमाधि० २०७
१७. उपांशुयाजे विष्णवादीनां पौर्णमासीकालिकत्वप्रतिपादनाधि० २०७-२०८

## एकादशाध्यायस्य प्रथमः पादः

१. दर्शपूर्णमासादिष्वाग्नेयादीनां समुच्चितानामेकफलफत्वाधि० २११-२१७
२. अङ्गानां प्रधानोपकाररूपैककर्यार्थत्वाधिकरणम् २१७-२२७

अधिकरणनामानि पृ०सं०

३. काम्यकर्मणां कामनानुरोधेनाभ्यासाधिकरणम् २२७-२२८
४. अवहननादिदृष्टार्थानां फलोत्पत्त्यभ्यासाधिकरणम् २२८-२२९
५. प्रयाजाद्यङ्गानां फलभूयस्त्वार्थमसकृदननुष्ठानाधिकरणम् २२९-२३१
६. कपिञ्जलाधिकरणम् २३१-२३२
७. उत्तरागोदोहाधिकरणम् २३२
८. दर्शपूर्णमासयोः प्रयाजादीनां तन्त्रताधिकरणम् २३२-२३३
९. काम्यपशुषु कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधि० २३३-२३४

## द्वितीयः पादः

१. अङ्गप्रधानानामेकदेशकालकर्तृत्वाधिकरणम् २३४-२४१
२. दर्शपूर्णमासत्रिकराजसूयादिष्वङ्गानामतन्त्रत्वाधि० २४१
३. अध्वरकल्पेष्ट्याधि० २४१-२४२
४. एकदेवतापशुकरणे वसाहोमस्यतन्त्राधिकरणम् २४२
५. एकादशिन्यां यूपाहुतेस्तन्त्रताधिकरणम् २४२-२४३
६. अवभृतस्याप्सु साङ्गानुष्ठानाधिकरणम् २४३
७. वरुणप्रघासेषु दाक्षिणविहारे पृथगङ्गानुष्ठानाधिकरणम् २४३-२४४
८. वरुणप्रघासेषु होत्रादीनां तन्त्रत्वाधिकरणम् २४४
९. वरुणप्रघासेषु पत्नीसंयाजानामतन्त्रताधिकरणम् २४४-२४५
१०. ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षमात्राधिकरणम् २४५-२४७
११. पञ्चशारदीयाधिकरणम् २४८-२५१
१२. अभिषेचनीयदशपेययोर्भिन्नताधिकरणम् २५१-२५२
१३. वरुणप्रघासेष्ववभृथस्यकर्मान्तरत्वबोधनाधि० २५२-२५३
१४. प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् २५३-२५४

## तृतीयः पादः

१. अङ्गानां मुख्यकालान्यकालकर्तव्यत्वाधिकरणम् २५४

**अधिकरणनामानि** **पृ०सं०**

२. आधानस्य तन्त्रताधि० २५४-२५५
३. अग्निष्टोमे पशूनां यूपतन्त्रताधिकरणम् २५५-२५६
४. यूपसंस्काराणां तन्त्रताधि० २५६-२५७
५. स्वरुतन्त्रताधिकरणम् २५७
६. कृष्णविषाणाप्रासनाधि० २५७
७. नानाबीजेष्वन्त्यबीजेवाग्विसर्गनियमाधि० २५८
८. पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले वाग्विसर्गाधि० २५८
९. अग्नियोगविमोकाधि० २५८-२६२
१०. अहर्गणे सुब्रह्मण्याह्वानतन्त्रताधि० २६२
११. द्वादशाहे तस्यातन्त्रताधि० २६२-२६३
१२. देशकर्तृणामनियमाधि० २६३
१३. यज्ञपात्रधारणाधि० २६३-२६५
१४. वाजपेये प्राजापत्यप्रचाराधि० २६६-२६८
१५. वाजपेये सूक्तवाके सोमदेवतासंकीर्तनाधि० २६९-२७०

## चतुर्थः पादः

१. राजसूये पृथग्दक्षिणकानामिष्टीनामतन्त्रताधि० २७०
२. राजसूये ऋत्विङ् नियमाधि० २७१-२७३
३. अवेष्टेर्भिन्नतन्त्रताधि० २७४-२७५
४. काम्यपवमानहविषां भिन्नतन्त्रताधि० २७५-२७६
५. द्वादशाहे दीक्षोपसदां स्वस्थानविवृध्यधि० २७६-२८०
६. द्वादशाहे सुत्याकालिकाङ्गानामतन्त्रताधि० २८०-२८३
७. पशुगणे कुम्भ्यादीनामतन्त्रताधि० २८३
८. भिन्नदेवताकसमानजातीयपशुगणे कुम्भ्यादीनां तन्त्रताधि० २८४
९. विजातीयपशुगणे तेषामतन्त्रताधि० २८४

अधिकरणनामानि पृ०सं०

१०. अश्वप्रतिग्रहेष्टौ कपालानामतन्त्रताधि० २८४
११. दर्शपूर्णमासयोरवघातमन्त्रस्य सकृदनुष्ठानाधि० २८४
१२. नानाबीजेष्ववघातमन्त्रस्यावृत्त्यधि० २८५
१३. तत्रैव निर्वापादिष्वसकृत्प्रयोगाधि० २८५
१४. वेदिप्रोक्षणमन्त्रस्यासकृत्प्रयोगाधि० २८५२-८६
१५. कण्डूयनमन्त्रस्य सकृत्प्रयोगाधि० २८६
१६. स्वप्नादिमन्त्राणामनावृत्त्यधि० २८६-२८७
१७. दीक्षितप्रयाणमन्त्रस्य सकृत्प्रयोगाधि० २८७
१८. उपरवखननादिमन्त्राणामावृत्त्यधि० २८७-२८८

## द्वादशाध्यायस्य प्रथमः पादः

१. प्रसङ्गास्यारब्धव्यव्यत्वाधि० २८९-२९७
२. पशुपुरोडाशे आज्यभागादिकर्तव्यत्वाधिकरणम् २९७-२९९
३. सोमे महावेदेः प्रसङ्गोपकारकत्वाधिकरणम् ३००
४. सोमे ऐष्टिककार्याणामैष्टिकपात्रैरनुष्ठानाधि० ३००
५. शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् ३००-३०१
६. कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजयिते श्रपणाधि० ३०१
७. सोमे ऐष्टिकनिर्वापायानोत्तरसम्पादनाधिकरणत् ३०१
८. प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् ३०२
९. वरुणप्रघासेषु विहारभेदेन मन्त्रभेदाधिकरणम् ३०२
१०. सोमाङ्गभूतेष्टिष्वन्वाधानाभावाधिकरणम् ३०२
११. दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् ३०२-३०३
१२. ऐष्टिकेऽन्यन्वाधानाननुष्ठाधिकरणम् ३०३-३०५
१३. सौमिकेष्टिषु पत्नीसन्नहनाननुष्ठानाधिकरणम् ३०५
१४. सौमिकेष्टिष्वारण्याशनाभावाधिकरणम् ३०५

| अधिकरणनामानि | पृ०सं० |
|---|---|
| १५. सौमिकेष्टिषु शेषभक्षाननुष्ठानाधिकरणम् | ३०५ |
| १६. सौमिकेष्टिषु प्राकृतदक्षिणाभावाधिकरणम् | ३०६ |
| १७. सौमिकेष्टिषु शेषभक्षस्य कर्तव्यत्वाधिकरणम् | ३०६ |
| १८. सौमिकेष्ट्यादिषु होतृवरणानुष्ठानाधिकरणम् | ३०६ |
| १९. आतिथ्याबर्हिःसंस्काराणां प्रसङ्गोपकारकत्वाधिकरणम् | ३०७ |
| २०. अग्नीषोमीयबर्हिःस्तरणमन्त्रावृत्त्यधिकरणम् | ३०७-३०८ |
| २१. अग्नीषोमीये संनहनहरणमन्त्रयोरप्रयोगाधिकरणम् | ३०८ |


## द्वितीयः पादः


| | |
|---|---|
| १. गार्हपत्यादेः श्रौतकर्ममात्रार्थताधिकरणम् | ३०८ |
| २. सवनीये पशुपुरोडाशकर्तव्यत्वाधिकरणम् | ३०९ |
| ३. सवनीये पशुपुरोडाशे हविष्कृदाह्वानाधिकरणम् | ३१० |
| ४. तार्तीयसवनिकसवनीयपुरोडाशेषु हविष्कृदाह्वानाभावाधि० | ३१० |
| ५. निशियज्ञाधिकरणम् | ३१० |
| ६. विकृतिष्वारम्भणीयानुष्ठानाधिकरणम् | ३११ |
| ७. भूयोऽनुग्रहाधिकरणम् | ३१२-३१४ |
| ८. समसंख्यानां धर्मविरोधे मुख्यधर्मस्यानुष्ठानाधि० | ३१४ |
| ९. अङ्गगुणविरोधाधि० | ३१४-३१५ |
| १०. परिधौ धर्मद्वयानुष्ठानाधि० | ३१५ |
| ११. परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् | ३१५ |
| १२. सवनीयपशोरेव तन्त्रिताधिकरणम् | ३१५-३१८ |
| १३. प्रकृतिविकृत्योस्समानतन्त्रत्वे विकृतितन्त्रानुष्ठानाधिकरणम् | ३१८-३१९ |
| १४. प्रसूनबर्हिषामेव ग्रहणाधिकरणम् | ३१९ |
| १५. आग्रयणे द्यावापृथिव्यादीनां तन्त्रित्वाधिकरणम् | ३१९-३२० |


## तृतीयः पादः


| | |
|---|---|
| १. वत्सत्वगहतवाससोस्समुच्चयाधिकरणम् | ३२० |

अधिकरणनामानि पृ०सं०

२. अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गोपकारकत्वाधि० ३२१
३. ऊर्ध्वत्वादिगुणानां समुच्चयाधिकरणम् ३२१
४. एकार्थानां विकल्पाधि० ३२१
५. दोषनिर्घातार्थप्रायश्चित्तानां विकल्पाधि० ३२२-३२३
६. प्रायश्चित्तेषु समुच्चयाधि० ३२३
७. कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम् ३२३
८. मन्त्राम्नानस्यैव कर्मकाले नियमनाधिकरणम् ३२३-३२४
९. ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरवत्वाधिकरणम् ३२४-३२५
१०. करणमन्त्रान्ते पदार्थानुष्ठानाधिकरणम् ३२५
११. वसोर्धाराकर्मसु मन्त्रकर्मादिसन्निपातित्वाधिकरणम् ३२५
१२. आधारे मन्त्रान्तेन कर्मादिसन्निपाताधिकरणम् ३२५
१३. एककार्याणां मन्त्राणां विकल्पाधिकरणम् ३२६
१४. संख्याविहितमन्त्राणां समुच्चयाधिकरणम् ३२६
१५. ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ३२६
१६. हौत्राणां मन्त्राणां समुच्चयाधिकरणम् ३२७

## चतुर्थः पादः

१. जपादीनां समुच्चयाधि० ३२७-३२८
२. ऐन्द्राबार्हस्पत्ये याज्यानुवाक्यायुगलद्वयस्य विकल्पाधि० ३२८
३. सोमक्रयणद्रव्याणां समुच्चयाधि० ३२८
४. उपयजनाधिकरणम् ३२८
५. अग्न्याधेये दक्षिणानां विकल्पाधिकरणम् ३२९
६. पशुगणे जाघनीनां विकल्पाधिकरणम् ३२९-३३२
७. काम्येन नित्यस्य बाधाधि० ३३२-३३४
८. काम्यस्याग्नेराहवनीयत्वाभावाधि० ३३५

**अधिकरणनामानि** **पृ०सं०**


९. काम्याग्नेराधानिकसंस्कारलोपाधिकरणम् ... ३३५

१०. उख्याग्नेर्नित्यधारणाभावाधिकरणम् ... ३३५-३३६

११. सत्रे शुकान्वारम्भणादीनामेककर्तृकत्वाधिकरणम् ... ३३६

१२. अहीने शुकान्वारम्भणादीनामनियतयजमानकर्तृकत्वाधिकरणम् ... ३३६

१३. सत्रे शुकान्वारम्भणादौ गृहपतेरेवकर्तृत्वाधिकरणम् ... ३३६

१४. सत्रे सर्वेषां यजमानानां संस्कृत्याधिकरणम् ... ३३६-३३७

१५. ब्राह्मणस्यार्त्विज्याधि० ... ३३७-३३८


---

॥ श्रीः ॥

# पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## दशमोऽध्यायः

[ १—विकृतिष्वर्थलोपात्प्राकृतानां बाधाधिकरणम् ]

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ पू० ॥**

लक्षणसम्बन्धमाह—सप्तमेनाध्यायेन अतिदेशसत्ता व्याख्याता। दशमेनेदानीं किमतिदिश्यत इति व्याख्यायते। न ह्यसिद्धेऽतिदेशे तद्विशेषचिन्तावसरः। तेनातिदेशहेतुकोऽयं[1] विचारस्ततः[2] परं क्रियते। अष्टमस्तु साप्तमिकस्यातिदेशस्य पर्यवसानमात्रपर इति[3] सप्तमसङ्कीर्तनम्। एवञ्च वदता अवसरलक्षण एवास्योहेन सम्बन्धः। अतिदेशेन तु हेतुहेतुमद्भाव इति दर्शितम्। तथाहि नोहबाधयोर्हेतुहेतुमद्भावस्समस्ति। त्रेधा हि बाधः प्रत्याम्नानप्रतिषेधार्थलोपैः। तत्र यः "शरमयं बर्हिः" इति प्रत्याम्नानेन कुशानां बाधः, यश्च "नार्षेयं वृणीते" इति प्रतिषेधादार्षेयवरणस्य बाधः, तत्र तावन्नास्त्यूहस्य हेतुत्वमित्यसन्दिग्धम्। योऽप्ययं कृष्णलेष्ववघातस्यार्थलोपाद्बाधः सोऽपि नैवोहमपेक्षते। प्रत्युत परिपन्थी तस्योहः। उत्पत्त्यवगतरूपान्यथाभावो ह्यूहः। तद्यदि कृष्णलसम्बन्धेनावघातस्य वैकृतस्य[4] प्रयोगः स्यात्कथं

---

१. हेतुको विचारः क.

२. ततः क्रियते. क.

३. मात्रार्थपरः ख.

४. विकृतस्येति मातृकापाठः

स[१] बाध्येत। बाधे वा कथमस्य तत्सम्बन्धितयान्यथाभूतस्य प्रयोगः स्यात्। विरुद्धं खल्वेतत् नानुष्ठीयतेऽवघातोऽनुष्ठीयते चेति। प्राप्तस्यावघातस्यार्थ-लोपात् बाधं वक्तु कृष्णलेषु प्राप्तिमात्रमपेक्षितव्यम्। प्राप्तिश्च विशेषाति-देशादपूर्वप्रयुक्तत्वाच्च धर्माणां सिद्धेति नास्त्यूहापेक्षा। तेनैकहेतुका-वूहबाधौ। द्वयोरपि विशेषातिदेशोऽपूर्वप्रयुक्तता च हेतुः, न त्वन्ययोरिवान्यो-न्यापेक्षा। तेन सप्तमेऽतिदेश उक्तः। तस्यैव विशेषोऽष्टमे चिन्ततः। ततोऽ-तिदेशतः प्राप्यमाणाः पदार्थाः किं तथैव विकृतौ भवन्ति उत किञ्चिद्विकारं भजन्त इत्येवं प्राप्यमाणपदार्थगतविशेषचिन्तारूपत्वेन सङ्गतत्वादूहश्चिन्तितः। इदानीं सप्तमसिद्धस्यैवातिदेशस्य[२] विषयाश्चिन्त्यन्ते–किं[३] विकृतावतिदिश्यते? किं वा न? इति, किं लुप्तार्थादिकमतिदिश्यते! किं वा न? इति। तथा नारिष्टहोमानामुपहोमैर्बाधादनतिदेशः! किं वातिदेशः? इति। तथा किम-तिदिश्यते—किं शास्त्रपदार्थकार्याणां सर्वेषामतिदेशः? अथवा[४] कार्याणामेव? इत्येवमध्यायार्थविषयतयाऽद्याधिकरणविषयतया च तन्त्रेण व्याख्यानम्। ननु सिद्धान्तेऽपि लुप्तार्थमप्यतिदिश्यत एव, प्राप्तबाधाभ्युपगमात्। यथाह भाष्य-कारः—'निश्चितं विज्ञानं कारणान्तरेण मिथ्या' इति। अतिदेशे ह्यसत्यप्राप्त-बाधः स्यात्। तस्मादतिदिष्टस्याङ्गभूतस्यैव सतः कृष्णलेष्ववघातस्य द्वारा-भावादननुष्ठानं बाधो न पुनरनतिदेशः। तस्मात्किमतिदिश्यत इत्ययुक्त-मेतदिति। अहो भाष्यज्ञः किल देवानां प्रियः! सिद्धान्ते हि भाष्यकारेणोक्तम्-'नास्ति लुप्तार्थस्य[५] चोदकं वचनम्' इति, तथा प्राकृतान्यङ्गानि यस्मै प्रयोज-नाय प्रकृतौ भवन्ति नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति। तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति' इति च। कथं तर्हि इदं

---

१. बाध्यत इति मातृकापाठः

२. विषयश्चिन्त्यते क.

३. तस्यां विकृतौ क., ख.

४. कार्यमेव. ख.

५. देशकमिति. मु. पा.

निश्चितं मिथ्येति ? एवमेवैतत् । नन्वसत्यतिदेशे कथं निश्चितवाचोयुक्तिः ? सति वातिदेशे कथं मिथ्यात्ववाचोयुक्तिः ? न हि शास्त्रीयस्य निश्चयस्य मिथ्याभावः सम्भवति । ननु कारणान्तरेण मिथ्येति कल्प्यत इत्युक्तम्, प्रयोजनाभावादित्यर्थः । नैवम्, शास्त्रबलादेव प्रयोजनकल्पनात् पूर्वपक्षवत् । कार्यद्वारेण प्राप्तानां न द्वारान्तरकल्पनं सम्भवतीति चेत्—नैतत् ; कार्यशब्देन किं परमोपकार उच्यते ? उतावघातादेर्यदवान्तरकार्यं तुषवियोगादि ? किञ्चातः ? यदि तावदवान्तरकार्यम्, ततः कृष्णलेषु तस्यासम्भवात्कुतस्तद्द्वारेणावघातस्य प्राप्तिः ? अथ परमोपकारः प्रथममतिदिश्यते पश्चात्तु तज्जनकाकाङ्क्षायां पदार्थातिदेश इत्युच्यते, कस्तदा भवति शास्त्रार्थः ? प्रकृतोपकारयुक्तया विकृत्याऽपूर्वं कुर्यात्तस्य चाङ्गं प्राकृताः पदार्था इति । यद्येवं ततो यद्यपि प्रकृतौ तेषामुपकारजनने क्लृप्तं द्वारं तथापि कृष्णलेषु तेन द्वारेण तज्जनकत्वायोगाच्छास्त्रावगततादर्थ्यबलेन द्वारान्तरमवश्यमाश्रयणीयम् ।

क्लृप्तेनैवोपपत्तौ हि कल्पना नावकाशिका ।
क्लृप्तस्यानुपलम्भे तु कल्पनां को निवारयेत् ॥

किञ्च यथैव प्राकृतोपकारे प्राप्तेऽपि प्राकृतापूर्वीयेण रूपेण तस्य पदार्था जनका निर्ज्ञाता न स्वरूपेणेति तदीयजनकापेक्षा जायते, तथैव द्वाराण्यपि तदीय एव रूपे दृष्टानीति विकृतिप्राप्तस्य [1]तस्य केन द्वारेणैते जनका भवन्त्विति जायत एवाकाङ्क्षा । तत्र सति सम्भवे यथा दृष्टद्वाराङ्गीकरणं असति तु द्वारान्तरं कल्प्यमेव। यदप्युच्यते तादर्थ्ये[2] चायं निश्चयस्तावति च शब्दस्य प्रामाण्यम् । द्वारं पुनः प्रमाणान्तरसिद्धमेवेति । तद्यदि सर्वसाधारण्येनोक्तम्, तथा सति पाकस्यापि कृष्णलेषु प्रमाणान्तरसिद्धद्वाराभावादनुपकारकत्वेनाननुष्ठानं स्यात् । अथातिदिष्टपदार्थाभिप्रायम्, तत्रापि न विशेषं पश्यामः । यदि हि तादर्थ्यं द्वारकल्पनायालम्, ततोऽतिदेशावगतमपि कल्पयेत्, अतिदेशस्यापिप्रमाणत्वात् । अथ नालं तत उपदेशावगतमपि न कल्पयेत् । ततश्च पाकस्याप्यनुपकारकत्वं स्यात् ।

---

१. तस्य नास्ति. ख.

२. एवायं. ख.

प्रकृतौ च प्रोक्षणप्रयाजादीनामनुपकारकत्वं स्यात्, प्रमाणान्तरसिद्धद्वाराभावात्। कश्चित्तु निपुणम्मन्य एवमाह-यद्यपि कृष्णलेषु द्वाराभावादवघाते नोपकारं जनयति तथापि प्रकृतौ तावदवघातेनोपकारो जनितः। स एव च विकृता वुपकारः, ततश्चावघातजन्योपकारसम्बन्धात् विकृतेरुपपन्नमवघातस्य विकृत्यै-दमर्थ्यमिति। तदिदं परमरहस्यमाविष्कृतम्-यस्मात्प्रकृतावुपकृतमवघातेन तस्माद्विकृत्यैदमर्थ्यं तस्य सम्पन्नं भवतीति, किमत्रोत्तरं वक्तव्यम्[१]। ननु विकृतावपि स एवोपकारो यः प्रकृतावघातेन जनितः। एवञ्चावघातजन्यो-पकारसम्बन्धाद् युक्तमवघातस्य तादर्थ्यम् कोऽत्रोपहासः? उच्यते-न प्रकृतिविकृ-तिसाधारण्येनोपकारो जनितः, प्रकृतौ प्रकृतिमात्रसम्बन्धितया जनितत्वात्। यदि हि साधारण्येन जनितः स्यात्, ततः प्रसङ्गसिद्धत्वाद् विकृतिषु सर्वासु सर्वेषामङ्गा-नामनुष्ठानं न स्यात्। प्रकृतावपि चैकप्रयोगनिर्वर्तितस्य यावज्जीवमुपकारस्य[१] स्थितत्वात् प्रयोगान्तरेष्वारम्भणीयावदङ्गन्तराण्यपि न वर्तेरन्। अथैतत्प्रयोगा-पवर्गी स उपकारः प्रयोगान्तरेषु कर्मान्तरेषु चोपकारव्यक्तिरन्या जनयितव्या, तथा सति कृष्णलसम्बन्धिन्या उपकारव्यक्तेरवघातजन्यत्वाभावान्नावघातस्य तादर्थ्यं स्यात्, शास्त्रीयेण हि रूपेण प्रकृतिविकृत्योरुपकारस्यैकत्वं न व्यक्ति-रूपेण। ततश्च यः प्रकृतावुपकारोऽवघातेन जनितः न तस्य कृष्णलेषु सद्भावः। यश्च कृष्णलेषु तज्जातीय उपकारः तस्य नावघातो जनक इति। न च शास्त्रीय-रूपेणापि तस्यैक्यम्, परमोपकारस्य हि नास्त्यतिदेश इति वक्ष्यामः। तेन ताद-र्थ्यमबाधित्वानुष्ठानबाधनं न सम्भवतीति तदेव बाधितव्यम्। कथं तर्हि निश्चित-मित्युक्तम्? को दोषः? निश्चितस्यापि बाधो भवत्येव शुक्तिकारजतादिषु। तत्रापि न ज्ञानस्य बाधः, किन्तु भेदाज्ञानस्यातस्मिन् तदर्थिनं व्यवहारयतो भेद-ज्ञानेन बाधः। युक्तश्चाज्ञानस्य ज्ञानेन बाधः। तद्धि तेन निवर्त्यते। न तु ज्ञानस्य ज्ञानान्तरेण सम्भवति बाधः, न हि ज्ञानेन ज्ञानं निवर्त्यते तस्य स्वरसविनाशि-त्वादिति चेत् परिहृतमेतद्भाष्यकारेण श्रुतिलिङ्गाधिकरणे। नैव हि तन्निवर्तते। न निवर्तनं बाधः यदेवमुपालभेमहीत्यर्थः। [२]किन्तर्हि मिथ्याज्ञानमयथार्थज्ञानमेत-

१. उपकारस्याऽऽस्थितत्वात्. क.

२. कथं तर्हीति मु. पा.

दिति प्रत्ययान्तरं भवतीत्ययथार्थत्वज्ञापनेन फलवियोजनमस्य बाध इत्यर्थः। न चाज्ञानस्य व्यवहारहेतुत्वं सम्भवति, बुद्धिपूर्विका हि चेतनप्रवृत्तिः नाबुद्धिपूर्विका। सन्निहितशुक्तिशकलविषयाग्रहणबुद्धिः पूर्वानुभूतरजतविषया च स्मरणबुद्धिर्भेदाग्रहणेन सन्निहितरजतबोधतुल्यतया भासमाने तद्व्यवहारं प्रवर्तयत इति चेत्-तन्न, नहि तुल्याकारतया भासमानं तत्कार्यकरं भवति। मा कार्षीच्छुक्तिका रजतसाधारणाकारा भासमाना रजत [ कार्यारम्भणम्। ] पुरुषार्थसाधनबोधो हि व्यवहारहेतुः न तत्तुल्याकारताभानम्। अथान्यत्रादृष्टमपि सदृशस्य तत्कार्यकरत्वमिहैव कल्प्यत इति चेत्-एवं तर्ह्यावश्यकेऽक्लृप्तकल्पने वरं दोषसहितस्येन्द्रियादेरेवायथार्थज्ञान [ जनकत्व कल्पनं ] प्रतीत्यानुगुण्यात्। अपि चैवमपि विपरीतख्यात्यापत्तिः, यथैव हि बाष्पे धूमभ्रमो धूमज्ञानसादृश्यात् धूमोऽयमित्यादि व्यवहारं करोति, एवमग्निज्ञानमपि तत्कार्यत्वात् कुर्यात्। अतश्चानग्निमत्यग्निमत्वज्ञानाद्विपरीतख्यातिः। अपि चास्य बुद्धिद्वयस्याभेदाग्रहणान्नेदं रजतमित्यनेनापि सादृश्यमस्तीति व्यवहाराप्रवर्तकत्वमपि स्यात्। ततश्च प्रवृत्तिवन्निवृत्तिरपि स्यात्। अर्थभेदाग्रहणं प्रवृत्तिहेतुः, अभे [दा] ग्रहणन्तु न निवृत्तिहेतुरिति चेत्—ततो यो रजतमेवारजतमिति मन्यमानो निवर्तते स तत्र प्रवर्तेत। तत्र स्मृतिस्थस्य पुरःस्थितस्य च रजतशकलस्य भेदाग्रहणात् अभेदाग्रहणस्य च निवृत्तिहेतुत्वाभावात् भेदग्रहणे वा रजतस्यारजतत्वेन ग्रहणात् विपरीतख्यातिः। अपि च संवेद्यविशेषसम्बन्धित्वेनैव रूपेण स्वसंवेद्यासंविदुपेयते। तद्यदि समीचीनरजतबोधे ताद्रूप्यं [1]प्रकाशेत न तु शुक्तिशकलबोधे, तत्र संवेद्यभेदाद्बाधज्ञानात् प्रागेव विलक्षणे संविदौ प्रकाशेयाताम्। ततश्च वैलक्षण्याबोधान्न व्यवहारेदित्यलं प्रतीत्यपलापिभिर्माध्यमिकगन्धिभिः सङ्कथया। तस्मात्प्रकृतिवत्कुर्यादिति शास्त्राल्लुप्तार्थस्यापि सहसा प्राप्तिरवगता, पश्चादर्थलोपात् मिथ्येति निश्चीयते। ततश्चातिदेशशास्त्रं तदतिरिक्तपरं भवति, आहवनीयशास्त्रमिव पदहोमातिरिक्तविषयम् तद्वदेव तन्मात्रालोचननिमित्ता प्राप्तिः पश्चाद् बाध्यत इति कृत्वा

---

१. प्रकाशते. ख.

[१]प्राप्तबाधवाचोयुक्तिः। अतः सुष्ठूक्तं किमतिदिश्यत इति व्याख्यायते दशम इति। तत्र प्रथमं तावत् पूर्वोक्तोहाक्षेपेण वक्ष्यमाणबाधोपोद्घातत्वेन चेदं चिन्त्यते-किं लुप्तार्थस्याप्यतिदेशोऽस्ति नेति। तत्सिध्यर्थञ्च चिन्त्यम्—किं प्राकृताः शास्त्रपदार्थोपकाराः सर्व एव विकृतौ शास्त्रेणैव श्रुत्यातिदिश्यन्ते? यद्वा शास्त्र-पदार्थयोरेवातिदेशः? उपकाराणान्तु प्रकृतिवदिहैव कल्पनम्? अथवोपकाराणा-मेव साक्षादतिदेशः तद्बलादेव तु शास्त्रपदार्थयोरर्थात्प्राप्तिः? इति। तत्र प्रथमं पूर्वपक्षमाह। प्रकृतिवत्कुर्यात् इत्यतिदेशे **यद्यत्प्रकृतौ विद्यते तत्तत्सर्वमविशे-षात् अतिदिश्यते। तस्याञ्च शास्त्रपदार्थोपकारा विद्यन्ते। अतस्ते सर्वेऽ-तिदिश्यन्ते।** ननु प्राकृतावघातजन्य उपकारः कृष्णलेषु न सम्भवति। स कथं तत्रातिदिश्यते? तदनतिदेशे च कथं तदर्थतयावघातः क्रियेत? उच्यते-उप-कारेष्वतिदिश्यमानेषु ये ऽत्र न सम्भवन्ति ते तत्र मा नामातिदिश्यन्ताम्, पदार्थास्तु तत्रातिदिष्टाः प्राकृतोपकारसम्भवेऽप्युपकारान्तरमदृष्टं कुर्युः, वचन-प्रामाण्यात्। **तस्माल्लुप्तार्थमपि प्रवर्तते** नास्ति कस्यचिद्बाधः। एवञ्चाग्निपद-स्यैव शास्त्रेण प्राप्तत्वात्तेनैव लक्षणया गौण्या वृत्त्या वा विकृतिष्वपि देवताप्रकाशनं कार्यमित्यूहोऽपि शिथिलीकृत इति॥

## अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥२॥ सि०

**अर्थलुप्तं न प्रवर्तते।** कुतः? **कथंभावोऽयं लौकिको वैदिकश्च उपकार-मेवापेक्षते।** उपकारसम्पादनात्मकं यागगतं व्यापारमपेक्षत इत्यर्थः। **न तु पदार्थान् शास्त्रं वा।** नन्वेवमप्रवृत्तिरेव तयोः स्यात्ततश्च प्राकृतानां पदार्थानां विकृतावङ्गता न स्यात्। न ह्यविहितमङ्गं भवति। तच्चानिष्टमत आह—**उपकार-द्वारेणैवोपकारकप्रवृत्तिः।** पदार्थविशेषितावान्तरोपकारसम्पादनस्य यागगतस्य व्यापारविशेषस्य प्रकाराख्यस्यातिदेशादर्थादेव पदार्थानां विशिष्टविधाने च विशेषणानां विधिसिद्धेर्नाप्राप्तिः नाप्यनङ्गत्वापत्तिः। अतो व्यर्थस्तेषां स्वयमतिदेश इति। **तस्माल्लुप्तार्थस्य निवृत्तिः।** ननूक्तं **प्रकृतौ शास्त्रपदार्थोपकारा विद्यन्त**

---

१. प्राप्ताबाधवाचोयुक्ति. ख.

इति, तत्र कथमुपकार एवातिदिश्यते ? उच्यते—**सौर्य उपमानेन** सादृश्येनाग्नेयविध्यन्तं **गृह्णाति** । सादृश्येन ह्यतिदेशः । आग्नेयवाक्येन [1]च सौर्यवाक्यस्य सादृश्यम् । तेनाग्नेयविधेस्त्र्यंशस्य योऽन्त इत्थमंशस्तं सौर्यो गृह्णाति । ततः किमित्याह—**आग्नेये चोपकारा अनन्तराः** साक्षात्सम्बन्धिनः । **व्यवहिताः पदार्थाः** उपकारद्वारेण तेषामाग्नेयसम्बन्धितया । **व्यवहिततराणि शास्त्राणि** पदार्थविध्यर्थत्वात्तेषां पदार्थद्वारेण प्रधानसम्बन्धात् । **अतः सौर्यकथंभावः** सादृश्योपस्थापितस्याग्नेयस्यानन्तरानुपकारान् दृष्टादृष्टरूपान् प्रथमं **पश्यति तांश्च गृह्णाति** । पदार्थाः **पुनरुपकारैर्व्यवहिताः** । किञ्च[2] **न चापेक्षिताः**, यागगतस्तु व्यापारोऽपेक्षितः प्रथमप्रतीतश्च अतो न तदतिलङ्घनेनानपेक्षितचरमप्रतीतपदार्थग्रहणं न्याय्यम् । ननु पदार्थविशेषितस्य यागगतस्य व्यापारस्याग्रहीतेषु पदार्थेष्वग्रहणात्पदार्थानामेव प्रथमं प्रतीतिः । सत्यमेतत्; आग्नेयेन तु स्वगते व्यापार उत्थाप्यमाने तद्विशेषणतया पदार्थानां प्रतीतिः, यच्च परविशेषणं तदप्रतीतकल्पनं कार्ययोगिविशिष्टे कार्यसम्प्रत्ययात् स्वातन्त्र्यन्तु तेषां पश्चात्स्वयं निष्कृष्य बुध्यमानानां चरमप्रतीतिकं भवतीति ।

सम्प्रति द्वितीयं पूर्वपक्षमाह—**ननु प्रकृतौ पदार्था एवानन्तराः** प्रथमप्रतीताः **शाब्दत्वात्**[3] **ते च प्रथमं गृह्यन्ते पश्चात्तूपकारा** दृष्टरूपाः यथायथं **कल्पिताः । विकृतावपि तथैव युक्तमिति । सिद्धान्तमाह—सत्यं प्रकृतौ** [4]**पदार्था गृह्यन्ते न तु पदार्थापेक्षया** गृह्यन्ते **किन्तूपकारापेक्षयैव** तेषां ग्रहणम् । अयमभिसन्धिः—प्रधानापेक्षि कथम्भावपूरकतया प्रकृतौ पदार्था विधीयन्ते, कथमिति च व्यापारविशेषापेक्षयम् । सोऽपि च व्यापारविशेषो यागगतोऽपेक्षितः । येन व्यापारेण यागस्य स्वकार्यसाधनता सम्पद्यते सोऽपेक्षितः,

---

१. च नास्ति. क.

२. नापेक्षिताः क.

३. शब्दत्वात्. क.

४. पदार्थो गृह्यते. क.

न तु यागगततामनादृत्य व्यापारमात्रम्, येन पदार्थाः स्वरूपेण विधीयेरन्। तत्र यागेन स्वर्गं कुर्यादिति प्रधानवाक्येनोक्तम्। कथं च तेन स्वर्गः कृतो[१] भवति ? येन व्यापारेण विषयीक्रियमाणो यागः स्वर्गस्य साधनं भवति तादृशे व्यापारे यागगतेऽनुष्ठिते यागेन स्वर्गः कृतो भवति। यथा परशुगतोद्यमननिपातनाद्यनुष्ठानात्परशुना वृक्षस्य द्विधाभावः कृतो भवति। सर्वत्रैव च [२]साधनगतव्यापारविशेषानुष्ठानादेव तेन साध्यं साधितं भवति, नान्यथा। तद्यत्र व्यापारविशेषो निर्ज्ञातस्तत्र साधनमात्रावच्छिन्ना फलभावना विधीयते। यत्र तु न ज्ञायते तत्र साधनोपदेशे कृतेऽपि साकाङ्क्षं वाक्यं नानुष्ठानाय पर्याप्तम्। तद्यथा यो नाम परशुना वृक्षं छेत्तुं न जानाति स परशुना छिन्धीत्युक्तोऽपि न प्रतिपद्यते कथमेतेन छेत्तव्यं कस्मिन्व्यापारेऽनुष्ठिते तेन छिन्नं भवतीति। तस्यामाकाङ्क्षायामिदमुच्यते-परशुदण्डं द्वाभ्यां हस्ताभ्यां गृहीत्वा काष्ठस्यार्द्धस्योपरि अधोमुखमुद्यम्य निपातयेति। इह च यागेन स्वर्गं कुर्यादित्युक्ते न ज्ञायते कथमनेन स्वर्गः क्रियते कतमस्मिन् व्यापारविशेषे यागगतेऽनुष्ठिते यागेन स्वर्गः कृतो भवतीति। तदेवं साकाङ्क्षे प्रधानवाक्ये "समिधो यजति" "व्रीहीनवहन्ति" इत्यादीनि श्रूयमाणानि प्रधानयागगतव्यापारविशेषपरत्वेनावधार्यन्ते। तत्र यान्युपस्तरणाभिधारणावदानयाज्यापुरोनुवाक्यावचनावघातादीनि तानि दृष्टेनैव तण्डुलतुषविमोकादियागनिर्वृत्त्युपयोगद्वारेण यागगतव्यापारतामनुभवन्ति। समिदादीनान्तु दृष्टद्वाराभावात् तद्द्वाराणाञ्च क्षणिकत्वात् प्रधानयागसम्बन्धित्वयोगात् यागगतव्यापारविशेषत्वानुपपत्तेरदृष्टद्वारकल्पनम्। तदेवं शास्त्रार्थो भवति-एभिर्व्यापारैरनेन द्वारेण यागे व्याप्रियेत, एवमेभिः सम्बद्धः कृतो यागः स्वर्गस्य साधनं भवतीति। तेन प्रकृतौ पदार्था न स्वरूपपराः, किन्तु स्वजन्ययागसम्बन्ध्युपकारलक्षणार्थाः। नन्वेवं विकृतावपि प्रकृताविवोपकारलिलक्षयिषयैव पदार्था गृह्यन्ताम् अत आह—**स एष वैकृतः कथम्भावः श्रुत्योपकारान् गृह्णाति**

---

१. भवतीति. ख.

२. व्यापारानुष्ठानादेव. ख.

लक्षणया पदार्थान्, उपकारान् लक्षयितुं पदार्थान् गृह्णीयात्। श्रुतिश्च लक्षणाया गरीयसी। तस्मात् पदार्थोऽवान्तरकार्यवन्नैवातिदिश्यते।

कश्चित्तु परमोपकारस्य पृथगतिदेशं पश्चाच्च पदार्थानामपि शास्त्रेणैव पृथगतिदेशमिच्छति,तत्तु द्वयमपि न न्याय्यमिति दर्शितमुपकारानिति बहुवचनात्, उपकारद्वारेण चोपकारकप्रवृत्तिरित्यस्माच्च ग्रन्थात्। न हि परमोपकारस्यातिदेशो युक्तः, अनपेक्षितत्वात्। ननु स एवापेक्षिततरः सर्वस्मात् सत्यं कर्तुमपेक्षितो न तु ज्ञातुम्। अतएवास्य विधिरनपेक्षित इत्युच्यते। यद्धि विनैव विधिना पुरुषस्य कर्तव्यतया विदितं न तच्छास्त्रेण बोधयितव्यम्। विदितं चोपकर्तव्यमस्येति समर्थाचरणमेव ह्युपकारः। साधनोपदेशादेव चैतद्गम्यते यथा [1]समर्थं भवति तथा कर्तव्यमिति। उपायन्तु न वेद कथं क्रियमाणमुपकृतं स्यादिति तमाकाङ्क्षते। उपकारोपायभूतः क्रियाप्रकार एवातिदिश्यते, स एव च प्रकृतावित्थमंशत्वेन विहितः—एभिः पदार्थैरित्थं दृष्टादृष्टरूपोपकारसम्पादनेन यागे व्याप्रियेतेति। यश्च प्रकृतावित्थमंशः स एव विकृतौ तथा शब्देनातिदिश्यते, यथा प्रकृत्या स्वकार्यं कृतं तथा विकृत्येति। यो व्यापारविशेषः प्रकृतौ यागेऽनुष्ठितः स विकृतावपीति। तत्र च प्रयाजादिरूपितो दृष्टादृष्टात्मकोपकारसम्पादनात्मा व्यापारः कृत इति स एव विकृतावतिदिश्यते न तु परमोपकारः, रागप्राप्तत्वात्। ननूपकारमात्रं प्राप्तं[2] प्राकृतोपकारविशेषोऽप्राप्तः किं न विधीयते? अनपेक्षितत्वादिति ब्रूमः। न ह्यसावुपकारविशेषं प्रार्थयते, प्रयोजनाभावात्। स्वकार्यक्षमत्वमेव ह्युपकारः। तावतैव च [3]नः प्रयोजनम्। तद्विशेषस्तु नादर्तव्यः। न च सम्भवति प्रकृतिगतसामर्थ्योद्बोधनं विकृतौ कर्तुम्। तस्मात्सामर्थ्यापादकावान्तरोपकारवत्तैवातिदिश्यते। यदपि पदार्थानामपि पृथगतिदेशोऽस्तीत्युक्तम्, तदप्ययुक्तम्; अर्थादेव तत्सिद्धेः। अपि चैवमूहबाधयोरनुपपत्तिः। तदा ह्यग्न्यादिपदरूपस्यैव शास्त्रतः प्राप्तेः कथ-

---

१. समर्थः क.

२. प्राकृतस्तूपकार. क.

३. नाप्रयोजनं. क.

मूहबाधौ ? किञ्च यदि प्राप्तेऽप्युपकारे पदार्था अपि पृथक् प्रापयितव्याः ततस्त एव वरं प्रथमं प्रापिताः। तत्प्रापणे हि प्रकृतिवद्विकृताप्यर्थसिद्धत्वाद्विनैव शास्त्रायासेनोपकारोऽपि लभ्यते। अन्यथातूभयशास्त्रायासाद्गौरवं स्यात्। यदपि प्रथममुपकारे प्राप्ते तज्जनकाकाङ्क्षायां साक्षात्तज्जनकानवान्तरोपकारानतिलङ्घ्य व्यवहिताः पदार्था गृह्यन्ते, तदपि स्वपक्षानुरागमात्रम्। तस्मान्न परमोपकारस्यातिदेशः, न पदार्थानाम्। किन्तु पदार्थावान्तरकार्यवत्तात्मा प्रकारोऽतिदिश्यते तद्वशत्वाच्च पदार्थप्राप्तिः। एवञ्चार्थाच्छास्त्रमपि प्राकृतं विकृतेरपि वक्यशेषतामुपगतं भवति। यत्रापि शास्त्रमेव श्रुत्यातिदिश्यते "एतद् ब्राह्मणानि" इति तत्रापि प्रकृतिसम्बन्धिरूपस्य ब्राह्मणस्यातिदेशः। तत्सम्बधिता च न स्वरूपेण, न पदार्थस्वरूपविधायकतया, किन्तु यागगतपदार्थजन्यावान्तरोपकारसम्पादनविधायकतयेति तेन रूपेणातिदेशात्तत्रापि कार्यप्राधान्यम्। यदा चैवमुपकारवत्ताख्यः प्रकारोऽतिदिश्यते तदा न लुप्तार्थानां प्राप्तिः सम्भवति। न हि स्वयं छिन्ने बर्हिषि लवनसम्पादितबर्हिष्कतासम्पादनात्मा प्राकृतयागगतो व्यापारः शक्यः कर्तुम्। तेन प्राकृतस्य प्रकारस्य यागसम्बन्धित्वरूपेणैकरूपस्य नानाविधाङ्गावान्तरकार्यखचितस्य विचित्रस्यातिदिश्यमानस्य योंऽशो यस्यां विकृतौ न सम्भवति प्रबलेन वा विरुध्यते, तस्यां तद्वर्जनमतिदिश्यते। तेनावघातादीनां कृष्णलेषु स्वरूपेण प्राप्त्यभावात् तत्कार्यस्य चासम्भवात् अनतिदेशात्तद्द्वारेणाप्यप्राप्तेः सिद्धा लुप्तार्थानां निवृत्तिः। अस्मिन्नधिकरणे युगपत्पदार्थोपकाराणामतिदेशः पदार्थानामेव वातिदेश इति पक्षद्वये निराकृते 'प्रकृतौ यथोत्पत्तिवचनमि' त्यत्र नवमे शास्त्रवत्पदार्थातिदेशो निराक्रियत इति विवेकः।

एवं वा। अचरौ चरुशब्दो मासाग्निहोत्रवत्तद्धर्मविधानार्थः। तस्मात्पाकवदवघातादयोऽपि कर्तव्या इति विशेषाशङ्का निराक्रियते। वाचनिकेन पाकेन वैशद्येन[1] चरुसादृश्यस्य सिद्धत्वान्न विधिपरत्वं न्याय्यम्, विधौ गौणत्वायोगात्।

---

१. च. ख.

तस्मादकर्तव्योऽवहन्तिरिति। सामान्येन वा[1] पूर्वं सूत्राणि व्याख्यायेदानीं सुगमत्वार्थमुदाहरणविशेषे व्याख्यायन्त इति वेदितव्यम्।

एवं वा। नन्वप्राकृतोऽयं विष्णुरुरुक्रमः, नास्यावाहनं चोदकः प्रतिदिशति यथायूपावटस्तरणबर्हिषो बर्हिर्धर्मान्। सत्यम्; स्वयमेव तूरुक्रमयागस्यैकदेवतात्वादौषधद्रव्यकत्वाचाग्नेयविकारत्वादावाहनं प्राप्नोति। आवाहने कृते यद्यपि निमित्तं नोपनिपतति तथापि न कश्चिद्दोषः। नहि राजादिवदावाहिता देवताऽनुपचरितापि कुप्यति। अकृते त्वावाहने यदि निमित्तोपनिपातात्कर्तव्यो यागः स्यात्तदावाहनलोपाद्वैगुण्यं स्यात्। तदानीं चावाहनं क्रियमाणं काललोपाद् विगुणं स्यात्। तस्मात्कर्तव्यमावाहनमिति। उच्यते-प्रधानं हि चिकीर्षितानामङ्गानां निमित्तमित्युक्तम्। आवाहनस्य च पुरस्तात्तन्त्रत्वाच्चिकीर्षितं प्रधानं निमित्तानिश्चयात्। तत्राचिकीर्षिते प्रधानेऽङ्गाधिकाराभावात् अनधिकारिणा कृतस्यापि[2] त्वफलत्वादकर्तव्यमावाहनमिति सोऽयं निमित्तानिश्चयात् [3]स्वकाले प्राकृतस्यावाहनस्य बाधः। सञ्जाते तु निमित्ते पौरोडाशिकाज्यभागन्यायेन कर्तव्यमेवावाहनम्। प्रयाजादयस्तु वैश्वदेविकतन्त्रमध्यविहितत्वादुरुक्रमयागस्य तदीया एव प्रसज्यन्त इति ॥ २ ॥

[ २—सोमाङ्गविकृतिष्वन्वारम्भणीयाया बाधाधिकरणम् ]

## इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥ सि०

दीक्षणीयादीनामप्यस्त्येवारम्भः। न ह्यनारब्धानि तानि कर्तुं शक्यन्ते। तस्मान्निमित्तसद्भावात्कर्तव्यारम्भणीयेति पूर्वः पक्षः। सिद्धान्तमाह— यदि सङ्कल्प आरम्भः स तावज्ज्योतिष्टोमस्यैव कृतः प्रसङ्गाद्दीक्षणीयादीनामप्युपकरोति, न तु दीक्षणीयादीनां पृथक् सङ्कल्पोऽस्ति। अथौदासीन्यप्रच्युति-

---

१. पूर्वसूत्राणि. क.

२. त्वफलवत्वात्. ख.

३. च काले. ख.

रारम्भः सोऽपि तस्यैव । ज्योतिष्टोमं हि प्रयोक्तुमसावौदासीन्यात्प्रच्युतः न दीक्षणीयादि प्रयोक्तुम् । तस्य च साङ्गस्य प्रयोग इति तयैव प्रच्युत्या प्रसङ्गा-दङ्गान्यप्यनुष्ठीयन्ते, न तु तेषामन्या प्रच्युतिरस्ति, यदर्थारम्भणीया स्यात् । अथ प्रथमः पदार्थः ऋत्विगानमनं देवयजनजोषणं वारम्भः, सोऽपि तस्यैव प्रसङ्गेन दीक्षणीयादीनाम् । एते च पक्षा अन्वारुह्यवादेनोपन्यस्ताः । लुप्तद्वारत्वात्सर्वेष्वपि पक्षेष्वारम्भणीया न कार्येति प्रदर्शयितुम् । परमार्थतस्तु औदासीन्यप्रच्युतिरेवारम्भ इत्युक्तम् । 'अथायमन्या' इत्यादि भाष्योक्तं चोद्यमाह-ननु प्रथमपदार्थारम्भपक्षे दीक्षणीयाया अपि अग्न्यन्वाधानं प्रथमः पदार्थो भविष्यति कथं लुप्तद्वारता? तत्र स्वयं तावत्परिहरति—उच्यते तदपि तस्यैव प्रसंगेन तु दीक्षणीयादीनाम् । ततः किमित्याह-यथा प्रासङ्गिकेषु न ज्योति-ष्मती न एवमारम्भणीयापि । भाष्योक्तं परिहारमाह—न च प्रकृतावप्यग्न्य-न्वाधानं प्रथमम् किं तर्हि? पाठनैव तत्प्रथमम्, ततोऽपि पूर्वं क्रियमाणं कर्मान्तरं[1] त्वस्याः प्रकृतेः प्रथमः पदार्थः । किं[2] च तत्? प्रणयनम् । अतस्त-स्याग्न्यन्वाधानस्य प्रकृतौ नेयमारम्भणीयाङ्गभावेन दृष्टा, किन्तु प्रणयनस्य । न चेह दीक्षणीयार्थेन प्रणयनमस्ति, किन्तु ज्योतिष्टोमार्थेन । अलुप्तोपकाराश्च प्राकृताः पदार्थाः प्राप्यन्ते, तद्यथा यूपाञ्जने । यूपाञ्जनार्थ आज्ये संस्कारा न क्रियन्ते, एवं दीक्षणीयादिष्वारम्भणीया न कर्तव्या । अपि च दीक्ष-णीययैव ज्योतिष्टोम आरम्भार्थः सिध्यतीत्ययुक्तोऽयं भाष्यग्रन्थः । कथम्? पुरुषसंस्कारद्वारेण क्रतोरुपकरोति दीक्षणीया, न त्वारम्भार्थतया । कथ-मित्याह-न चास्याः प्रत्यक्षं वचनमस्ति-आरम्भणीयाकार्ये वर्तते दीक्षणीयेति । च शब्दो हेतौ । दीक्षासञ्जननं त्वस्याः प्रयोजनम् उत्पत्ति-वाक्येनैवावगम्यते "देवताश्चैव यज्ञं चारम्भत" इति आरम्भार्थतयापि श्रूयत एवात आह—यस्मादेवमुत्पत्तौ निर्ज्ञातं पारार्थ्यं तस्मादाग्नावैष्णव-स्तुत्यर्थोऽयमर्थवादः ॥ ४ ॥

---

१. तु नास्ति. मु. पा.

२. च नास्ति. क.

[ ३—अनुमत्यादिविकृतिष्वारम्भणीयाया बाधाधिकरणम् ]

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥५॥ सि०**

अत्र भाष्यकारेणेष्टिपशुसोमानां सर्वेषां प्रधानत्वात्सर्वसाधारण आरम्भः। तस्मादिष्टीनामप्यारम्भसद्भावादलुप्तार्थारम्भणीया कर्तव्येति पूर्वपक्षं कृत्वा लुप्तार्थतामङ्गीकृत्यैव प्रत्याम्नानादरम्भणीया निवर्तते इत्युक्तम्। तदाक्षिपति- **सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते इत्युक्तम्। कथम्?ज्योतिष्टोमो-** ह्ययं **श्रुत्या फलेन सम्बध्यते**"राजसूयेन स्वाराज्यकामो यजेत"इति प्रकृतसर्वयाग- ग्रहणात्। अथारम्भार्थतापि कस्मान्न भवतीत्यत* आह-**न चोभयार्थता युक्ता।** कुतः? **विना वचनेन** वचनाभावादित्यर्थः। 'अग्निष्टोममग्र आहरति" इति अस्य क्रमविध्यर्थत्वादारम्भार्थत्वाश्रवणात्। अथासत्यपि श्रवणे नखादिवत् कार्यापत्तिरुच्यतेऽत आह-**अनुमानाद्यप्यारम्भणीयाकार्यापत्तिप्रमाणं न विद्यते** ज्योतिष्टोमस्य। **तस्मादयुक्तं** प्रत्याम्नानाभिधानमित्यर्थलोप **एव वक्तव्यः**। एवं भाष्यमाक्षिप्य स्वयमिदानीमधिकरणं व्याचक्षाणः पूर्वपक्षमाह- **नन्वत्रर्त्विग्वरणमारम्भः सर्वप्रधानार्थम्** तत्र **प्रधानत्वादिष्टीनामप्यारम्भ- सद्भावादारम्भणीया भविष्यतीति** नार्थलोपः शक्यते वक्तुमिति। **उच्यते** सत्यं सर्वार्थम्, **तथापि स्वप्राकृतकार्यत्वान्निवृत्तिः यूपावटबर्हिषि प्रोक्षणस्य प्राकृतस्य निवृत्तिः**। प्रकृतौ हि यः स्वविषय आरम्भ औदासीन्यप्रच्यु- तिरूपः तदर्थारम्भणीया। राजसूये च सोमेष्टिपशुबन्धनां सर्वेषामेकफलार्थत्वा- त्सर्वेषु व्यासक्तौदासीन्यप्रच्युतिर्न प्रत्येकसमाप्ता। तेन यथैवाग्नीषोमीये हविषि व्यासक्तं द्वयोर्देवतात्वं नान्यतरेण व्यपदेष्टुं शक्यते तथैवात्रापि सर्वविषय आरम्भो नेष्ट्यारम्भतया शक्यते वक्तुम्। [१]इष्ट्यारम्भे चारम्भणीयेति प्राकृतकार्या- भावात् निवर्तते। तदिदमुक्तं **सर्वारभान्निवर्तेत**। ये चारम्भणीयाया दर्शपूर्ण-

---

१. तु नास्ति. मु. पा.

* चिन्हान्तर्गतो भागः क पुस्तके त्रुटितः।

१. इष्ट्यारम्भणीयेति प्रकृत. क.

मासाङ्गत्वं नास्ति पुरुषसंस्कारार्था हि सा, सकृत्संस्कृतश्च पुरुषो यावज्जीवमारम्भयोग्यस्सम्पद्यत इति वदन्ति, तेषामिदमधिकरणमनर्थकम्। यद्यपि ह्यनुमत्यदादीनामारम्भः स्यात्तथापि प्रकृतौ सकृत्संस्कृतेनैव पुरुषेणानुमत्यादीनामप्यारम्भसम्भवान्न पुनः करणाशङ्कास्ति[१]। न ह्यकृतदर्शपूर्णमासस्य राजसूयाधिकारोऽस्ति[२] यतोऽनुमत्यादिषु पुनः करणमाशङ्क्येत। सर्वसोभविकाराणामिष्टिपूर्वत्व पञ्चमान्त्ये दर्शितं यतः, तस्माद्व्यर्थमिदमधिकरणं स्यादिति ॥५॥

[ ४—अन्वारम्भणीयायामन्वारम्भणोयाबाधाधिकरणम् ]

## तस्यां तु स्यात् प्रयाजवत् ॥ ६ ॥ पू०

अङ्गभूताप्यारम्भणीया पृथक् प्रयोगत्वात् पृथगारम्भवती न दीक्षणीयादितुल्येति विशेषशङ्कासद्भावात्तेन तावदपौनरुक्त्यम्। नापि पवमानेष्ट्यधिकरणेन पौनरुक्त्यम्, ता ह्यग्निमात्राङ्गं न दर्शपूर्णमासाङ्गमिति युक्तं यन्नातिदिश्यन्ते। इयं पुनरङ्गत्वादतिदिश्यत इति भवति शङ्का। तस्मादपुनरुक्तम्। अत्र भाष्यकारेणाव्यवस्थामाशङ्क्य सामर्थ्यतो व्यवस्था भवति इत्युक्तम्। तत्र कथं सामर्थ्यतो व्यवस्था? यावता यावज्जीवमपि शक्यत एवारम्भणीया कर्तुमित्याशङ्क्याह- **समानेऽहनीति सामर्थ्यम्**। दर्शपूर्णमासाङ्गभूता हीयं तत्समानकालत्वात्तदहरेव कर्तव्या। तेन तस्मिन्नहनि यावत्कृत्वः प्रयोक्तुं शक्यते तावत्कृत्वोऽभ्यस्यत इति नाव्यवस्येति।

## न वाङ्गभूतत्वात् ॥ ७ ॥ सि०

**अङ्गभूता हि सा दर्शपूर्णमासयोः। अङ्गभूतस्य च पदार्थस्य प्रधानारम्भेणैव सिद्धिरिति** सूत्रं भाष्यं चानुभाष्यात्रापरितोषादुत्तरसूत्रमिति दर्शयन्दूषयति—**यद्येवं दीक्षणीयादिवदारम्भलोपं मन्यसे तन्न युक्तम् कस्मात्? दर्शपूर्णमासप्रयोगाद्बहिरियमारम्भणीया क्रियते** [३]आरप्स्यमान इति भविष्यदवस्थे दर्शपूर्णमासारम्भे विधानात्। तेन सा पृथगारम्भवती

---

१,२. अस्ति नास्ति. क.

३. आरभ्यमाणः ख.

न तु तथा दीक्षणीयादि, **तस्मादयुक्तमेतत्**। यदप्यपरमुत्तरमुक्तम्-आरम्भणीयायां प्रवृत्तेन दर्शपूर्णमासौ कर्तव्यौ। अतः प्रकृतिवदारम्भणी [या आरम्भ] या-प्रवृत्तेन सा कर्तव्येत्येतावदतिदिश्यते तन्न ! [त्र ?] अकृत्वाप्यन्यामरम्भणीयाम्, आरम्भणीयां कुर्वन् आरम्भणीयाप्रवृत्त एव करोतीति व्यर्था पृथगारम्भणीयेति। तद-प्ययुक्तम् , न ह्यारम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्तव्यौ, किन्त्वारम्भणीयासंस्कृतेन तेन सापि तत्संस्कृतेनैव कर्तव्या। न च प्रवृत्तिमात्रेण तत्संस्कारो जायते, किन्तु समाप्तायाम्। तस्मादेव वक्तव्यम्-**अङ्गं चेयम्** चशब्दोऽप्यर्थे। यद्यपि दर्शपूर्ण-मासाङ्गमियं न तु पवमानेष्टिवदनङ्गता शक्यते वक्तुम् , तथापि नातिदिश्यत इति शेषः। कथमित्याह ? **कथम्भावपरिपूर्णारम्भणीया विधीयते** न ह्यंशत्रय-लाभात्प्राग्विधिस्सम्भवति। ततः किमित्याह-**सा चेष्टित्वाद्दर्शपूर्णमासाभ्यां धर्मानाकाङ्क्षति**। [१]तथापि किमित्याह-**तौ च** प्रागस्याविधानादारम्भणी-याशून्यौ। तेनाविहितावस्थायामारम्भणीयायां दर्शपूर्णमासाभ्यामितिकर्तव्यता गृह्यमाणा तद्व्यतिरिक्तवाक्यविहितैव केवला ग्रहीतुं शक्यते नात्मा (?)। अन्यथा ह्येकस्मिन् वाक्ये विहितवदपेक्षणमविहितवच्च विधानं प्रतिषिद्धं स्यात्। **तदिदमुक्तमेकवाक्यत्वाच्चेति**। नन्वेवमप्यस्माद्विधेः प्राग्दर्शपूर्णमासावप्य-लब्धेतिकर्तव्यताकत्वान्न विहितौ कथमविहिताभ्यामिहातिदेशः ; [२]तस्मादति-देशस्यैवासम्भवित्वात् प्रयाजादयोऽपि न प्रवर्तेरन्। नैष दोषः; स्वाङ्गमात्रा-पेक्षो हि दर्शपूर्णमासविधिः, न त्वङ्गाङ्गान्यपेक्षते। तेनापर्यवसितेऽप्यारम्भणी-याविधौ तदीयकिमंशपूरणमात्रेणैव स्वाङ्गपरिपूरणात् लब्धात्मा दर्शपूर्णमास-विधिरित्थम्भावविशिष्टौ[३] तौ विधत्ते, विहितयोश्च[४] तयोस्तदीयमित्थंभावमार-म्भणीया स्वीकृत्य पश्चात्तज्जनकान् पदार्थान् स्वीकुर्वाणा स्वात्मानमलब्धात्म-

---

१. ततः क.

२. तस्मादतिदेशस्यैवाविधौ तदीयकिमंशपूरणमात्रेणेत्यंभादित्वान् ख.

३. इत्थम्भावविशिष्टो विधत्ते. क.

४. विहितयोस्तदीयं. ख.

कत्वात् न स्वीकरोति । प्रयाजादींस्तु लब्धात्मकान् गृह्णातीति वैषम्यम् । एवं वैमृधेऽपि द्रष्टव्यमिति ॥ ७ ॥

[ ५—खलेवाल्यां यूपाहुतेर्बाधाधिकरणम् ]

**कर्म च द्रव्यसंयोगार्थमर्थाभावात् निवर्तेत तादर्थ्ये श्रुतिसंयोगात् ॥ ९ ॥ सि०**

यथैवाञ्जनं यूपार्थमपि खलेवाल्यां क्रियते । न हि सम्भवतः त्याग उचित इति, तथा यूपाहुतिरपि । सा त्वदृष्टार्थत्वादलुप्तद्वारा खलेवाल्यां कर्तव्येति पूर्वः पक्षः। नेयं साक्षाद्यूपार्था 'यूपमच्छेष्यता होतव्यम्" इति यूपशब्दस्याच्छेति विशेषणत्वादच्छैतेरङ्गं यूपाहुतिः लृट्श्रुत्या । क्रियार्थायां हि क्रियायामुपपदे सत्ययं लृट्प्रत्ययः । अच्छशब्दश्चाप्तुमिच्छत्येतस्मिन्नर्थे वर्तते । एतिर्गमने । तेन यूपप्राप्त्यर्थस्य गमनस्याङ्गं यूपाहुतिस्तद्द्वारेण यद्गत्वा कर्तव्यं छेदनादि तदङ्गम् तद्द्वारेण तु यूपाङ्गं न साक्षात् । तेन यथारम्भणीया लृट्प्रत्ययेनारम्भाङ्गं तद्द्वारेण तु दर्शपूर्णमासयोः न तु साक्षात्, तयोरारम्भविशेषणत्वेन श्रवणात् एवमियमपि । ततश्च तद्वदेव दीक्षणीयादिष्वारम्भलोपवत् खलेवाल्यां गमन-च्छेदनाभावात् लुप्तार्था यूपाहुतिर्न कर्तव्या । न हि खलेवालीमच्छ गच्छति । यवक्षेत्रे हि साद्यस्क्रा प्रतायते । तदेव च तस्य वेदिः । तदीयं खलं उत्तरवेदिः । तत्र-स्थायामेव च खलेवाल्यां पशुर्बध्यते । तस्मान्न कर्तव्या यूपाहुतिरिति सिद्धान्तः ॥ ८ ॥

[ ६—खलेवाल्यां स्थाण्वाहुतेर्बाधाधिकरणम् ]

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयते ॥ १० ॥ पू०**

यूपाद् विनियोजितस्य स्थाणोरनर्थकः संस्कारः। न ह्यसम्बन्धिनि क्रियमाणाः संस्काराः प्रयोजनवन्तो भवन्ति । तस्मात्स्थाण्वधिकरणकोऽयमारादुपकारको होमः। स्थाणुरपि यः कश्चित्, न यूपीय एवाश्रवणात्। तस्मादारादुपकारकः। तत्सामान्याद्यूपाहुतिरपि । तत्रैकादशिन्यां तन्त्रत्वमुक्तं भविष्यति । अन्यथा आवृत्तिः स्यात् । तस्मात्साद्यस्केऽपि स्थाण्वाहुतिः कर्तव्येति पूर्वः पक्षः ।

सिद्धान्तस्तु-न सामवायिकत्वे सम्भवति आरादुपकारकत्वं युक्तम् । दृष्टश्चापनीतान।मपि स्रगादीनां शुचिदेशनिधानादिरूपो लोके संस्कारः। तत्र हि देवदत्तादीनामेव संस्कारं लौकिका मन्यन्ते। न चात्रानुपपत्तिः, आचारप्रामाण्यात् । एवं यूपीयस्थाणुद्वारेण यूपसंस्कारार्था स्थाण्वाहुतिः ॥

समाख्यानञ्च तद्वत् ॥ १२ ॥

स्थाण्वाहुतिरिति षष्ठीसमासोऽयम्, सप्तमीसमासानुपपत्तेः । ततश्च षष्ठ्याः प्राधान्यात् स्थाण्वर्थाहुतिरिति । कथं सप्तमीसमासानुपपत्तिः । एकदेश्युत्तरमाह—सप्तम्यन्तस्य शौण्डादिभिः सह समासो भवति। न चाहुतिशब्दस्तत्र पठितः । ननु [1]'संज्ञायाम्' इति समासो भविष्यति । उच्यते—तत्रालुक् प्राप्नोति यथारण्ये तिलका इति। आक्षेप्तोपसंहरति नैतदेवम्, 'हलदन्तात्सप्तम्याः संज्ञायाम्' [2]इति हि सोऽलुगुच्यते उकारान्तञ्चेदं स्थाणुपदम्। तस्मात्संज्ञायामपि लुगेव भवतीत्याक्षेपोपसंहारः। (समाधत्ते—एवं तर्हि अन्यथा षष्ठीसमासनियमः। अर्थप्रयुक्तो हि समासः अर्थप्रधान अर्थवशेन नियम इत्यर्थः । तत्र सप्तमी) समास आश्रीयमाणे अधिकरणकारकप्रधानो निर्देशः स्यात् । तत्राधिकरणस्य क्रियां प्रति गुणभूतत्वादाहुतिराराद्युपकारिका प्राप्नोति । षष्ठीसमासे तु सम्बन्धः प्रधानम् । प्राधान्यरूपश्च सम्बन्धः समाश्रीयते तत्राहुतिः संस्कारिका सामवायिकीत्यर्थः । ततः किम् ? आराद्युपकारकाच्च सामवायिकं गरीयः । ननु दृष्टार्थत्वे सामवायिकं गरीयो भवति । इह तूभयथाप्यदृष्टार्थाहुतिः, किमत्र गरीयस्त्वम् ? उच्यते सत्यमुभयथाप्यदृष्टार्थाहुतिः,किन्त्वयं विशेषः समवाये सत्युपकार्योपकारकयोः सम्बन्धः क्लृप्तो लभ्यते । उपकारस्तु काममदृष्टो भवतु । आराद्युपकारकत्वे तु कल्प्यः सम्बन्धः । किञ्च तत्र प्रकरणेनैकवाक्यता कल्प्या सामवायिकत्वे तु क्लृप्तेन वाक्येनैव विनियोग इति विशेषः । वाक्यविशेषणत्वेन [3]तु यूपमच्छे-

१. पा० सू० २-१.४४

२. पा० सू० ६. ३. ९. ( )कुण्डलान्तर्गतो भागः कपुस्तके खण्डितः ।

३. तु नास्ति. क.

ष्यतेति प्रकृतो यूपस्सम्बध्यते—यूपीये स्थाणाविति । तस्मात् षष्ठीसमासो न्याय्यो न सप्तमीसमास इति । भाष्ये च लक्षणोपेतः सप्तमीसमास इति न्यायापेत इत्यर्थः । तस्मात्स्थाणुसंस्कारार्थाहुतिः स्थाण्वभावात्साद्यस्क्रे न कर्तव्येति ॥ १२ ॥

[ ७—स्वाहाकाराधिकरणम् ]

**प्रयाजे च तन्न्याय्यत्वात् ॥ १४ ॥ सि०**

ननु पूर्वपक्षेऽपि स्वाहाकारदेवतापक्षेऽपि संकारकमेवेदम् । कथम् ? अन्यत्र हि कर्मान्तरेऽग्न्यादिवत्स्वाहाकारो विहितः [1]तस्य स्मारकोऽग्न्यादेरिव स्वाहाग्निमित्यादिर्मन्त्रो भविष्यति । तेन मान्त्रवर्णिकमेव स्वाहाकारस्यापि देवतात्वमिति संस्कारकता । "स्वाहाकारं यजति" इति तु नामधेयमिति । क्वान्यत्रेत्याह-नारिष्टहोमादिषु । परिहरति—न; कुतः ? शब्दपदार्थनिर्देशात् । "स्वाहाकारं यजति" इति हि कारप्रत्ययान्तः शब्दपदार्थकोऽयं शब्दस्तस्यैव देवतात्वमाह, न स्वाहार्थस्य । ततः किमित्याह—स्वाहाशब्दो हि मन्त्रगतः कारप्रत्ययाभावादर्थस्य स्मारको न शब्दस्य । स चार्थः स्वाहाकारमन्त्रेणैव देवतात्वेन चोद्यते, न शब्दः । तेनार्थस्यैव देवतात्वं मन्त्रवर्णात्स्यात् । अतो वाचनिकोऽयं देवताविधिरन्यत्र स्वाहाकारस्य देवतात्वाप्राप्तेः । सम्प्रति पूर्वपक्षमाह—करणेन मन्त्रेण देवतावगम्यते । यथा "सूक्तवाकेन प्रस्तरम्" इति करणविभक्त्या सकलस्य सूक्तवाकस्य करणत्वावगमात्तद्बलेनाग्न्यादीनां[2] देवतात्वमायुरादीनाञ्च फलत्वं गम्यते । न चायं स्वाहाग्निमित्यादिमन्त्रः करणत्वेन श्रुत्या निर्दिष्टः यतस्तद्गतानामग्न्यादीनां [3]देवतात्वमायुरादीनाञ्च फलत्वं कल्प्येत । क्रमप्रकरणविनियोज्यो ह्यसौ । न चाविज्ञातसामर्थ्यं ताभ्यां विनियोक्तुं शक्यम् । न चाग्न्यादिप्रति-

---

१. तत्स्मारकः क.

२. देवतात्वं गम्यते. ख.

३. देवातात्वं कल्प्येत. क.

पादकस्य मन्त्रस्याविज्ञातदेवत्ये यागे सामर्थ्यमवगतम्। तेन वाचनिकं देवताविधिमाश्रित्य तत्रैवाग्न्यादिशब्दानां यथाकथञ्चित् प्रवृत्तिरङ्गीकर्तव्या। अतो नात्र मान्त्रवर्णिकी देवतेति। **ननु चाग्न्यादिशब्दः स्वाहाकारं न** कथञ्चिदपि **शक्नोति वक्तुम्** । **उच्यते—शक्ष्यति द्व्यर्थत्वान्मातृवत्।** तद्यथा मातृशब्दो [१]धान्यमातारं जननीञ्चाभिधत्ते, तद्वदग्न्यादिशब्दा अपि स्वाहाकारस्याग्न्यादीनाञ्च वक्तारो भवन्तीति।

सिद्धान्तमाह—**न द्वितीयान्तेन शब्देन देवतोच्यते,[२] प्रमाणाभावात्** । न हि द्वितीया देवतात्वं वक्तीति प्रमाणमस्ति । [ तस्याः ] कर्मवाचित्वाद्देवतायाश्च कर्मत्वाभावात् । **अपि च स्वाहाकारः शब्दपदार्थको न शक्नोति देवतां वक्तुम्** । न हि शब्दस्य देवतात्वमुचितम् । नाकसदामिन्द्रादीनां देवतात्वप्रसिद्धेरित्यन्वाचयमात्रत्वेनोपन्यस्तम् । अथवा—मन्त्रवर्णविरोधात् न देवतात्वं वक्तुं शक्नोति, अविरोधेनापि सम्भवादिति भावः। **तस्मान्मान्त्रवर्णिको देवताविधिः।** किञ्च स्वाहाकारेऽपि वाचनिकदेवताभूते मन्त्रेणापि स एव यथाकथञ्चिद् प्रतिपादयितव्यः। स च नारिष्टहोमादिषु विहित इति तत्संस्कारार्थ एव यागः स्यादिति नारादुपकारकत्वसिद्धिः। यत्तु करणविभक्तिनिर्देशाभावान्न मान्त्रवर्णिकी देवतेत्युक्तं तत्राह—**प्रकरणात्क्रमसहितात् करणभावोऽवगम्यते** मन्त्रस्य। न चासामर्थ्यं निश्चितं येन विनियोगो न स्यात्। सम्भवति हि यागे देवताप्रतिपादकस्य[३] मन्त्रस्य प्रकाशनसामर्थ्यम्। यदि हि यागोऽयं न स्यात् यागोऽपि वा देवतायुक्तः स्यात्ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं [४]निश्चीयेत, न त्वेतदस्ति। तस्माद् योग्यतास्तीत्यविहतो विनियोगः। सति च विनियोगे तद्वशादेव मन्त्रोक्तानामग्न्यादीनां प्रधानयागसम्बन्धिनामिह प्रत्यभिज्ञायमा-

---

१. धान्यस्य. क.

२. उद्दिश्यते बोध्यत इति च. मु. पा.

३. मन्त्रस्य नास्ति. ख.

४. निश्चीयते. ख.

नानां देवतात्वं गम्यते । ततः किमित्याह—**स्मरणञ्च प्रधानदेवतया अपेक्षितम्** अनन्तरायार्थम् । **अतस्तेनैवांशेन सम्बध्यते** । न हि दृष्टेऽपेक्षिते प्रयोजने सत्यदृष्टार्थता युक्तेति संस्कारार्थत्वसिद्धिः ॥ १४ ॥

[ ८—आग्नेयाज्यभागस्यारादुपकारकत्वाधिकरणम् ]

## तथाज्यभागाग्निरपीति चेत् ॥ १६ ॥ पू०

पूर्वेण न्यायेन पूर्वः पक्षः । सिद्धान्तमाह—

## समत्वाच्च ॥ १८ ॥ सि०

**आज्यभागयागो देवतामपेक्षते** निर्वर्तकत्वेन । **प्रधानयागस्तु देवतास्मारकं** [१]किञ्चिदपेक्षते । **तत्राज्यभागयागो देवतया विना न भवति । न तु प्रधानयागदेवता आज्यभागमेव स्मारकमपेक्षते,** अन्यथापि स्मरणसम्भवात् । तेनानपेक्षितत्वाद्यागो न देवताङ्गम् । अपेक्षितत्वात्तु देवता यागाङ्गम् । **तस्माददृष्टार्थ आज्यभागयागः** ।

नन्वस्मिन्व्याख्याने **स्वाहाकारयागोऽपि एवमेवादृष्टार्थ आपद्येत । यदि कश्चिद् ब्रूयात्तस्मिन्** स्वाहाकारे **मन्त्रे वक्ष्यमाणा देवताः सर्वाः क्रमेण** कीर्तिता **विद्यन्ते । तस्मात्ताद्रूप्यप्रत्यभिज्ञानात् तत्संस्कारकोऽयं** स्वाहाकारः, **न त्वाज्यभागे** तथा कीर्तितमस्तीति । **सत्यं विद्यते** [२]स्वाहाकारमन्त्रे देवताकीर्तनम्, तथापि **तन्निर्वर्त्यांशेनैव** स्थितो **यागो गुणभूतां देवतामाकाङ्क्षति । तस्मात् आज्यभागस्वाहाकारयोस्तुल्यत्वाद्** द्वयोरप्यदृष्टार्थत्वात् **कथं स्वाहाकाराधिकरणम्** ।

उच्यते—**स्वाहाकारयागो**[३] **हि** प्रथमं देवतया निर्वृत्तोऽपि सन् सामर्थ्याद् **विपरिवृत्य देवताप्रकाशनद्वारेणैवोपकरोति । तस्याश्च प्रकाशन-**

---

**१. यत्किञ्चित्. क.**

**२. स्वाहाकारे. क.**

**३. यागे हि. ख.**

मपूर्वेणैवापेक्ष्यते[१] । तदस्य दृष्टमेव प्रयोजनम् । तस्मिन् सति नादृष्टं कल्पयितुं शक्यते । तस्मात् संस्कारार्थः स्वाहाकारः । न त्वाज्यभागेऽपीदृशमेव प्राप्नोति । सत्यम् ,किन्तु विधानात्तादृशमेवापूर्वेण नापेक्ष्यते । विहिता हि बहवोऽन्ये देवतास्मरणोपायाः[२] आवाहनं स्वाहाकारः स्विष्टकृन्निगदः सूक्तवाक इति । तेषु सत्सु तादृशं तत्कार्यकरमेवान्यत्रापेक्षितम् ।[३] नन्वेवं तेषामप्येकेनैव कृतार्थत्वात् इतरेषां स्मरणार्थता न स्यात् । न, अविशेषात् । सर्वेषु हि विहितेषु यथाक्रमं यागदेवताः कीर्त्यमानाः प्रत्यभिज्ञायन्ते ।[४] तत्र न गृह्यन्ते विशेषाः—इदं संस्कारार्थमिदं नेति । आज्यभागे तु तादृक् प्रत्यभिज्ञाभावात् प्रत्युतावाहनादौ द्विःपाठेनान्यथात्वावगमात् न संस्कारकता । ननु बहुकृत्वोऽपि संस्मरणं प्रयोजनवदेव, अतः संस्कारता युक्तेत्याशङ्क्य सूत्रोक्तं मूलहेतुमाह—आज्यभागाविति च द्विसंख्या द्विवचनं श्रूयते । आद्यर्थ इतिकरणः । आज्यभागाविति यागयोर्देवतयोश्चाग्नीषोमाभ्यामिति द्विसङ्ख्या श्रूयते । सा च केनचित् समानधर्मयोगेन प्रवर्तते । तेन द्वयोरपि प्राधान्यं गुणत्वं वाश्रयणीयम् । न ह्येकेन द्विवचनशब्देनैकस्य प्राधान्यानुवादोद्देशाः अपरस्य गुणभावविधानोपादानानि कर्तुं शक्यन्ते, वैरूप्यापत्तेः । तत्र सोमः सोमदेवत्यकस्तावदारादुपकारक इत्यत्र [न]संशयः, अन्यत्र सोमस्य देवतात्वाभावात् । तद्वदग्निरपि आरादुपकारकः स्यादेवं द्विसङ्ख्या युज्यते, नान्यथा । तथासति हि सोमापेक्षयाज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयमग्न्यपेक्षया तु विपरीतमिति वचनव्यक्तिभेदाद् वाक्यभेदः स्यात् । तस्माद् द्वयोः समत्वादाग्नेयोऽप्यारादुपकारक इति ॥ १८ ॥

[ ६—पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम् ]

## पशावपीति चेत् ॥ १९ ॥ पू०

स्वाहाकाराधिकरणे पराजितोऽपि भूतभव्यन्यायो हेत्वन्तरविवक्षया

---

१. उपेक्षते. क.    २. स्मरणप्रायाः. ख.

३. न चैवं. ख.    ४. ते तत्र. ख.

पुनरुपन्यस्त इत्युक्तम् । विशेषश्च 'गुणो वा स्यात्कपालवत्' इत्यनेन सूत्रावयवेनोक्तः । तत्र भाष्यमेवञ्च सतीत्याद्यर्थतोऽनुभाष्य व्याचष्टे—अपि च यस्य प्रधानभूता संस्कार्या देवता तस्य धर्मा एव न प्राप्नुवन्ति। तत्रानिरुक्तः स्विष्टकृदिति[1] दर्शनं नोपपद्यते। कथं धर्मा न प्राप्नुवन्ति ? उच्यते—विकृतौ सादृश्येन धर्मप्राप्तिः। विसदृशयोस्त्वग्नीषोमयोः कथं धर्मप्राप्तिरित्यभिप्रायः काक्वा व्यञ्जनीयः। किं वैसादृश्यमित्याह—प्रकृतौ गुणभूतयोरग्नीषोमयोः धर्मा विहिताः, विकृतौ तु प्रधानभूतयोरित्येतद्विसदृशम् वैसादृश्यमित्यर्थः। अयमभिप्रायः परिचोदयतः पूर्वपक्षवादिनः। तस्मादिहापि गुणभूतावेवाग्नीषोमौ। एवञ्च सौत्रामण्यामनुत्कर्षः पुरोडाशानां भविष्यति। अन्यथोत्कर्षः स्यात्। सिद्धान्तस्तु—दृष्टे सत्यदृष्टकल्पनानुपपत्तेः संस्कारार्थत्वम्, धर्मप्राप्तिश्च तद्देवतात्वसामान्यादेव भविष्यति, नहि सर्वात्मना सादृश्यमपेक्षितमिति। यत्तु सौत्रामण्यामुत्कर्षः स्यादित्युक्तम्, तत्राख्याविकारन्यायेन पशुदेवतानामेवेन्द्रादिशब्दैरभिधानादनुत्कर्ष इत्युक्त्वा परिहारान्तरं सूत्रभाष्ययोरुक्तं तदाक्षेप्तुमनुभाषते—

**अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥२३॥**

अस्यां सौत्रामण्यां चोदकेन पशुदेवता पशुपुरोडाशयागे प्राप्नोति, पशुपुरोडाशश्च तत्र द्रव्यं प्राप्नोति। तत्र पशुदेवताया द्रव्यान्तरं[2] ग्रहो विधीयते। पशुपुरोडाशस्य च द्रव्यस्य देवतान्तरमिन्द्रादि विधीयते। यागस्त्वविकृत एवावतिष्ठते। यथाभ्युदितेष्ट्याम्। स च यागो द्रव्यद्वयं देवताद्वयञ्च सम्पादयितुम् अभ्यस्यते यथा सोमयागः। आक्षिपति—इमे सूत्रभाष्ये अयुक्ते। कथम् ? अस्यां हि सौत्रामण्यां प्रधानभूताः पशुयागा

---

१. निदर्शनम्. मु. पा.

२. चोदकतः प्राप्तान् पुरोडाशानुद्दिश्य "अश्विनं गृह्णाति" "सारस्वतं गृह्णाति" इति पुरोडाशस्थाने सुराग्रहविधिरिति भावः।

आम्नायन्ते । देवतासंस्कारद्वारेण च तेषु चोदकेन **पशुपुरोडाशाः प्राप्नुवन्ति । तत्र वाचनिकोऽयं देवताविधिः ।** वचनेनैव पुरोडाशान् उद्दिश्य देवता विधीयन्ते । **तस्मादप्राकृतकार्याः** पशुपरोडाशयागाः **वचनसामर्थ्याद्भवन्ति** । तेन पशुपुरोडाशयागस्य देवतान्तरं विधीयत इत्येतावन्मात्रं सत्यम् । यत्तु ग्रहो द्रव्यं तस्मिन्नेव यागे विधीयत इति तन्मृषेत्याह—**योऽत्र ग्रहो देवतासम्बद्धः स पशुपुरोडाशयागेन न सम्बध्यते । कथम्?**[1] **अविपरिवर्तमानत्वात् ।** अयमभिप्रायः—न तावत् "आश्विनं ग्रहं गृह्णाति" इति पुरोडाशदेवतोद्देशेन द्रव्यान्तरं विधीयते, गृह्णातेः प्रमादपाठापत्तेः । तेन द्रव्यदेवताविशिष्टं ग्रहणं विधीयते । यदि परं तस्य यागापेक्षायां विपरिवृत्त्या पुरोडाशयागसम्बन्धः स्यात्, सा च नास्तीति । कथमविपरिवृत्तिः? यावता चोदकप्राप्तस्य पशुपुरोडाशयागस्यास्त्येव विपरिवृत्तिः । उत्तरम्—**अविधानात् । कथमविधानम्?** यावतास्त्येव चोदकेन विधानमिति । उत्तरम्—अत्र हि **विकृतावुपकारा अतिदिश्यन्ते** न पदार्थाः । तत्र तेषां स्वरूपेण विपरिवृत्तिः । यत्र तु तेषां **प्रकरणं तत्र विपरिवृत्तिः तच्च**[2] प्रकरणं **प्रकृतावेव । अभ्युपेत्य ब्रूमः**—अस्तु नाम पुरोडाशयागस्येह **प्रकरणं विपरिवृत्तिश्च, तथापि स** ग्रहदेवतासम्बन्धेन **न सम्बध्यते** प्रमाणाभावात् । ननु द्रव्यदेवतासम्बन्धो यागापेक्षः प्रकृतमेव सोमयागवद् ग्रहीतुमर्हति, तद्वदेव चाभ्यासोऽपि भविष्यति अत आह—**नैतत्सोमयजिना तुल्यम् । तत्र** हि **"सोमेन यजेत" इति सोमविशिष्टो यागो विधीयते** देवतापेक्षः । **ऐन्द्रवायवादीनि च ग्रहणानि सोमयागे द्रव्यस्यैव** रसावस्थानीतस्य **संस्कारकाणि,** द्रव्यान्तरस्यानिर्देशात् । **तानि च** सर्वाणि **ग्रहणानि** समुच्चित्यापर्यायव्यापारेण **प्रकरणेन गृह्यन्ते ।** अतोऽर्थात्तत्र यागाभ्यासः । **इह तु पशुपुरोडाशयागद्रव्यस्य** पुरोडाशस्य **ग्रहदेवतया न कश्चित्संस्कारः क्रियते,** द्रव्यान्तरमत्र गृह्यते सुरा पयो वा । पुरोडाशयागश्च

---

१. अपरिवर्तमानत्वात्. ख.

२. एतच्च. मु. पा.

देवतान्तरावरुद्धो नानया देवतया सम्बध्यते। तस्माद्यागान्तरमिदम्। **नन्वभ्युदितेष्टिवद्भविष्यति**। तत्र हि देवतान्तरयुक्तोऽपि दर्शयागो देवतान्तरेण सम्बध्यते। **नैतदभ्युदितेष्ट्या तुल्यम्**। तत्र हि निमित्तेऽभ्युदये सति देवताविभागो विधीयते। यागस्तु विद्यत एव। ( स च देवतां प्रति साकाङ्क्षो युक्तं यद्वैकृतीभिर्देवताभिर्यागापेक्षाभिः सम्बध्यते। **नत्विह तथा विभागवचनम्** ) **येनाभ्युदितेष्ट्या तुल्यं स्यात्**। **ननु प्रत्यक्षः पशुपुरोडाशयागः** क्लृप्त इत्यर्थः। **आनुमानिकस्तु**[१] कल्प्यो ग्रहदेवतासम्बन्धेन **यागः**। **तस्मान्न** क्लृप्तहानेन **यागान्तरं** कल्प्यम्। **नैतदेवम्, यदि** अ(?) **तस्मिन्नेव यागे** [२]**केनचित्प्रकारेण निवेशः** तथा यागान्तरं [न] कल्प्येत। न तु सम्भवति निवेशः, [३]द्रव्यान्तरदेवतान्तरावरुद्धत्वात्पुरोडाशयागस्य। न चाहत्य तमेव यागमुद्दिश्य देवतान्तरं विधीयते। ग्रहदेवतासम्बन्धमात्रं त्विह विधीयते स तु यागापेक्षः। प्रकृतस्य यागस्य [४]द्रव्यदेवतान्तरावरुद्धत्वात् यागान्तरं कल्पयति। नन्वभ्यासमाश्रित्य तत्रैव यागे द्वयोरपि देवतयोः समुच्चयसम्भवेनाविरोधान्न यागान्तरानुमानं युक्तमत आह-**यदि च प्रत्यक्षे यागे सति तस्यैवाभ्याससम्भवादानुमानिको न लभ्येत ततो दीक्षणीयादीनि सर्वाण्यकर्मान्तरत्वाद्** अधर्मकाणि **भवेयुः**। दीक्षणीयादिष्वपि प्रत्यक्षयागाश्रवणात् प्रकृतस्यैव सोमयागस्याभ्यासमाश्रित्य तत्रैव "अग्नावैष्णवमेकादशकपालम्" इत्यादयो द्रव्यदेवतासम्बन्धा निविशेरन्निति स एवात्र यागः स्यात् न यागान्तरम्। तत्र को दोषः? अधर्मकाणि भवेयुः, चोदकेन तत्र धर्मप्राप्तिर्न स्यात् अपूर्वत्वात्सोमयागस्येति। किञ्च **यदि** च सौत्रामण्यामेको **यागो** ग्रहे पुरोडाशे च तथा सति कर्मैकत्वात् **एक एव विध्यन्तः प्राप्नोति**।

---

( ) कुण्डलान्तर्गतो भागः कपुस्तके त्रुटितः

१. कल्प्यस्तु क. ख.

२. येनकेनचित् मु. पा.

३. द्रव्यान्तरेति नास्ति ख.

४. द्रव्येति नास्ति क.

चोदयति [१]द्वे चात्र द्रव्ये, कात्रानुपपत्तिः? अस्यार्थः—यागभेदेऽपि समानतन्त्रत्वात् प्रयाजादयः सकृदेव कर्तव्याः द्रव्यसंस्काराणामेव त्वावृत्तिः। ते चैकस्मिन्नपि यागे द्रव्यभेदादावर्तन्त एवेति कात्रानिष्टापत्तिरिति। उच्यते—तत्रैकस्यैव द्रव्यस्य संस्कारः प्राप्नोति। द्वितीयस्य तु द्रव्यस्य चोदक एव न प्राप्नोति, नहि ( द्रव्यानुवर्ती चोदकः, तद्भेदाद् भिद्येत। किञ्चैकस्यैव च [२]प्रदानं भवति द्वितीयन्तु प्रोक्षणादिव [ द ] दृष्टार्थं ( त्वं ? ) प्राप्नोति, [ प्रदे ] यत्वे प्रधानावृत्तिप्रसङ्गात्। ततश्च तस्य प्रदेयधर्मा न स्युः। तस्माद् द्रव्यद्वयस्य तावन्न याग एकस्मिन्निवेशः। देवतयोस्तु यद्येकत्र निवेशः स्याद् विकल्पेन स्यात्, आवृत्तिभयात् समुच्चये। तस्माद् ग्रहदेवतासम्बन्धेन यागान्तरं विधीयते। तत्तु पशुपुरोडाशन्यायेन पशुदेवतासंस्कारार्थम्, पुरोडाशयागस्तु वचनात् अप्राकृतकार्य इति। यत्तु प्रयाजवत् स एव यागोऽभ्यस्तो देवतान्तरेण युज्यत इत्युक्तम्, तदपि न तुल्यमित्याह—प्रयाजानुवादेन चाहत्य वाक्येनैव सङ्ख्या विधीयते। अतस्तत्र यागान्तराशङ्कैव नास्ति। इह तु यागान्तरमिति वैषम्यम्। तस्मात् सूत्रभाष्ये यथा कथञ्चिदेवमपि सम्भवत्यनुत्कर्ष इत्येवमन्वारुह्यवादत्वेन नेये ॥३३॥

[ १०—चरोः प्राकृतहविर्बाधाधिकरणम् ]

## चरुहविर्विकारः स्यादिज्यासंयोगात् ॥३४॥ पू०

चरुशब्दस्य स्थाल्यां सर्वप्रसिद्धत्वाद् अनेकार्थत्वस्य चान्याय्यत्वात्। यदप्रसिद्धमोदनवचनत्वं लाक्षणिकमाश्रित्य स्थालीवचनत्वमाश्रीयते। सा चानदनीयत्वान्न हविष्ट्वार्हेति कपालविकारः। सौर्यमिति च तद्धितः सत्यपि हविष्ट्वे हविराधारतामात्रेणैवोपपन्नः। सम्बन्धमात्रेऽपि हि सम्भवत्येव तस्येद-

---

१. 'द्वे चात्र द्रव्ये। कात्रानुपपत्तिः उच्यते-तत्रैकस्यैव द्रव्यस्य संस्कारः प्राप्नोति' इति मुद्रित पाठः

() कपुस्तकेऽत्र ग्रन्थयातः

२. प्रधानं मु. पा.

मिति। तस्मात्स्थाली कपालानां विकार इत्येकः पक्षः। सत्यं स्थाली चरुः। स तु तद्धितश्रुत्या हविः न ह्यसावर्थान्तरे तद्धितः, तथा सति द्रव्यदेवतासंयोगाभावाद् यज्यश्रवणाच्च याग एव न लभ्येत। तस्माद्देवतातद्धितोऽसौ। वचनाच्चानदनीयेनापि यागो न दुष्यतीति द्वितीयः पक्षः। सिद्धान्तमाह **चरुशब्दस्योभयत्रापि लोकेऽस्ति प्रयोगः स्थाल्यामोदने च**। नन्वेवं स्थालीवचनत्वमपि स्यादत आह—**न च प्रयोगमात्रेणैव शब्दार्थो भवति अशब्दार्थोऽपि हि प्रयोगो लौकिको दृश्यते। कथं खलु नियमः? उच्यते— प्रयोगतोऽज्ञानात् स्मृतेरेव नियमः। ओदने च** चरुशब्दस्मरणं न स्थाल्याम्। तस्मादोदनेन पुरोडाशस्य बाधः ॥३४॥

[ ११—चरोः स्थाल्यां पाकाधिकरणम् ]

## सकपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥४५॥ पू०

सङ्ख्याकपालयोरेकपदनिर्दिष्टयोरन्यतरस्य प्रकृतावशास्त्रार्थत्वात्सङ्ख्यायाश्च चरावनुग्रहासम्भवात् कपालमात्रस्य चाशास्त्रार्थत्वेनाननुग्राह्यत्वाद्यत्र क्वचित्पक्तव्यश्चरुरित्येकः पक्षः। एकपदनिर्दिष्टयोरपि स्वरूपपृथक्त्वान्न सङ्ख्यानिवृत्त्या कपालनिवृत्तिरपि युक्ता। न हि सङ्ख्यार्थं कपालम्, येन तन्निवृत्तौ निवर्तेत। तस्मात् कपाले श्रपणमिति द्वितीयः। प्रकृतावूष्माधारत्वेन कपालेनोपकृतम्, उदकगतेनोष्मणा [१]च चरुः सिध्यति। तस्मादिह कपालं न प्राकृतकार्यं कर्तुमलमिति निवर्तते। तस्मात्तदतिरिक्ते यत्र क्वचित् पक्तव्य इति (क) तृतीयः पक्षः। सिद्धन्तस्तु—गृह्णीम एतत्कपालं निवर्तत इति, न तु

---

१. च नास्ति. ख.

**क. प्रकृतौ 'अष्टाकपालम्' इति पदेनाष्टत्वसंख्यायाः कपालस्य चोपादानम्। तत्र संख्यायाश्चरौ न प्रयोजनम्, कपालमात्रस्य चातिदेशविषयत्वं नास्तीत्युभयोर्निवृत्तिरिति यत्र क्वचिच्चरोः पाक इति प्रथमपक्षः। संख्याया उपयोगाभावेन निवृत्तावपि कपालस्योष्माधारत्वेन प्रकृतावुपयोगात् तत्कार्यकरत्वेन चरावपि कपालस्य प्राप्तौ सत्यां कपालगतोष्मणा चरोः पाकासम्भवादुदक-**

यत्र क्वचित्पाकः। चरुत्वाभिव्यञ्जको हि पाकः स्थाल्यामेवाभिनिर्वर्त्यते। तस्मात्स्थाल्यां पाक इति। किं भवति प्रयोजनमिति ? पूर्वाधिकरणप्रयोजनमिदानीं स्थाल्यां पाक इति स्थिते पृच्छ्यते। तत्र स्थाल्या हविर्विक्रियत इत्यस्य पक्षस्य स्पष्टो विशेषः। इतरयोस्तु पक्षयोः को विशेषः, पक्षद्वयेऽपि स्थाल्यां पक्वस्य हविष्ट्वादिति प्रश्नः। उत्तरन्तु सुगमम्।

एवं वा—

शक्यत्वादविरोधाच्च पेषणादि न बाध्यते।
कार्याभावात्त्वकर्तव्यं व्युद्धृत्यासादनं तथा॥
अर्थकारितमेतद्धि प्राकृतौ न तु चोदितम्।
एवञ्जातीयको धर्मश्चरौ बाध्य इति स्थितम्॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य प्रथमः पादः॥

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य द्वितीयः पादः॥

[ १—कृष्णलचरौ पाकानुष्ठानाधिकरणम् ]

## कृष्णलेष्वर्थलोपादपाकः स्यात्॥१॥ पू०

विक्लित्तिः पचेरर्थः। न च सा कृष्णलेषु सम्पादयितुं शक्यते। रूपरसगन्धस्पर्शानां पूर्वेषां तिरोभावोऽपूर्वाणाञ्चाविर्भावो नाम विक्लित्तिः। तस्मान्न कृष्णलेषु सम्भवतीति। वचनमप्यशक्यार्थविधानादकिञ्चित्करम्। तस्मादकर्तव्यः पाकः। कश्चित्त्वाह-न विक्लेदनं पाकः, किन्तु तद्धेतुभूताग्न्यवयवसंयोगफलको व्यापारः पचेरभिधेयः, तस्य पूर्वभावित्वात्। स च कृष्णलेष्वपि सम्भवतीति। स एवं शिक्षयितव्यः—वत्स किं नाश्रौषीः 'नागृहीतविशेषणा विशेष्यबुद्धिः' इति। यदि विक्लित्तिहेतुर्व्यापारः शब्दार्थः, ततो विशेषणभूता विक्लित्तिस्तावदाकृतिन्यायेन पूर्वतरमभिधेया। सा चेदभिहिता

---

गतेनैव तेन पाकसम्भवात् कपालस्य प्राकृतकार्यकरत्वाभावेन निवृत्तौ यत्र क्वचित्पाक इति तृतीयः पक्षः।

तत एव स्वकारणभूतव्यापारप्रतीतिसिद्धेर्न तस्याप्यभिधेयता सम्भवतीति विक्लृत्तिरेवाभिधेया। कथं तर्हि देवदत्तः पचतीति देवदत्तस्य कर्तृत्वम्? धातूपात्तव्यापारं हि कारकं कर्तेति। नैवम् प्रत्ययार्थो व्यापारः। तद्विशेषणं धात्वर्थः। तेन यस्य व्यापारः प्रकृत्यर्थावच्छिन्नः प्रत्ययेनोच्यते स कर्तेति कर्तृत्वलक्षणम्। तत्र केभ्यश्चिद्धातुभ्यः परः प्रत्ययः प्रकृत्यर्थसमानाश्रयमेव व्यापारं प्रतिपादयति। यथा विक्लिद्यन्ति तण्डुला इति। केभ्यश्चित्त्वन्याश्रितमेव। यथा रोचते मोदका इति। रुचेर्हीच्छाभिधेया, तिङभावे रुचिशब्देनेच्छामात्रप्रत्ययात्, तथापि तत उत्पन्नः प्रत्यय इष्यमाणव्यापारं प्रतिपादयतीति मोदकानां कर्तृत्वम्। केभ्यश्चित्त्वनियमेन। यथा पचन्ति तण्डुलाः पचति देवदत्त इति। तस्माद्विक्लित्तिरेवाभिधेया। यथोक्तं **भगवता मण्डनेन**—

'विक्लित्तिमात्रसङ्कल्पविशेषैकावलम्बिनौ।
ज्ञायमानतदर्थत्वान्नेष्टावन्याभिधायिनौ' ॥ इति।

भवतु वा विक्लित्तिहेतुर्व्यापारः [1]पाकः। सोऽपि कृष्णलेषु न सम्भवति। विक्लित्त्यसम्भवे हि कथं तद्धेतुभूतो व्यापारः सम्भवेत्। अथाग्न्यवयवसंयोगमात्रफलो[2] व्यापारः पाकस्तथापि सत्याकाशस्यापि पाक्यत्वप्रसङ्गः, तत्राप्यग्न्यवयवसंयोगसद्भावात्। अथ पार्थिवद्रव्यगताग्न्यवयवसंयोगफलको व्यापारः पाकस्तथापि कृष्णलेषु न सम्भवति, तेषां तैजसत्वात्। तस्मादकर्तव्यः पाक इति पूर्वः पक्षः।

सिद्धान्तस्तु—सत्यं विक्लित्तिः पचेरर्थः तथापि कृष्णलेष्वपि सम्भवति। न हि रूपरसाद्यन्यथाभावो विक्लित्तिः, किन्तु येनाग्न्यवयवसंयोगेनानुष्णस्पर्शवति द्रव्ये औष्ण्यं प्रकाशते सैव विक्लित्तिः। सा च कृष्णलेष्वपि सम्भवतीति नाशक्यर्थं वचनम्। तेन चोदकप्राप्तः पाकोऽर्थाभावान्निवर्तमानोऽनेन वचनेन प्रतिप्रसूयते। ततश्चादृष्टार्थो भवति सौत्रामण्यामिव

१. पाक. नास्ति. क.

२. संयोगमात्रफलः क.

पशुपुरोडाशयागः। यद्यपि न सम्भवेत्पाकस्तथापि न वचनानार्थक्यम्, लक्षणया तापमात्रविधेः सम्भवात्। तस्मात्पाकः कर्तव्य इति ॥१॥

[ २—कृष्णलेष्वर्थलोपादुपस्तरणाभिधारयोर्बाधाधिकरणम् ]

**उपस्तरणाभिधारणयोरस्मृतार्थत्वादकर्म स्यात् ॥२॥ सि०**

"चतुरवत्तं जुहोति" इति चतुरवदानसंस्कृतस्य होमसम्बन्धः श्रुतः। तदर्थं चतुरवत्तं सम्पादनीयम्। तत्कथमिति "उपस्तृणात्यभिधारयति द्विर्हविषोऽवद्यति" इति दृष्टमेव चतुरवत्तसम्पादनमुपस्तरणाभिधारणयोः प्रयोजनम्। तच्च कृष्णलेष्वप्यलुप्तम्। अमृताहुतिवचनं त्वर्थवादमात्रमित्युक्तं "तथा-चतुरवत्तस्याप्त्यै" इति। तस्मात्कर्तव्ये उपस्तरणाभिधारणे। उच्यते—"चतुरवत्तं जुहोति" इत्यवत्तस्य होमो विधीयते। तस्य हविषो द्विरिति सङ्ख्या विधीयते। तस्य च हविषः स्रुगसंसर्गार्थतया उपस्तरणाभिधारणे विहिते। ततश्च लब्धं चतुष्ट्वमिति नित्यानुवादश्चतुःशब्देन विवक्षितः। न ह्यर्थान्तर-विधिपरे वचनेऽर्थान्तरमनुवादतयापि सम्भवद् विधानमर्हति। तस्माद्धविषो द्विरवदाय तस्योपस्तरणाभिधारणाभ्यामसंसर्गं सम्पाद्य होतव्यमित्येतावान्छा-स्त्रार्थः। कृष्णलेषु तु विशदत्वात् संसर्गप्रसक्तिर्नास्तीत्यर्थलोपादकरणं तयोरिति ॥ २ ॥

[ ३—कृष्णलचरौ भक्षाबाधाधिकरणम् ]

**भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात् ॥१३॥**

**स्याद्वा निर्द्धानदर्शनात् ॥१४॥**

**वचनं वाज्यस्य प्रकृतौ स्यादभागित्वात् ॥१५॥**

**वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥१६॥**

भक्षणामित्यादिरियं चतुःसूत्री कर्तृसंस्कारार्था भक्षा इत्येतमर्थं प्रतिपादयति। तेन कृष्णलचरौ न प्राप्नुवन्ति, असंस्कारकत्वात्। न हि तानि भक्ष्यमाणानि पुरुषं संस्कुर्वन्ति। तस्माच्चोदकेनाप्राप्तोऽयं भक्षो

**वचनाद्विधीयते** "हिरण्यस्य निरिव धयन्तो भक्षयन्ति । चुश्चूषाकारं भक्षयन्ति" इति । अत्र पूर्वपक्षवादी–वचनमिदमाज्यस्य भक्षणं विधत्ते । तथाहि दृष्टार्थता भवति, अज्यस्य प्रीतिकरत्वात् निर्द्धानचुश्चूषाकरणयोश्चानुवादलाभात् । हिरण्यस्य तु भक्षणमदृष्टार्थं स्यात् । चुश्चूषाकरणञ्च न नियमेन प्राप्तमिति तदपि विधातव्यं स्यात् । तस्मान्न कृष्णलानां भक्ष इति मन्यते । सिद्धान्तस्तु-कृष्णलानां भक्षणमिदम् । तेषां[१] हि प्रकरणम् । आज्यस्य तु तद्विशेषणत्वेन निर्देशात् नात्र सम्बन्धः । प्राकृतकर्तृसंस्कारार्थाभावेऽपि द्रव्यप्रतिपत्त्यर्थतया दृष्टार्थमेव भक्षणम् । असत्याञ्च गतौ विशिष्टविधानमदोष इति ॥१६॥

[ ४—कृष्णलचरौ सहत्वविधानाधिकरणम् ]

**एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥१७॥ सि०**

सकृत्त्वे सहत्वे चैकधा शब्दस्योपपन्नत्वादनियम इति प्राप्ते ब्रूमः । यत एवायं शब्द उभयथाप्युपपन्नः अत एव कांस्यभोजिन्यायेन चोदकप्राप्त-भक्षान्तराबाधाय सहत्वमेव विधीयते । अत्र भाष्यम्–'ननु च[२] वाचनिक इह भक्षोऽप्राकृतो न तु प्राकृता विहृताः[३] प्राप्नुवन्तीति । उच्यते—पुरुषसंस्कारा-र्थत्वेन[४] न प्राप्नुवन्ति द्रव्यसंस्कारार्थत्वेन[५] तु प्राप्नुवन्तीति' । तत्प्रतीकेनानु-भाष्य पृच्छति–**कोऽभिप्रायोऽस्य ग्रन्थस्य** । पूर्वाधिकरणे प्रीत्यर्थत्वादप्राप्तिः[६] प्राकृतानामुक्ता । कथमिदानीं प्राप्त्यभिधानमिति भावः । उत्तरम्–**नैते कर्तृसंस्कारार्था** भक्षाः । स [भक्षण] **कर्ता गुणभूतोऽत्र, प्रधानभूता भक्षाः**[७] । भक्ष्यन्त इति भक्षा द्रव्याणि । तेषां प्राधान्यं कथम् ? प्राशित्रमिडामिति

---

१. एषां क.
२. च नास्ति मु. पु.
३. प्राप्तुमर्हन्तीति मु. पा.
४,५. संस्कारार्थेन क. ख.
६. प्राप्तिं प्राकृतानामुक्त्वा क.
७. भक्षाः नास्ति क.

द्वितीयान्तो भक्षक्रियां[१] प्रति प्रधानभूतो ग्रहवत्। कर्ता तु क्रियायां गुणभूत उपादीयते अध्वर्युवच्छब्दतस्तावदेवं प्राधान्यं वस्तुतश्च द्रव्यप्राधान्यमेव गम्यते। कृत्स्नं हि द्रव्यमुदरप्रक्षेपेण संस्क्रियते न तु कर्तुः कृत्स्नस्य संस्कारः। न ह्येतावता तस्य सामर्थ्यं जन्यते। दृष्टार्था च कृतप्रयोजनस्य द्रव्यस्य प्रतिपत्तिः। ननु कर्तृसंस्कारेऽपि दृष्टमेव प्रयोजनम्। सत्यम्; उक्तं तु द्रव्यस्य कृत्स्नस्य संस्कारो न[२] कर्तुः कृत्स्नस्यास्तीति। मन्दं तत्र प्रयोजनम्। अपि च सोमेऽतितिक्तकटुकेऽत्यन्तमेव उपकारः[३] संस्कारो नास्ति अपकारस्तु कदाचित्स्यात् सम्भवेत्। अपि च जायतां नाम कर्तुरपि संस्कारः, तथापि कृतप्रयोजनं तावद् द्रव्यं प्रतिपत्तिमपेक्षते। तच्च वचनात्कर्तृषु प्रतिपाद्यते। तस्य यदि कर्तृसंस्कारोऽपि नियमप्रयोजनमनुनिष्पादि भवति, तथापि सत्यविरोध एव। न तु स विवक्षितः। नैतावता द्रव्यार्थता हीयते। तस्मात् प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि प्राप्नुवन्तीति तेषां सहत्वविधानमनुपपन्नमिति। कथं तर्हि पूर्वाधिकरणमत आह–या चासौ पूर्वा चतुःसूत्री सानेन न्यायेन विरुद्धा प्रत्याख्येयैव। कृत्वा चिन्तया नेयेत्यर्थः। तथाहि [४]यदा प्रीत्यर्थाः प्राकृता भक्षाः तदा किं कृष्णलेष्वस्ति भक्षो नेति। तत्र प्रीत्यभावात् वचनस्य चाज्यपरत्वात् नास्तीति पूर्वः पक्षः। प्रकरणात् कृष्णलविषयमेवैतद्वचनं तस्मादस्तीति सिद्धान्तः। केचित्तु [५]प्रीत्यविनाभूत एव व्यापारो भक्षणशब्दार्थः तस्मात्कृष्णलेषु वचनमप्यशक्यार्थमित्येतामाशङ्कां निवर्तयितुं पूर्वाधिकरणमित्याहुः। तत्तु मन्दम्, न हीयं शङ्का सम्भवति, पाषाणादिष्वपि लोके भक्षयतिप्रयोगात्। न चास्याः

---

१. भक्षः क्रियां मु. पा.

२. न कर्तव्यः मु. पा.

३. उपकारः नास्ति क.

४. यदि ख.

५. प्रीत्या क.

शङ्कायाः प्रतिपादनं निराकरणं वा सूत्रभाष्ययोर्दृश्यते । तस्मात्पूर्वैव न्यायतो ग्रन्थतश्च व्याख्या ज्यायसीति ॥१७॥

[ ५—कृष्णलचरौ परिहरणीयस्य ब्रह्मसंबन्धाधिकरणम् ]

## सर्वत्वञ्च तेषामधिकारात् स्यात् ॥१८॥ पू०

नावश्यं सर्वस्यैव ब्रह्मभागस्य प्रकृतौ परिहारोऽस्ति । किञ्चित् परिहरणेऽपि तद्भागत्वोपपत्तेः। यथा द्व्यवदानमात्रेणापि सकलस्याग्नेयत्वम्, एवमेकदेशेऽपि परिहृते भक्षिते च सकलस्य ब्रह्मभागत्वमुपपन्नम् । तस्माद् यद् ब्रह्मणे परिहरति तत्सर्वं नैकदेश इत्येवं सर्वत्वं विधीयते । अथवा यद् ब्रह्मणे सर्वं तत्परिहरति, न तु किञ्चिदपि वर्जयेदिति वचनव्यक्तिः। तस्मान्न पुरुषापनयः ॥१८॥

सिद्धान्तमाह —

## पुरुषापनयो वा तेषामवाच्यत्वात् ॥१९॥ सि०

यदुक्तं सर्वत्वं विधीयत इति तत्राह—**यदि तावत् केवलो ब्रह्मशब्दोऽनुवादः, सर्वमिति विधीयते** यद् ब्रह्मणे तत्सर्वमिति, **तथा सति न ज्ञायते किं तत्सर्वं** यद् विधीयत **इति** । न हि सर्वमित्येतावता किञ्चिज् ज्ञायते । **अथ यदि ब्रह्मपरिहारशब्दावनूद्येते**-यद् ब्रह्मणे परिहरतीति, **तथापि तत्सर्वमिति न विधीयते** प्राप्तत्वात् । यदा हि **कस्यचिद्भागस्य परिहारः प्राप्तः कस्यचिन्न**, तदा सर्वमिति **विधानमुपपद्यते । सर्वेषान्तु ब्रह्मभागानां** तेन भक्षयितव्यत्वात् [१]**प्राप्त एव परिहारः**, अन्यथा भक्षसंस्कारलोपे च तेषां वैगुण्यापत्तेः । अतः सर्वपदं तावन्न विधेयम् । **अथापि ब्रह्मणे सर्वमिति** ब्रह्मपदं सर्वपदं **चानूद्य परिहारो विधीयते** । यद् ब्रह्मणे सर्वं तत्परिहरतीति-**तथापि प्रथमपक्षोक्तो यो दोषोऽ**ज्ञानाख्यः **स तृतीये**ऽपि पक्षेऽस्मिन् प्रसज्यते । न हि यद् ब्रह्मणे सर्वमित्येतावता किञ्चिज् ज्ञायते विशेष्यानिर्देशात् । अथ यत्प्रकृतौ ब्रह्मभागत्वेन परिक्लृप्तं तदनूद्यते यद् ब्रह्मणे सर्वमिति, तथापि

---

१. परिहारः प्राप्त एव मु.पा.

तस्य परिहारः प्राप्तत्वादविधेयः। तस्मात् सिद्धान्ते ब्रह्मपदं विधीयते न सर्वपदं नापि परिहरतिपदम्। प्राकृतं परिहर्तव्यमनूद्य तद्ब्रह्मण इत्येतावद् विधीयते। परिहरतीत्यनेनैव चाविशेषात् सर्वपरिहरणानुवादात्सर्वग्रहणमतन्त्रमिति न विशिष्टानुवाददोषः। तेन प्रत्याम्नानात् ऋत्विजामन्येषां भक्षापनय इति ॥ १९ ॥

[ ६–कृष्णलचरौ यथाकालभक्षणाधिकरणम् ]

## पुरुषापनयात्स्वकालत्वम् ॥२०॥ सि०

सर्वं ब्रह्मणे परिहर्तव्यम्, यच्च तस्मै परिहर्तव्यं तत् "एकधा ब्रह्मण उपहरति" इति वचनाद् एकस्मिन्नेव काले परिहर्तव्यम्। परिहारश्च भक्षार्थ इति भक्षोऽप्येककाले स्यात्, अतः कालान्तराणां बाधः। सत्यमेककाले परिहारः, तथापि[1] भक्षस्य प्राकृतकालबाधे नास्ति प्रमाणम्। शक्यते हि सहपरिहृतमपि यथाकालं भक्षयितुम्। तस्मादबाधः कालानामिति। केचित्तु परिहरणमपि प्राकृतकालमेवेत्याहुः। तदयुक्तम्, "एकधा ब्रह्मण उपहरति" इति एककालविधानात्। ननु प्राकृतानां ब्रह्मभागानामिदमैकध्यविधानम्। न; अश्रवणात्। न हि श्रूयते यत्प्राकृतं ब्रह्मणे परिहरति तदेकधेति। किन्तु यद् ब्रह्मण उपहरति तदेकधेति। सर्वञ्च परिहरणं ब्रह्मण एव, "सर्वं ब्रह्मणे परिहरतीति" वचनात्। अपि च ब्रह्मग्रहणमप्यतन्त्रमेव नोद्दिश्यमानमुपहरणं विशेष्टुमर्हति। तस्मादुपहरणमात्रमुद्दिश्यैककालत्वं विधीयते। तच्च ब्रह्मण एव भवतीति ब्रह्मग्रहणं नित्यानुवादः। तस्मादेककाले परिहरणम्। भक्षास्तु प्राकृतकाला इति ॥२०॥

[ ७—कृष्णलचरौ व्यपदेशबाधाधिकरणम् ]

## एकार्थत्वादविभागः स्यात् ॥२१॥ सि०

पुरुषान्तराणामपनीतत्वात् 'इदं होतुः' [2]इति व्यादेशो निवर्तताम्।

---

१. भक्षस्य बाधे. क.

२. इत्यादि. ख.

"इदं ब्रह्मणः" इत्येतावन्मात्रन्तु सम्भवात् कर्तव्यमिति मन्यते। विभागोऽयं ब्रह्मसम्बन्धार्थः क्रियते, नादृष्टार्थः। तस्मादेकस्मिन् भक्षयितर्यर्थलोपाद्वयादेशो निवर्तते ॥ २१ ॥

[ ८—स्वयंकर्तृककर्मसु दक्षिणादानबाधाधिकरणम् ]

**ऋत्विग्दानं धर्ममात्रं स्यात् ददातिसामर्थ्यात् ॥२२॥ पू०**

[ समान ] पदश्रुत्या दानस्य कर्तव्यता, दानेनर्त्विगानमनं कर्तव्यमिति वाक्याद् गम्यते। तच्च दुर्बलम्। अपि च नियतपरिमाणता मन्त्रादीतिकर्तव्यतावत्ता प्रयासाननुरूप्यञ्चादृष्टार्थत्वेऽवकल्पते नान्यथा। तस्माद्धर्ममात्रम्। नैवम्, न हि दृष्टे सत्यदृष्टार्थता युक्ता। अवश्यञ्च दानेनान्यत्कर्तव्यम्, अन्यथा विध्यानर्थक्यात्। तत्र प्राकरणिकक्रतुगतादृष्टकल्पनातो वाक्यावगतकर्मसंयुक्तर्त्विग्गता दृष्टानतिरेव ज्यायसीति। परिमाणादिनियमस्तु काममदृष्टार्थो भवतु नैतावता दानस्वरूपमप्यदृष्टार्थं भवत्यवघातादिवत्। ननु 'अन्यो वा स्यात् परिक्रयाम्नानात्' इति परिक्रयबलेन पुरुषान्तराणां कर्मसंयोगः, अन्यथा स्वयंकर्तृकमेव स्यात्। कर्मयुक्तेभ्यश्च दानात्परिक्रयार्थत्वमितीतरेतराश्रयं स्यात्। नैष दोषः; प्रागपि परिक्रयादस्त्यन्येषामप्य नियमेन प्राप्तिः। प्रयोगवाक्यावगतस्य स्वामिकर्तृत्वस्य साक्षात्प्रणाड्या वोभयथाप्युपपत्तेः। तद्यावदेव विना कारणेन प्रणाडीसमाश्रयणमन्याय्यमिति न्यायेन साक्षात् कर्तृत्वं नियन्तुमुपक्रम्यते, तावदेव दृष्टोपकारिपरिक्रयविधिं दृष्ट्वा तद्बलेन कर्त्रन्तरप्रवेशो यजमानस्य च प्रयोजककर्तृत्वं निश्चीयते। अपि च नात्र दानमात्रं विधीयते। अपि तु ऋत्विग्भ्यो दानं ऋत्विक्छब्दश्च (यागकर्तृवचनः। न चात्मनि दानं सम्भवतीत्यन्येषां) यागकर्तृत्वं निश्चीयते। निश्चिते च तस्मिन् यागकर्तृभ्यो दानं परिक्रयार्थं भविष्यति। दक्षिणाशब्दश्च परिक्रयार्थ एव घटते नादृष्टार्थे। तस्मात् परिक्रयार्थं तेन यासु विकृतिषु स्वयंकर्तृत्वमाहत्य विहितं तत्रार्थलोपान्निवर्तते दानमिति ॥२२॥

---

( ) कपुस्तके स्खलितोऽयमंशः।

[ ९—सत्रे शेषभक्षबाधाभावाधिकरणम् ]

## शेषभक्षाश्च तद्वत् ॥२९॥ पू०

शेषभक्षाणामपि प्रीतिहेतुत्वेनानत्यर्थत्वं मन्यते। देवतायै सङ्कल्पिते द्रव्ये यजमानस्यर्त्विक्साम्याभावान्नेदं दानम्, नतरां परिक्रयार्थम् ॥२९॥

[ १०—सत्रे ऋत्विग्वरणबाधाधिकरणम् ॥ ]

## वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात्स्वकर्मत्वात् ॥३४॥ सि.

ऋत्विङ् नामादृष्टम्। तदुत्पादकञ्च वरणमित्यदृष्टार्थत्वादृतुयाज्यावरणवत्सत्रेऽपि स्यादित्याशङ्का। नेदमदृष्टं ऋत्विक्त्वम्, प्रमाणाभावात्। वरणमपि दृष्टार्थमेव। तस्मात् सत्रे न स्यादिति ॥३४॥

[ ११—सत्रे परिक्रयबाधाधिकरणम् ]

## परिक्रयश्च तादर्थ्यात् ॥३५॥

"न ह्यत्र गौर्दीयते" इत्यादि प्रतिषेधोऽसत्यां प्राप्तौ न घटत इति विशेषाशङ्का। अनुवादत्वेन तूपपत्तेर्न प्राप्तिः कल्पयितुं शक्यत इति ॥३५॥

[ १२—उदवसानीये दक्षिणादानादीनां बाधाभावाधिकरणम् ]

## उदवसानीयः सत्रधर्मा तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥३९॥

न च [१] सत्रोदवसानकाले उदवसानीयः, लक्षणा हि तथा स्यादिति। कोऽस्य भाष्यस्याभिप्रायः। उत्तरम्—न तावत्सत्रमस्मिन्वाक्ये विधीयते विहितत्वात्। नापि सत्रमन्यत्र क्वचिदङ्गत्वेन विधीयते। नहि फलवतः सत्रस्य निष्फलोदवसनीयाङ्गत्वं युक्तम्। न सत्रेऽपि किञ्चिद्विधीयते भवत्पक्ष इति सत्रं पारिशेष्यात् परार्थमुदवसानीयकाललक्षणार्थमुच्चार्यते। सिद्धान्ते तत्रैषा लक्षणा स्यादित्यभिप्रायः। तस्माल्लक्षणापरिहाराय सत्राङ्गत्वेनोदवसानीयो विधीयते। फलञ्चैवं न कल्पयितव्यं भविष्यति। ननु परिसमाप्ते

---

१. नच सत्रस्योदवसानीयाङ्गत्वम्, लक्षणा इति मु. पा.

सत्रप्रयोगे श्रूयमाणं कथं तदङ्गं स्यादत आह---वाजपेयेनेष्ट्वेति च सत्रादुदवसायेति च तुल्यं मत्वा पूर्वपक्षं करोति। तेन यथा[1] समाप्तेऽपि वाजपेये श्रूयमाणो बृहस्पतिसवस्तदङ्गमेवमुदवसानीयोऽपि सत्राङ्गमिति । उत्तरः पक्षोऽभिधीयते—नैतयोस्तुल्यता वाजपेयसत्रक्रिययोः[2] । वाजपेयेनेष्ट्वेति हि निर्वर्त्यानुष्ठाय पूर्वक्रिया[या]मन्यत्क्रियान्तरं विधीयते तदङ्गतया निर्वृत्तिः,तत्र वाजपेयक्रियात्यागस्य, तेन न त्याग इत्यर्थः। ननु त्यागोऽपि गम्यतेऽत आह लक्षणया तु त्यागो गम्यते न तु शब्दतः। कथमित्याह—एतदेव पूर्वोक्तमिष्ट्वा शब्देनोच्यते समापनम् न तु त्यागः । ननु समापनमपि क्रियातो भिन्नमेव कथं श्रौतम् ? अथ तच्छ्रौतं त्यागोऽपि श्रौतः स्यादत आह[3] क्रियाविशेषाः क्रियाया एवावस्थाविशेषा ह्येते प्रारम्भानुष्ठानपरिसमाप्तयः। न तु तथा त्यागः। स ह्यत्यन्तव्यतिरिक्तं क्रियान्तरम्। ( तस्मान्न त्यागः शब्देनोच्यते। अनुक्ते च तस्मिन् अयं वाक्यार्थो भवति-वाजपेयं यथोक्तं निर्वर्त्य नोत्स्रष्टव्यमिदमपरं ) तदङ्गं कर्तव्यमिति। इह तूत्पूर्वोऽवस्यतिः श्रुत्यैव त्यागं वदति सत्रकर्मणः[4]। *तत्र यदन्यद्विधीयते तस्याङ्गता नास्ति। कुतः पूर्वकर्मणो निःशेषपरिसमाप्तत्वादपरिसमाप्तौ वा त्यागायोगात्*। तत्र यद्युदवसायशब्दोऽनुगृह्येत कथमङ्गं स्यात्। अथाङ्गम्, उदवसायशब्दो बाध्येत। तस्माद् वाजपेयक्रियाया न त्यागः, सत्रक्रियायास्तु त्याग इत्यतुल्यता। तस्मादनङ्गम्। न च लक्षणा, सत्रोदवसानमेव श्रौतं निमित्तीकृत्य पृष्ठशमनीयं विधायिष्यते, न भविष्यति लक्षणा। फलकल्पना च श्रुतिवशाददोष इति ॥३६॥

---

१. यथा नास्ति ख.

२. वाक्ययोः मु. पा.

३. क्रियाविशेषायैतेषाम् मु. पा.

( ) कुण्डलान्तर्गतो भागः खण्डितः क.

४. कर्मण्यन्यत्र मु. पा.

** चिन्हान्तर्गतो भागः खण्डितः क.

[ १३—पृथक्शमनीयस्यैकैकश्येनानुष्ठानाधिकरणम् ]

**तेषां तु वचनाद्द्वियज्ञवत् सहप्रयोगः स्यात् ॥४१॥ पू०**

यजेरन्नित्युपादेयत्वेन श्रुतत्वाद् बहुवचनस्य स्याद् **विवक्षा। न त्वितरेतरनिरपेक्षा** उदवसाने कर्तारः **तथैव** स्थितानाञ्च यागो विधीयते। अतः सोऽपि परस्परनिरपेक्षाणामेव। सत्यमुदवसातॄणां यागः ते तु यद्यप्युदवसाने निरपेक्षाः, **तथापि यागे सापेक्षा** भवन्ति **द्वियज्ञवत्। यथा राजपुरोहितौ फलं प्रति** प्रधानभूताववविवक्षितसाहित्यौ परस्परनिरपेक्षौ **यागं प्रति तु गुणभूतौ** सापेक्षौ। **कथं** यागे गुणत्वम्? उत्तरम्—**यागो** हि **विधीयमानो** गुणभूतं **कर्तारमाकाङ्क्षति।** तथापि कथं सापेक्षत्वमित्याह—**तत्र** यागे **कर्तृसङ्ख्या श्रूयते** स्वपदगता **( सायुज्यकामौ ) यजेयाताम्**इति। ततश्च द्विकर्तृकत्वात् यागस्य सापेक्षता कर्त्रोः। नन्वेवमपि यागाकाङ्क्षितस्य कर्त्रंशस्य सङ्ख्यापरिच्छेदयोग्यस्य यागं प्रति गुणत्वेन विधेस्तद्विशेषणभूतयो राजपुरोहितयोर्गुणत्वमेव स्यात्, न प्राधान्यमत आह—**सैव सङ्ख्या** यागाङ्गत्वेनात्र **विधीयते** न तु **कर्ता,** तस्याशाब्दत्वात्। नतरां तद्विशेषौ राजपुरोहितौ। यदि न कर्ता विधीयते कथं तह्यनुष्ठानमत आह—**कर्तृगामिन्युपग्रहविशेषात्** क्रियाफले सति **क्रियामकुर्वन् क्रियाफलेन न सम्बध्यत इत्यर्थात् क्रियां करिष्यति** न तु विधानात्। अतः शब्दवृत्त्या प्राधान्यमेवेति। कथं तर्हि सङ्ख्याविवक्षा? अत आह—**अस्याम् ईदृश्यामर्थप्राप्तकर्त्रवस्थायां द्विवचनं विवक्ष्यते।** सङ्ख्यायास्तावत्पदश्रुत्या यागाङ्गत्वं प्रत्ययश्रुत्या च भावनाङ्गत्वं प्रतीयते। न च तत्र [ तत् ] सम्भवति आर्थिककर्तृद्वारेणाङ्गत्वोपपत्तेरिति। किं पुनरेवमाश्रीयते—यावता सामानाधिकरण्यादाख्यातोपात्तसङ्ख्यापरिछेद्यत्वयोग्यकर्त्रंशविशेषणत्वेनैव राजपुरोहितयोरन्वयो युक्तः। अत आह—**यदि च राजपुरोहितौ द्विवचनविशेषणार्थमुच्चार्येयातां तथासति यागं प्रधानभूतं न कश्चित् कुर्यात्।** न ह्यस्वार्थं व्यापारं कश्चिदनुतिष्ठति। अतस्तयोर्यागोऽङ्गत्वेन विधीयते, यथा मलिनः स्नायादिति। अतः **प्रधानभूतौ।** तेनांशेनाविवक्षितसाहित्यावपि कर्त्रंशेन विवक्षितसाहित्यौ सापेक्षौ

भवतः। अन्यथा सङ्ख्याहान्या यागस्य वैगुण्यप्रसङ्गात्। एवमिहापि उदवसाने[1] निरपेक्षा यागे च सापेक्षाः, बहुत्वस्य यागाङ्गत्वेन विवक्षितत्वादिति। अपि च पदवेलायामुदवसायेति पदमनपेक्ष्य यजेरन्नित्येतत्पदालोचनवेलायां तावद्बहुवचनं निर्विघ्नं विधीयते। ततः किमित्याह—तादृशञ्च विवक्षितसङ्ख्यं परिपूर्णं पदान्तरेण सम्बध्यते। तस्माद्विवक्षितं यागे बहुत्वम्। तद्वशेन सापेक्षाश्च कर्तारः यागे इतरेतरनिरपेक्षास्तु उदवसाने कर्तारो भवन्ति। न त्वैकध्यमाश्रयणीयम्। अतः परमन्तरागर्भिणीमुल्लङ्घ्य सिद्धान्तं तावच्छुद्धि[बुद्धि]विक्षेपपरिहाराय व्याचष्टे।

**एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥४३॥ सि०**

**एकैकशस्तु इतरेतरनिरपेक्षास्तावदुदवसाने कर्तारः।** कुतः? **अर्थप्राप्तत्वादुदवसानस्य।** यदि हि शास्त्रीयमुदवसानं स्यात् ततस्तस्य यथाशास्त्रमनुष्ठानाद्बहुकर्तृकता स्यात्, न तु तदस्तीति। किञ्च **अभाव्यत्वाच्च** स्वाभाविकमुदवसानं निरपेक्षाणामेव भवतीति न सापेक्षता विधातुं शक्यते। ततः किमित्याह—**यादृशाश्चोदवसाने कर्तारः तादृशा एव पृष्ठशमनीये। तस्मात्तत्राप्यविवक्षितं बहुवचनम्। ननु राजपुरोहितवदेकत्र निरपेक्षा इतरत्र सापेक्षा भवन्तीत्युक्तं यजेरन्निति च श्रुत्यैव** पदान्तरमनपेक्ष्यैव **बहुत्वं गम्यते।** तत्कथं पदान्तरालोचनेनाविवक्षितं स्यात्? परिपूर्णस्य हि पदस्य पदान्तरसम्बन्धो न तु पदान्तरसम्बन्धवशेनार्थनिर्णय इति। **सत्यं गम्यते न तु विधीयते। कथम्? प्राप्तत्वात्सङ्ख्यायाः। कुतः प्राप्तिः? क्त्वा[2] श्रवणाद्धि** पदान्तरमनपेक्ष्यैव **द्वौ प्रयोगौ (न?) गम्येते।** उदवसानप्रयोगस्तदुत्तरकालञ्च प्रयोगान्तरम्। **ये च पूर्वस्मिन् प्रयोगे कर्तारस्त एवोत्तरस्मिन्नपी**त्येतदपि तत एव गम्यते। **पूर्वस्मिंश्च** सत्रत्यागप्रयोग उदवसानाख्ये **इतरेतरनिरपेक्षाः ते तादृशा एवोत्तरस्मिन् प्रयोगे[3]** तेन

---

१. उदवसानेऽपि क.

२. क्त्वाप्रत्ययश्रवः मु. पा.

३. प्रयोगत० क्रियाविशोद्वाऽप्राप्तः मु. पा.

क्त्वाश्रुत्यैवोत्तरक्रियायामपि निरपेक्षकर्तृबहुत्वं प्राप्तमिति न विधेयम्। किन्तर्हि विधीयत इत्याह— **क्रियाविशेष एवाप्राप्तोऽतः स एव विधीयते** न तु सङ्ख्या। न चाविहितमङ्गं भवति। बहुत्वन्तूदवसातॄणां बहुत्वात्प्राप्तानुद इति ॥

[ १४–पृष्ठशमनीये ऋत्विग्वरणबाधाभावाधिकरणम् ]

## तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ सि०

अन्तरागर्भिणीदानीं व्याख्यायते। निरपेक्षस्यैकैकस्य कर्तृत्वे सति न ऋत्विग्भिर्विना समग्रं कर्मानुष्ठातुं[1] शक्यमिति सिद्धमृत्विग्वरणमिति पूर्वपक्षो न शक्यते वक्तुमिति पूर्वाधिकरणे पूर्वपक्षस्थे चिन्तेयं क्रियते। पूर्वपक्षमाह— **य एवोदवासने कर्तारः त एव पृष्ठशमनीये विधीयन्ते। कुतः? सामानाधिकरण्यात् उदवसाय यजेरन्निति।** यदि त्वन्येऽपि **कर्तारः पृष्ठशमनीयस्य**[2] **भवेयुस्ततस्सामानाधिकरण्यं न स्यात्।** तस्मान्नर्त्विजो वरीतव्या इति। उच्यते—प्रधानमात्रे हि समानकर्तृकत्ववचनं भवति यजेरन्निति। न हि विशेषणं श्रूयते साङ्गस्तैः पृष्ठशमनीयः कार्य इति। ततः किमित्याह— **साङ्गवचनाभावात् किमिति चोदकबाधो भवति।** यत्तु सामानाधिकरण्यमिति तत्राह—प्रधानभूतयजमानव्यापारकर्तृत्वेऽपि **सामानाधिकरण्यमुपपद्यत** एव। तस्मादृत्विजो वरीतव्या इति ॥

[ १५—सारस्वतकामेष्टौ श्रूयमाणस्य दानस्यापूर्वार्थताधिकरणम् ]

## कामेष्टौ च दानशब्दात् ॥ ४४ ॥

पृष्ठशमनीयवत्परिक्रयार्थं दानमित्युक्तम्। तत्र चोदयति—**ननु नैवात्र दानं परिक्रयार्थम् दक्षिणाशब्द [1] श्रवणात्।** पृष्ठशमनीयवदिति चेत्तत्राह— **पृष्ठशमनीये तु विद्यते दक्षिणाशब्दः** "सहस्रदक्षिणेन यजेरन्" इति। तस्मात् पूर्वपक्षासम्भवात् **कथमेतदधिकरणम्**। **उच्यते—'भक्षाश्रवणा-**

---

१. कर्मानुष्ठानं. ख.

२. पृष्ठशमनीये. मु. पा.

**दानशब्दः परिक्रये'** जै.सू.३.४.४८ इत्यत्र सत्यपि दक्षिणाशब्दे **दानं परिक्रयार्थं** कर्मकरेष्विति **न्यायेन स्थापितं पूर्वपक्षे**। स तर्हि तत्रैव निराकृतः। अत आह—**स चात्रापि न्यायः**। तत्र द्रव्ये समत्वादिति यजमानस्य देवतार्थे द्रव्ये स्वाम्याभावात् परिक्रयार्थता निरस्ता। अत्र तु स्व एव दीयमाने किमिति परिक्रयार्थता न भवति। **तथा च भाष्यम्—दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थं इत्युक्तमिति**। कर्मकरेषु स्यादेवम्। इह तु सत्रत्वान्न ते सन्तीत्याशङ्कापरिहारार्थो भाष्य**ग्रन्थः**। **न चैतत्सत्रमिति**। तस्य **कोऽभिप्रायः?** यावता गवादिवत् कामेष्टिरपि सत्रमेवेति। उत्तरम्—[१]**अस्मिन् हि सारस्वते सत्रे गोआयुषी एकाहौ** यथाक्रमं यजनीययोः **पौर्णमास्यमावास्ययोरन्होः** शिष्टेष्वन्तरालेषु पूर्वपक्षापरपक्षाहःसु **यथाक्रमं दर्शपूर्णमासौ,** पूर्वपक्षे दर्शः अपरपक्षे पूर्णमासः। **एतदेव सारस्वतं सत्रं** यदुत **गौश्चायुश्च दर्शपूर्णमासश्च**। **न त्वत्र कामेष्ट्याः** चोदना। तस्मादाह **न चैतत्सत्रमिति**। **इतरश्चोदयिता ब्रवीति—सत्रस्याङ्गभूतमेतद् भवति, साङ्गं च सत्रं** यजमानैरेव **कर्तव्यम्**—"ये यजमानास्त ऋत्विजः" इति **द्वादशाहे** सर्वर्त्विजेषु यजमानविधानादिति। तत उत्तरवाद्याह—**प्रकरणाच्च सत्रस्य साङ्गस्य** स्वयंकर्तृकता **नाङ्गानामिति कोऽभिप्रायः**। उत्तरम्—**द्वादशाहे** ह्यार्त्विज्येषु पदार्थेषु **यजमानाः कर्तारो विधीयन्ते**। अतस्तेष्वेव द्वादशाहीयेषु पदार्थेषु **स्वयंकर्तृकता** न कामेष्टौ। कथमित्याह—**प्रकरणाच्च सत्रस्य साङ्गस्य प्रकृतौ** [२]येषु स्वय **कर्तृकतोक्ता** सा प्रकरणात्प्रकृतावेव। **इह तु चोदकेन** तस्याः प्राप्तिः। अतः कार्यद्वारेण प्राप्यमाणा **तेष्वेवाङ्गेषु स्वयंकर्तृकता प्राप्नोति**। **कामेष्टिस्त्वपूर्वमङ्गम्**। **न च प्राकृतस्य कस्यचिदङ्गस्य कार्ये वर्तते**। तस्मात् स्वयंकर्तृकताया निवृत्तिः। यो हि **यूपावट-**

---

१. मुद्रितपुस्तके—'अस्मिन् सारस्वते सत्रे श्रावश्च ते गोआयुषी यजमाना पयोरनन्होः शिष्टिः स्वाहा दर्शपूर्णमासौ एतत्सारस्वतं सत्रम्, नात्र कामोऽस्याश्चोदकेन' इत्यशुद्धः पाठः परिदृश्यते।

२. येषु नास्ति० क०

स्तरणबर्हिषि बर्हिधर्माप्राप्तौ न्यायः स इहाप्यस्ति। न त्वनेन न्यायेन यूपावटास्तरणेऽध्वर्युः कर्ता न प्राप्नोति। उच्यते—ज्योतिष्टोमे[१] साङ्गे प्रत्यक्षेण समाख्यारूपेणोपदेशेन कर्तारो विधीयन्ते। अतो यूपावटास्तरणस्य याजुर्वैदिकत्वात् स्वयमेव विनैव चोदकेनाध्वर्युः सिद्ध्यति। यत्र तु चोदकेन कर्तृप्राप्तिः तत्र[२] नियतेष्वेव प्राकृतेषु पदार्थेषु प्राप्नुवन्ति, नाधिकेषु ॥

## वचनं वा सत्रत्वात् ॥४५॥ सि०

प्राकृता एव यजमानाः कामेष्टिं करिष्यन्ति, लाघवात्। न हि तेषु सत्स्वन्यमार्गणं युक्तम्। नन्वस्या न स्वयंकर्तृकता प्रत्यक्षा। चोदकेनापि न प्राप्नोतीत्युक्तं तत्राह—सत्यं कामेष्टौ प्रत्यक्षेण वचनेन कर्तारो न प्राप्नुवन्ति तथा चोदकेनापि नैव, तथापि प्रसङ्गेनात्र प्राप्नुवन्ति। प्रयोगाङ्गं हि कर्तारः। प्रयोगश्च साङ्गस्य प्रधानस्यैकः। स चापूर्वमप्यङ्गं व्याप्नोति। तस्मिन् यजमानैः क्रियमाणे सिद्धापूर्वाङ्गस्यापि निर्वृत्तिरिति न कर्त्रन्तरं मृग्यम् ॥

[ १६—द्वेष्याय दक्षिणादानकथनस्यापूर्वार्थताधिकरणम् ]

## द्वेष्ये चाचोदनाद्[३] दक्षिणापनयः स्यात् ॥४६॥ सि.

इह तु दक्षिणाशब्दात् परिक्रयार्थं दानम्। अङ्गस्यापि च[४] वचनबलात् प्रधानदक्षिणातो दक्षिणान्तरं नानुपपन्नमिति। सिद्धान्तस्तु-"द्वेष्याय दक्षिणां ददाति" इति वचनाद् ऋत्विजश्च द्वेष्यस्याभावात् अकर्मकराय दानमेतद-दृष्टार्थमिति। अपि च परिक्रयार्थे सति दक्षिणापनयः स्याच्चोदकप्राप्तोऽ-न्वाहार्योऽपनीयेत तत्र चोदको बाध्येतेत्ययुक्तोऽयं भाष्यग्रन्थः। कथम्? पत्नीसंयाजनवेलायां ह्यन्वाहार्यो दत्तः। पत्नीसंयाजनवेलायां हि नैमित्तिकी

---

१. सोमे मु. पा.

२. नियतेष्विव. क.

३. अचोदनेन. क.

४. च नास्ति. क.

वैश्वानरेष्टिर्विधीयते। तत्र[1] "तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात्" इति श्रुतम्। तस्याश्च वेलायामन्वाहार्यो दत्तपूर्वः प्रागेवानुयाजेभ्यस्तस्य दत्तत्वादिति न तस्य पुनः प्राप्तिरिति। ननु यद्यपि दर्शार्थोऽन्वाहार्यो दत्तस्तथापीह विधीयमानस्येष्टयन्तरस्यापनीयेत। तत्रापि हि चोदकेनान्वाहार्यः प्राप्नोत्येवेत्यत आह—**यद्यपि निमित्ते इयमिष्टिर्विधीयते तथापि** सा दर्शाङ्गमिति प्रधानदक्षिणयैव **प्रसङ्गेन** कार्यस्य **निर्वृत्तत्वात्** दीक्षणीयादिष्विव **नान्वाहार्यश्चोदकात्प्राप्नोति**। सूत्रस्य त्वयमर्थः—द्वेष्ये च यद्दानं तस्य दक्षिणात्वमपनीयेताचोदितत्वाद्द्वेष्यस्यर्त्विज इति॥ ४६॥

[ १७—अस्थियज्ञे जीवतामधिकाराधिकरणम् ]

## अस्थियज्ञो विप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम्॥

अत्र भाष्यकारेण याजयितृत्वमात्रमुपदिष्टं न यष्टृत्वमिति चोदयित्वा यष्टृत्वमेवात्र विधीयते ण्यर्थस्त्वृत्विग्व्यापारोऽनुवाद इत्युक्तम्। तदुपपादयति—यदि ण्यर्थो[2] विधीयेत तदादृष्टं **कल्प्येत यजन्तं याजयितुः किमपि भवतीति**। तच्चाशक्यम्, परस्मैपदश्रुत्या हि पारार्थ्यं ण्यर्थस्य गम्यते। तच्च फलकल्पने विरुध्येत। तस्मादफलं याजनं न विधातव्यम्। तद्विधाने च [3]**न कश्चिद्यष्टुमिच्छेत्**। [4]यजनस्याविहितत्वेनाफलत्वात्। **अतो ण्यर्थो** रागप्राप्तर्त्विग्व्यापारा**नुवादः**। यागस्तु विधीयते। स तु किमस्थ्नामुत जीवतामिति। तत्रास्थिशब्दश्रुतिबलाद् यथाकथञ्चिद् अस्थ्नामेव यागः। प्रकारश्च भाष्ये दर्शितः। लिङ्गं च दर्शितम्। शरीरशारीरिणोरभेदोपचारात्

---

१. "यदि पत्नीस्संयाजयन् कपालमभिजुदुयाद्वैश्वारं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात्" इति समग्रं वाक्यम्।

२. 'यदि स्पर्शोऽभिधीयेत' इति वार्त्तिकग्रन्थस्य विवरणपरमिदम्।

३. न च कश्चित्. क.

४. यजमानस्य. क.

मृत एव पुरुषोऽस्थिशब्देनोच्यते। अतो मृताधिकारमिदं कर्म। तस्यैव फलं प्रयच्छति। जीवन्तस्त्वृत्विक्स्थानीया इति।

सिद्धान्तस्तु-न कथञ्चिदपि तेषां यष्टृत्वं सम्भवतीति लक्षणयेतरेषामस्थिसम्बन्धादस्थिशब्देनाभिधानम्। तस्माज्जीवतामधिकारः। एवञ्च सत्राङ्गत्वात्फलं न कल्पनीयं भविष्यतीति॥

[ १८—अस्थियागे इष्टिजपसंस्काराणां बाधाधिकरणम् ]

## यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टितदर्थत्वात्॥

कृत्वा चिन्तेयम्। तत्राविशेषात् सर्वं याजमानं कर्तव्यमिति यस्य बुद्धिः स्यात् तं प्रत्युच्यते। जपा इष्टिः संस्काराश्च वास्थ्नः केशाद्यभावात् निवर्तेरन्। ननु यागान्तरवत् दीक्षणीयापि कस्माज्जीवद्भिरेव न क्रियते। अस्थिसंस्कारार्थतया लुप्तार्थत्वादिति ब्रूमः। पुरुषसंस्कारद्वारेण हि दीक्षार्था सा। क्रत्वङ्गभूतयमनियमसङ्कल्पाश्च दीक्षेत्युच्यते। मानसश्च संकल्पः। न चास्थ्नामस्ति मनस्तस्मान्निवर्तेतेति॥

[ १९—अस्थियज्ञे शुक्रान्वारम्भणादीनां बाधाभावाधिकरणम् ]

## क्रत्वर्थं तु क्रियेत गुणभूतत्वात्॥५०॥ सि०

स्वातन्त्र्यलक्षणं कर्तृत्वम्। न चाचेतनानां स्वातन्त्र्यमुपपद्यत इति शुक्रान्वारम्भणादावपि न कर्तृत्वमिति मन्यते। न चैतन्यापेक्षं स्वातन्त्र्यम् अचेतनानामपि 'स्थाली बिभर्ति' इत्यादिषु तत्र तत्र कर्तृत्वदर्शनात्। यस्यैवान्यानपेक्षयाख्यातोपात्तव्यापारसमवायसम्भवः स एव कर्ता। तस्मादन्वारम्भणादि कर्तव्यमिति॥

[ २०—अस्थियज्ञे पुरुषार्थानां बाधाधिकरणम् ]

## काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि॥

**ननु काम्यानामतिदेश एव नास्तीत्युक्तमष्टमे। कथमियं चिन्ता? सत्यमतिदेशो नास्ति किन्त्विह 'अस्थीनि यजेरन्' इत्येतावच्छ्रूयते, न तु**

किञ्चिन्नामधेयम्, यतः कर्मभेदः स्यात्। **तत्र कः पुनर्याग** इत्यपेक्षायां **स्तोत्रे स्तोत्र** इति लिङ्गदर्शनात् **सोमयाग** एव ज्योतिष्टोमोऽयमित्यध्यवसीयते, कर्मान्तरकल्पनाया अन्याय्यत्वात्। अथ दर्शपूर्णमासयागः कस्मान्न भवत्यत आह। **नैष्टिकः** लिङ्गविरोधादिति भावः। स च सोमयाग **उपदेशेनैव** धर्मवान्। तस्मात्तत्र गुणकमानां प्रवृत्तेश्चिन्ता घटते। तत्पुनरिदमसम्बद्धम्, प्रकरणान्तरेण कर्मान्तरत्वात्। अतः परिहारान्तरमाह—**अथवा द्वे कृत्वाचिन्ते**। न केवलमस्थ्ना यज्ञं कृत्वा चिन्त्यते, अपितु [१]कामानामतिदेशोऽस्तीति कृत्वा चिन्त्यते। तत्र कामशब्दः फलत्वद्योतनार्थः, न तु कामनैव तन्त्रम्। तस्मान्नीचैस्त्वादीनामनिवृत्तिः। नैवम्, उक्तं हि तृतीये गुणकामा अपि यजमानस्येति। प्रार्थ्यमानञ्च फलं नान्यत्। न च यजमानस्यास्ति प्रार्थना। तस्मान्निवृत्तिः काम्यानाम्॥

[ २१—अस्थियज्ञे सूक्तवाकगताशासनबाधाधिकरणम् ]

**ईहार्थाश्चाभावात् सूक्तवाकवत् ॥५२॥ सू०**

नीचैस्त्वादीनां काम्यत्वेन विधानादसति कामे युक्ता निवृत्तिः, सूक्तवाकस्त्वकामसंयोगेन श्रवणात् नित्यः। तत्संयुक्ताश्चायुरादिशब्दाः न वाक्यान्तरम्। तस्मात्तेषामनिवृत्तिः। उच्यते—असत्यपि कामसंयोगे श्रुतिविनियुक्तसकलसूक्तवाककरणत्वानुपपत्त्या फलत्वमायुरादीनामङ्गीकर्तव्यमिति तृतीये चतुर्थे नवमे चाभिहितम्। यजमानाशास्यतया च तेषां निर्देशात् तथाभूतानामेव फलत्वम्। न च मृतस्याशासनं ज्ञायते। तस्मादायुरादिवचनानां निवृत्तिः। एवं "यं कामयेत पशुमांन्स्यात्" इत्येवमादीनामपीति॥

[ २२—अस्थियज्ञे ऋत्विक्कामानां निवृत्त्यधिकरणम् ]

**सू० स्युर्वा होतृकामाः ॥५५॥ पू०**

अधिकरणान्तरं वा। नात्र यजमानाशासनेन प्रयोजनम् ऋत्विक्काम-

---

१. काम्यानां क.

निर्देशात् तस्मान्मृतस्यापि यदि वसीयांस्यादिति तां होता कामयते तत उच्चैस्तरां वषट्कुर्यादिति पूर्वः पक्षः।

सिद्धान्तस्तु—प्रधानवाक्यगतेनात्मनेपदेन "यां वै काञ्चित्" इत्यादिवचनेन चैवञ्जातीयकमपि तावत्फलं यजमानस्यैव न होतुः इष्टलक्षणञ्च फलम्। तस्माद्यजमानप्रार्थनानुसारी यो होतुः कामः स एव निर्दिश्यते "यं कामयेत वसीयान्" इति, न तु तन्निरपेक्षः। तस्मादेवमादीनामपि निवृत्तिरिति ॥

[ २२—सर्वस्वारे मरणोत्तरभाविनामङ्गानां बाधाभावाधिकरणम् ]

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥**

मरणोपक्रमा [१]तु स्वर्गप्राप्तिः सर्वस्वारस्य फलम्। तत्र मृतस्य कर्तृत्वासम्भवादकर्तुश्चानधिकरान्मरणात्पश्चात्तैरङ्गैर्न यजमानस्य फलसिद्धिरिति सामर्थ्यादेवं विज्ञायते—सर्वस्वारेण दिष्टगत्यन्तेन स्वर्गं भावयेदिति। तस्मात्तदन्तोत्सर्गः। उच्यते—सत्यं यदि कर्तृत्वं न सम्भवेत्[२]। सम्भवति त्विदं जीवदवस्थायामेव हि परिक्रयेण प्रैषेण चासमाप्तेः ऋत्विजः प्रयुक्ताः। तावदेव तस्य जीवतोऽपि कर्तृत्वम्। तच्च मृतस्यापि तुल्यम्। न च मृते निराधारं कर्तृत्वम्, शाश्वतत्वादात्मनः। तस्मात्समापयितव्यमिति ॥५७॥

[ २३—सर्वस्वारेऽस्थियज्ञवदनुष्ठानाधिकरणम् ]

**गते कर्मास्थियज्ञवत् ॥५९॥ सि०**

मरणोत्तरकालं कीदृशमनुष्ठानमिति प्रश्नेनैवोपक्रमः। उत्तरं त्वस्थियज्ञवदिति ॥५६॥

[ २४—सर्वस्वारे आयुराशंसनस्य बाधाभावाधिकरणम् ]

**जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥६०॥ पू०**

---

१. तु नास्ति ख.

२. भवेत् ख.

"उत्तरां देवयज्यामाशास्ते" इत्येवमादीनां [१]निवृत्तिः "दिव्यं धामाशास्ते" इत्यादीनां त्वनिवृत्तिरेव। आयुषि तु विचारः। तत्राभिप्रेतमरणविरोधित्वात् आयुरपि नाशास्यमिति मन्यते। अनियतकालत्वान्मरणस्य ततः प्राङ् मरणे वैगुण्येन फलाभावप्रसङ्गात्तावज्जीवनार्थमाशासितव्यमायुष्यमिति सिद्धान्तः ॥६०॥

[ २५—सत्रे ऋतुयाज्यावरणहिरण्यदानयोर्बाधाभावाधिकरणम् ]

## क्रिया स्याद्धर्ममात्राणाम् ॥६२॥ सि०

वरणं दानञ्चानत्यर्थं सत्रे न स्यादित्युक्तम्। तस्येदं प्रत्युदाहरणम्। अदृष्टार्थन्तु[२] कर्तव्यमेवेति ॥

[ २६—पवमानेष्टौ निर्वापबाधाभावाधिकरणम् ]

## गुणलोपे च मुख्यस्य ॥६३॥ सि०

ननु यौगिकी **समाख्या त्रिकालविषयापि** सम्भवति। सत्यं सम्भवति[३], किन्नः छिन्नम्। उत्तरम्—तत्र हि [४]**वर्तमानस्तावत् कालो न सम्भवति** निर्वापवेलायामग्निहोत्रसम्बन्धस्य **भूतोऽपि** पवमानेष्ट्यवसरे **न विद्यते भविष्यत्कालतान्तु गृह्णीमो निर्वापस्य** पवमानेष्टिषु सगुणत्वाय। अतो गुणलोपाभावादनर्थकमिदमधिकरणमिति। उच्यते—**भविष्यत्कालतायास्तु भूतकालता** न्याय्या। **कथमनित्यः सम्बन्धो भविष्यत्काले** समाश्रीयमाणे स्यात्, स हि **कदाचिन्न स्यादपि**। नियता तु भूतकालता। तस्मात्सैव न्याय्या। नन्वेवं पुरोडाशकपालेऽपि[५] किमिति भूतकालता न

---

१. निवृत्तिरेव ख.

२. तु नास्ति. ख.

३. सम्भवति नास्ति. क.

४. वर्तमानकालः. क.

५. अपि. नास्ति. क.

गृह्यतेऽत आह—**पुरोडाशकपाले तु** [1]**भूतस्य कपालस्याभावः** । एतस्मात्कारणात्तत्र भविष्यन्नाश्रीयत इति विशेषः काक्का [2]द्योतितः । चोदयति अग्निहोत्रहवण्यपि भूतकाला पवमानेष्ट्यवसरे नास्ति । अतस्तत्रापि भविष्यदाश्रयणं युक्तमिति । परिहरति–**प्रकृतावग्निहोत्रहवणी वचनाद्भवति**[3] । **सा च** तत्र **भूतकालसम्बद्धैव, इह** त्ववाचनिकी **चोदकेन** प्राप्नुवन्ती [4]**तथाभूतैव प्राप्नोति** । नहि शास्त्राणां स्वरूपेण विकृतिगमनं येनान्यार्थमपि प्रकृतौ शास्त्रं विकृतावन्यादृशमर्थं प्रतिपादयेत् । कार्यद्वारेण तु[5] तत्प्राप्तिरित्युक्तम् । **न च प्राक्** [6]**पवमानहविर्भ्योऽग्निहोत्रमस्ति** । [7]**तस्माद्विकृतिषु नास्ति अग्निहोत्रहवणी** । ननु प्रागप्यग्निहोत्रमस्ति । आधानान्ते हि[8] पूर्णाहुतिं समाप्य श्रूयते—"होतव्यमग्निहोत्रं न होतव्यम्" इति । "यद्यजुषा जुहुयादयथापूर्वमाहुतीः जुहुयाद्यन्न जुहुयादग्निः [9]परापतेत्तूष्णीमेव होतव्यम्" इति । अत आह **यत्तु पूर्णाहुत्यन्तेऽग्निहोत्रं सोऽपूर्व एव होमो** न मुख्यमग्निहोत्रम् । जुह्वा च तद्धूयते नाग्निहोत्रहवण्येति । तस्मादग्निहोत्रहवण्यभावात् युक्ता चिन्ता । तत्र सहैवाग्निहोत्रहवण्या निर्वापः शास्त्रार्थो न तु केवलः । न चाशास्त्रार्थेन कृतेन प्रयोजनम् । अतोऽग्निहोत्रहवण्यभावे निर्वापोऽपि लुप्यत इति । नैतदेवम्, कार्यद्वारेण हि पदार्थाः प्राप्यन्ते । तेन

---

१. भूतकालस्याभावः. ख.
२. द्योत्यः. ख.
३. अस्ति. ख.
४. तथैव. क.
५. तु. नास्ति. क.
६. पवमानेष्टि. क.
७. तस्मात्प्राकृती नास्ति. क.
८. हि. नास्ति. क.
९. पराभवेत्. क.

हविःसंस्कारार्थो निर्वापः प्रथमं प्राप्नोति पश्चादग्निहोत्रहवणी । सा हि तृतीया-श्रुत्या निर्वापाङ्गत्वात्तन्मुखेन प्राप्नोति । निर्वापस्तु तामनपेक्ष्यैव प्राप्तः पश्चात्तु यद्यप्यसम्भवादग्निहोत्रहवणी नातिदिष्टा, तथापि निर्वापः प्राप्तः कर्तव्य एवेति ॥

[ २७—सप्तदशशरावचरौ मुष्टिबाधाधिकरणम् ]

## मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥६४॥ पू०

यद्यपि सप्तदशशरावपरिमाणं यागद्रव्यविषयम्, चतुर्मुष्टिपरिमाणन्तु निर्वाप-द्रव्यविषयम्, तथापि निरुप्तस्यैव यागद्रव्यत्वादस्त्यर्थात्तुल्यविषयता । न च चतुर्मुष्टिपरिमितैर्व्रीहिभिः सप्तदशशरावश्चरुः सम्पादयितुं शक्यते । तत्रा-वश्यके बाधे द्रव्येण द्रव्यं सङ्ख्यया च सङ्ख्या बाध्यत इत्येकः पक्षः । अन्य-तरबाधेनोपपत्तौ नोभयबाधो न्याय्यः । तस्मात्सङ्ख्याया मुष्टीनां वा लोप इत्यन्यः । द्रव्यस्य साक्षात्साधनत्वेन क्रियान्तरङ्गत्वान्मुष्टीनामनुग्रहः । सङ्ख्या-यास्तु द्रव्यपरिच्छेदद्वारत्वेन बहिरङ्गत्वाल्लोप इत्यपरः । न तावद् द्रव्याङ्गं सङ्ख्या, द्वयोरपि वाक्यलक्षणमिथःसम्बन्धबाधेन कारकविभक्तिश्रुत्या निर्वाप-सम्बन्धात् । तत्र द्वयोः क्रियाङ्गयोर्न कश्चिद्विशेषः । स्वभावस्त्वेषः–यदेकस्य साक्षात्सम्बन्धोऽपरस्य [1]द्रव्यपरिच्छेदद्वारेति । नैतावता कश्चिद् बलाबले विशेषः । तस्मान्मुख्यत्वात्सङ्ख्यानुग्रहो जघन्यत्वान्मुष्टीनां लोप इति सिद्धान्तः[2] ॥६४॥

[ २८—द्यावापृथिव्यादावुपदिष्टगोद्रव्येणाजबाधाधिकरणम् ]

## औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥६८॥ सि०

धेन्वादयः शब्दाः उभयोरपि वादिनोर्गवाद्यसाधारणगुणवचना एव शोणादय इव । नात्र विवादः । सन्ति हि प्रतिजाति विलक्षणा गुण-विशेषाः सर्वस्वसंवेद्याः । सन्ति चानेकजातिसाधारणाः सामान्यगुणाः ।

---

१. द्रव्य. नास्ति. क.

२. सिद्धान्तः नास्ति. क.

तत्रानपेक्ष्यैव पदान्तरमेते धेन्वादिशब्दाः पदावस्थायामेवासाधारणमर्थं प्रतिपादयन्ति। तेनामी गुणविशेषवचनाः। केचित्त पदान्तरमपेक्ष्या-(क्ष्य)साधारणमर्थं प्रतिपादयन्ति, यथा शुक्लः पट इति। तेन सामान्य-गुणवचनाः। यद्यसाधारणगुणवाचित्वमविवादं कथं तर्हि पूर्वः पक्षः। उत्तरम्–श्रुत्या धेनुशब्दो धान एव गुणे वर्तते। गोद्रव्यं त्वस्याधारभूतं न शब्देनोक्तं नापि चोदकेन। लक्षणया तु गम्यते केवलम्। अजा द्रव्यं त्वस्य चोदकेन प्राप्नोति। तत्र चानुमानिकः शब्दो विद्यते। तस्मिन् विद्यमाने नाशब्दपरिग्रहो युक्त इत्येवं पूर्वः पक्षः। सिद्धान्तस्तु-असाधा-रणगुणवचनोऽयम्, स च गोधिष्ठानमन्तरेण नैव गुणः सम्पादितो भवति। तस्माच्छ्रुत्युक्तगुणविरोधादजचोदकस्य[1] बाधः। उत्तरमधिकरण-मस्यैवासाधारणग्रहणस्य प्रत्युदाहृणमात्रम् ॥ ६८ ॥

[ ३०—खलेवालीचित्रेष्टितण्डुलेषु खादिरत्रैहत्वानियमाधिकरणम् ]

### नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥

यत्र साधारणगुणवचनः श्वेतादिशब्दस्तत्र न चोदको बाध्यते विरोधाभावादिति। न तु किञ्चिन्निराकरणीयमस्ति। खादिरादयो व्रीह्या-दयश्च चोदकप्राप्ता न बाधितव्याः। तस्माद्यथा प्राप्तस्यैव यूपस्य खलेवालीत्वं विधीयते। एवञ्च यूपशब्दः संस्कारनिमित्तो न बाधितो भवति। अन्यथा सिद्धखलेवाल्युपादाने छेदनादिसंस्कारलोपाद्बाधितः स्यात्। नन्वितरत्रापि खलेवालीशब्दो द्रव्यवचनः सन् द्रव्यस्य द्रव्यान्तरं विधातुमशक्यत्वात् खलेवारणक्रियायां लक्षणया वर्तेत। मैवं वोचः, नहि 'निमित्तसौ' [ निर्नि-मित्तोऽसौ ] कस्यचिद् द्रव्यविशेषस्य वाचकः, किन्तु [2]खले वारणक्रियां निमित्तीकृत्य तत्क्रियायुक्ते काष्ठे वर्तते। तत्रेह यूपशब्दसामानाधिकरण्यात्

---

१. गुणविरोधाच्चोदकस्य. क.

२. खले वारयति बलीवर्दानिति व्युत्पत्त्या रलयोरभेदेन वारणक्रिया-प्रवृत्तिनिमित्तमित्यर्थः।

तस्मिन् श्रुत्यैव वर्तते। तत्र विशेष्यस्य काष्ठस्य प्राप्तत्वात् विशेषणपरो[१] विधिर्भवति। यथा "दण्डी प्रैषानन्वाह" इत्यत्र दण्ड एव विधीयते, न तावता दण्डशब्दो दण्डलक्षणार्थो भवति। एवमिहापि श्रौतमेव क्रियाविशिष्टं द्रव्यं शब्दोऽभिधत्ते। विधिस्तु तत्र विशेषणांशमेव संस्पृशतीति नास्ति लक्षणा। पक्षान्तरे तु यूपश्रुतिर्बाध्येतेत्युक्तम्। [२]तस्मात्खदिरादेर्व्रीह्यादेश्चाबाध इति पूर्वः पक्षः। सिद्धान्तं भाष्यकारीयमनुभाष्याक्षिपति—न यूपस्य खलेबालीत्वं विधीयते। खलेवाल्यास्तु यूपता विधीयते। तथाहि—अव्यवहितेन भवतिना विधीयमानाया यूपतायाः सम्बन्धात् प्रत्यक्षं वाक्यम्। इतरथा पुनः खलेवालीत्वस्य विधीयमानस्य व्यवहितेन भवतिना सम्बन्धात् परोक्षं वाक्यं स्यादित्ययुक्तमिदं पूर्वपक्षनिराकरणम्। कथम् ? शब्दस्य धर्मोऽयं क्रमः। अर्थं प्रति शब्दो गुणभूतः, शब्दं प्रति क्रमो गुणभूतः। तस्माद्वाच्य[३] एव शब्दस्य योऽर्थः स ग्रहीतव्यः, प्रधानत्वात् क्रमस्तु अर्थाङ्गभूतशब्दधर्मत्वादुपेक्ष्यः। तस्मात्पूर्वपक्षनिराकरणमिदम[४]युक्तमित्यन्यथा वर्ण्यते। यूपानुवादेन खलेवालीत्वे विधीयमाने सत्यदृष्टार्थता विधेः प्राप्नोति। खलेवाल्यास्तु यूपकार्ये विधीयमानाया दृष्टैव पशुबन्धनपक्रमणं प्रयोजनम्। तस्मात् दृष्टार्थत्वात् [५]सिद्धान्ते यथाश्रुतमेवाव्यवहितसम्बन्धं वाक्यं भवतीत्ययमपि लाभो लभ्यत इत्येतावत् न [तु व्य] त्वव्यवहितकल्पना[६] [प्रसङ्गः] प्रसादात् सिद्धान्ते। कथं तर्ह्ययं[७] भाष्यग्रन्थः। उत्तरम्— उपचयत्वेन। एतदुक्तं भवति —अयञ्चापरो गुणः सिद्धान्ते लभ्यते

---

१. विशेषपरः ख.

२. तस्मान्न खादिरादेर्विह्यादेश्च बाधः. क.

३. वाक्ये. मु. पा.

४. करणमिदमकल्प्यमित्य० मु. पा., निराकरणे तदयुक्तं. ख.

५. सिद्धान्ते. नास्ति. क.

६. विहितकल्पना० मु. पा.

७. प्रसङ्गः मु. पा.

यदुताऽव्यवहितेन भवतिना सम्बन्ध[1] इति । तस्मात् यैवोत्तरवेदिभूते खले पूर्वमेव स्थिता खादिर्यखादरी वा तस्या एव [2]सिद्धायाः खलेवाल्या यूपकार्ये विधानात् खादिरत्वं छेदनञ्च निवर्तते ।

तथा–यथासिद्धतण्डुलग्रहणात् व्रीहयोऽवघातश्च निवर्तते। त्रित्रेष्ट्यां "व्रीहिभिर्यजति" इति प्रकृतिद्रव्योपादाने प्राप्ते नियमविधानम् । तत्प्राप्तिश्च प्रकृतौ श्रपणविधानात् । अन्यथा हि लौकिकमेव पुरोडाशमुपादाय यागः स्यात् । "कपालेषु श्रपयति" इति तु[3] वचनात् श्रपणं कर्तव्यम् । तच्च यथासिद्धहविरुपादानेन शक्यते कर्तुमित्यर्थात्प्रकृतिद्रव्योपादानप्राप्तिः । प्राप्ते च तस्मिन् व्रीहिनियमः । तथा चरुधानादिष्वपि । तण्डुलेषु तु श्रपणस्याकर्तव्यत्वाद्यथासिद्धा एव यत्किञ्चिज्जातीयकास्तण्डुला उपादेया इति न व्रीह्यादर[4] इति ॥ ७० ॥

[ ३१—खलेवाल्यां तक्षणादीनां बाधाधिकरणम् ]

## परेषां प्रतिषेधः स्यात् ॥

यथा सिद्धखलेवाल्युपादानात् खादिरत्वं छेदनञ्च मा भूताम् [5]तक्षणादि तु शक्यत्वात् किमिति न क्रियते । न च[6] तक्षणे खलेवालीनाशः[7] । नहि किञ्चिदवयवापनयमात्रेण द्रव्यविनाशो द्रव्यान्तरोत्पत्तिश्च भवति, प्रत्यभिज्ञानत् । यदि च स्यात्ततः सर्वदैव सूक्ष्मावयवापनयसद्भावात् सर्वकार्यद्रव्याणां क्षणभङ्गित्वं स्यात् । ननु यूपोत्पत्त्यर्था एते । न चात्र यूपोऽस्ति । उच्यते–न

---

१. संबध्यते. मु. पा.

२. सिद्धायाः नास्ति. क.

३. तु. नास्ति. क.

४. व्राह्यदयः क.

५. तक्षणजोषणादि क.

६. हि क.

७. विनाशः क.

यूपाख्यमेकं किञ्चिद्दृष्टमस्ति, प्रमाणाभावात्। छेदनादिविधयो हि परस्परानपेक्षाः प्रत्येकमेव काष्ठगतमदृष्टं संस्कारं बोधयन्ति। तत्र च यत्समित्सम्बन्धेन क्रियते तत्तनूनपात्सम्बन्धेनेत्यनेन न्यायेन भिन्ना एव संस्काराः। ननु यूपमेवोद्दिश्य सर्वे विधीयन्ते। ततः कथं भिन्नार्थत्वम्, नासिद्धत्वात्। यूपस्य न हीयं वचनव्यक्तिः—यो यूपस्तच्छेदनेन कुर्यादिति। यद्येषा स्यात्ततो वाक्येनैव निरपेक्षा एकार्थत्वेन विधीयमानाश्छेदनादयो विकल्पेरन्। तस्माद् भिन्नकार्याः छेदनादयः। तज्जन्यस्य तु दृष्टादृष्टरूपस्य[1] संस्कारगणस्य यूपशब्दो वाचकः, न तु कश्चिदेको यूपोऽर्थोऽस्ति। सर्वे च ते संस्कारा नियोजनाङ्गम्। तत्रैकासम्भवेऽन्यस्यापि त्यागो न युक्तः। तस्मात्कर्तव्यं तक्षणादीति। अत्रोच्यते—अर्थलोपान्न[2] कर्तव्यम्। दृष्टार्थानि हि तक्षणजोपणोच्छ्रयणानि श्लक्ष्णीकरणाद्यर्थानि। खलेवाली च पूर्वमेव श्लक्ष्णीभूतोच्छ्रिता च। तत्र क्रियमाणमपि तक्षणादि न प्राकृतकार्यं स्यात्। यथास्थितखलीवाल्यन्यथाभावश्च विना कारणेनायुक्तः। तदा हि केनापि तावदंशेन[3] विनाशः कृतः स्यात्। अपि च तक्षणादीनि यूपकारणानि इत्यादेर्भाष्यस्य कोऽर्थः? सर्वथा तावदिह छेदनखादिरत्वाद्यसम्भवात् यूपस्य वैकल्यमपरिहार्यम्। अङ्गीकृते च वैकल्ये तक्षणादिलोपो नातीव दुष्यतीत्यभिप्रायः ॥७१॥

[३२—खलेवाल्यां भूमिसमीकरणाञ्जनप्रोक्षणादीनां बाधाभावाधिकरणम् ॥ ]

## अर्थाभावे संस्कारार्थत्वं स्यात् ॥७२॥ सि०

सर्वथेह यूपशब्दार्थः साकल्येनोपसंहर्तुं न शक्यते। न चैकशब्दोपात्तेष्वन्यतरस्य शास्त्रार्थतास्ति। यादृशी सा[4] खले वारणे वृत्ता तादृश्येव नियोजने विनियोक्तव्या। न तत्र किञ्चित्कर्तव्यम्। तस्मात् भूमिसमीकरणाञ्जनादयोऽपि

---

१. रूपसंस्कारस्य क.

२. अर्थलोपाश्च कर्तव्यं नास्ति क.

३. अंशेन विना क.

४. च. ख.

न कर्तव्याः। उच्यते—समीकरणादयस्तावद् दृष्टार्थत्वादिहापि तत्सम्भवात्कर्तव्याः। न हि दृष्टे सत्यदृष्टरूपयूपार्थता तेषां युक्ता। तस्मादञ्जनादीनामप्यलुप्तार्थत्वादनुष्ठानम्। एक शब्दोपात्ता अपि ह्यर्थाः सर्वे कार्याङ्गम्। [१]अन्यतराभावेऽप्यन्यतरः कार्येण प्रयुज्यत एव। तस्मात्प्रोक्षणाञ्जनसमीकरणावसेचनावधानपरिव्याणादीनि कर्तव्यानि। एकदेशिनां त्वञ्जनं भाष्योक्तमनुपपन्नं स्यात्[२]। ते हि यूपाख्यमेकमदृष्टम्। तादर्थ्यञ्च प्रकृतौ संस्काराणाम्, तस्य च खलेवाल्यामभावं मन्यन्ते। तत्र किमर्थमञ्जनमित्यास्तां तावत्॥

[ ३३—महापितृयज्ञे धानास्ववघातबाधाभावाधिकरणम् ( भाष्यकारीयम् ) ]

## अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात् ॥७४॥ सि०

प्राकृतक्रमविपर्यासेऽपि न पदार्थः प्राकृतो निवर्तत इति प्रतिपादयितुमिदमधिकरणम्। तत्र धाना इत्येतद्भाष्योक्तमनुदाहरणम्। द्विधापि यदि प्रकृतौ पाकात्पूर्वमवघातोऽथापि परः उभयथाप्यनुपपन्नत्वात्। कथमनुपपत्तिः? उत्तरम्—चोदकेनापि विपर्यास एव भाष्योक्तः प्राप्यते पूर्वमवघातः ततः श्रपणम्। अतो न धानासु प्राकृतस्य क्रमस्य विपर्यासः। अथ[३] श्रपणादुत्तरकालमवघातश्चोदकेन प्राप्यते, तथापि तथैवात्राप्यनुष्ठेयः। यदि हि प्रकृतौ पाकादुत्तरकालोऽवघातः ततः पुरोडाशे क्रियमाणोऽदृष्टार्थः स्यात्। ततश्चेहापि धानास्वदृष्टार्थ एव पाकादुत्तरकालमनुष्ठेयः। तत्रार्थेन च विपर्यास[४] इत्येतदयुक्तं स्याद् विपर्यासाभावात्। अथोभयत्रावघातः प्रकृतितः प्राप्नोति तथापि [५]तथैवात्राप्यनुष्ठानादर्थविपर्यासो

---

१. भावेऽन्यतरन् क.

२. स्यात् नास्ति क.

३. अथ नास्ति क.

४. इत्ययुक्तं क.

५. तथैवानुष्ठानात् क.

न युक्तः। अथैवमुच्यते-[1]'निष्पन्नायां यागचोदनायां चोदक इति प्रकृतौ हि यादृशद्रव्ययुक्ता चोदना [2]निष्पन्ना "व्रीहिभिर्यजेत" इति तादृश एव द्रव्येऽवघातः कृत इतीहापि चोदकस्तथैव प्रापयति। धानासु चेह निष्पन्नासु चोदना। ततश्चोदकोऽवघातं श्रपणञ्च प्रापयति। एवमेव धानावस्थायामेवावघाते प्राप्तेऽर्थेन विपर्यास इत्युक्तम्। तदप्यनुपपन्नम्। पश्चात्प्राप्तस्य पूर्वमनुष्ठानादिति। दूषयति-यदि निष्पन्नरूपं द्रव्यं चोदनया गृह्यते खलेवालीवत् तथासत्यवघातादीनाम् अक्रियैव स्यात्। छेदनादीनामिव खलेवाल्याम्। एतदुक्तं भवति---यद्यत्र धानारूपमेवापूर्वार्थं न सतुषं रूपं तथासत्यवघातोऽपूर्वप्रयुक्तः। सतुषावस्थस्यापूर्वीयत्वाभावादकर्तव्यः। धानावस्थे च फलाभावादकर्तव्यः। तण्डुला हि भर्जिता धाना इत्युच्यन्ते, किमत्रावघातेन। ततः किमित्याह—तदापि क्रमविपर्यासाशङ्कैव[3] नास्ति। हन्तिस्वरूपस्यैव[4] लुप्तत्वात्। अथ नैव निपन्नानां ग्रहणम्, न धानारूपमेव चोदनार्थः। तास्तु देवतासम्बन्धित्वात् पुरोडाशकार्यापन्नाः। तासां प्रकृतिद्रव्यं चोदकप्राप्तम्। शास्त्रार्थं एव कर्तव्यः। अतः कर्तव्य एवावघात इत्युच्यते [5]तथापि यथा प्राप्तमेवेदमनुष्ठानं न तु कश्चिद् विपर्यासः। यथा चरुप्रभृतिषु। तस्मादनुदाहरणं धानाः।

[ ३३-वार्तिककारमतेन धानासु श्रपणस्य प्रतिप्रसवाधिकरणम् ]

किं तर्ह्युदाहरणम्। उत्तरम्[6]-तत्रैव महापितृयज्ञे "[7]निवान्यायै दुग्धे

---

१. विनिष्पन्नायां क.
२. निष्पन्ना क.
३. विपर्यासशङ्कैव० क०
४. लुप्तार्थत्वात्० क०
५. तत्रापि० ख०
६. उत्तरं नास्ति० क०
७. अभिवान्यायै० क०

मन्थम्" इत्यस्य मन्थस्य **श्रपणादुत्तरकालं पेषणं प्राप्नोत्यर्थेन।** सक्तवो हि पयःप्रभृतिभिस्संयुक्ता मन्थशब्देनोच्यन्ते। अतस्तस्य पाकादुत्तरकालमेवार्थात्पेषणम्। तत्र पेषणे[१] संशयः किं प्राकृताः पेषणधर्मा भवन्ति? उत न भवन्ति? इति। तदर्थञ्च किं प्राकृतमेवेदं पेषणं उतान्यत् लौकिकमिति। तत्र पूर्वपक्षे[२] पेषणान्तरमिदं व्युत्क्रमादित्यतो हेतोरधर्मकमेवेदं पेषणम्। यद्यपि [३]च गुणलोपेऽपि प्राकृतस्य पदार्थस्यानिवृत्तिरुक्ता, तथापीह क्रमलोपादेव कार्यमपि लुप्तम्। प्रकृतौ हि पाकार्थं पेषणम्। असति पेषणे पुरोडाशनिर्वर्तकः पाको न शक्यते कर्तुमिति। इह तु विनैव पेषणेन पाको निर्वृत्त इत्यर्थलोपान्निवृत्तं प्राकृतं पेषणम्। इदन्तु[४] उत्तरकालपेषणमर्थवशात् क्रियमाणमधर्मकं स्यादिति। **सिद्धान्ते तु तदेव पेषणम्, प्राकृतकार्यत्वात्।** ननु क्रमान्यत्वात्कार्यान्यत्वमुक्तमत आह—**क्रममात्रमन्यन्न** कार्यम्। कथम्? नहि पाकार्थं पेषणम्, द्वयोरपि पाकपेषणयोः श्रुत्या हविरर्थत्वात्। अर्थवशात्तु पूर्वं पाकात्पेषणं तत्र कृतं पाठाद्वा। अत्र त्वर्थवशादेव तयोः क्रममात्रं विपर्यस्तं न तु कार्यान्यत्वम्। अतोऽर्थकृतेऽपि **विपर्यासे** तादर्थ्यात् तत्कार्यत्वात् पेषणस्य तत्त्वमेव नान्यत्वमिति **धर्मा भवन्त्येव।**

उदाहरणान्तरमाह—**कृष्णलेषु पाकधर्माः** प्राकृता भवन्ति न **भवन्तीति** संशयः। **यद्यपूर्वोऽयं पाको** "घृते श्रपयति" इति, **ततः पाकधर्मा न** [५]**भवन्ति।** अथ **प्राकृतस्यैव** पाकस्य **प्रतिप्रसवोऽयं ततो धर्माःसन्तीति**[६]। तत्र प्रतिप्रसवविधौ वाक्यभेदात्पाकान्तरविधिरिति पूर्वः पक्षः। सिद्धान्तमाह

---

१. पेषणे नास्ति० क०

२. पेषणान्तरमित्यतः० क०

३. च० नास्ति० क०

४. द्रव्यन्तूत्तरकालं पेषणान्तरमर्थवत्० ख०

५. सन्ति० क०

६. इति नास्ति० क०

तत्र प्रतिप्रसवोऽयम् । कथम् ? चोदकेन प्राप्ताः पाकधर्मा अर्थलोपान्नि-वृत्ताः श्रपणविधानात् प्रतिप्रसूयन्ते । ननु प्रतिप्रसवे श्रपणमात्रमेव [१]विधातव्यं विधातुं शक्यं न तु घृतम् । घृते[२] हि विधीयमाने वाक्यं भिद्येत प्राप्तस्य प्रतिप्रसवो गुणश्च विधीयत इति । यदि त्वपूर्वविधानं तथा सति विशिष्टविधानाददोषो भवति, अप्राप्तत्वात् । उच्यते—प्राप्तत्वा-दस्मिन् वाक्ये घृतं न विधीयते । श्रपणमात्रमेव विधीयते । कुतः प्राप्ति-र्घृतस्य ? उत्तरम्—उत्पत्तिवाक्ये घृतमेवाधारत्वेन श्रूयते "प्राजापत्यं घृते चरुम्" इति सप्तमीविभक्तिसंयोगाच्चरुशब्दसामर्थ्याच्च यथादित्ये पयः, सप्तमीसंयोगादधिकरणम्[३] तथेहाप्युत्पत्तिवाक्ये [४]सप्तमीबलादधि-करणं घृतम् । तच्च श्रपणावस्थायामेव चरुशब्दसामर्थ्यात् । तस्माद्गुणवाक्ये घृतमनुवादः ।

तस्मात्पक्षान्तरं नैतदपूर्वविधिदोषतः ।
प्रतिप्रसवमात्रन्तु लाघवाद् विहितं परम् ॥७४॥

॥ इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य द्वितीयःपादः ॥

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य तृतीयः पादः ॥

[ १–विकृतिषूपदिष्टैः एकादशप्रयाजादिभिरितरेषां प्राकृतानां गुणानाम-तिदेशाधिकरणम् ]

## विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥१॥ पू०

अवभृथस्तावदनुदाहरणम्, अपूर्वत्वात्सिद्धान्तासम्भवात् । विशिष्टविधि-

---

१. विधातव्यं नास्ति० क०

२. हि. नास्ति. क.

३. तथाप्युत्पत्तिवाक्ये. ख.

४. सप्तमीसंयोगात्. क.

रेव[१] ह्ययम्। कथम्[२] ? "अप्सु तृणं प्रास्याघारमाधारयति" इति। **शिष्टानामप्यग्नीषोमीयादीनां** प्राकृतेन **विध्यन्तेन** वाक्यशेषतया कल्पितेन **धर्माः प्राप्नुवन्ति** विध्यन्ताधिकरणन्यायात्। अतस्तेषु गुणविधित्वस्य स्पष्टत्वात्पूर्वपक्षासम्भव इति। **कथं संशयः ? उच्यते**—सत्यमनुदाहरणमवभृथः, इतरेषु तु सम्भवति पूर्वः पक्षः। तथाहि–**यत्प्राकृतमङ्गं विकृतौ श्रूयते तदेव**[३] तां निराकाङ्क्षीकरोति। **यथा गृहमेधीये आज्यभागश्रवणम्। श्रूयते चात्र प्राकृतमङ्गं नवप्रयाजा इति। तस्मात्तेनैवास्या**[४] **निराकाङ्क्षत्वं गृहमेधीयवत्।** अयमर्थः—यस्यां विकृतौ गुणाधिकं प्राकृतमङ्गं श्रूयते सेहोदाहरणम्। तत्र चोदकेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति, प्रकारमात्रातिदेशात्। तस्मादवपरिवर्तमानेषु प्रयाजेषु[५] न गुणविधित्वं[६] शक्यते वक्तुमिति विशिष्टकर्मविधानम्। एवञ्च धात्वर्थविधानाच्छ्रुत्यनुग्रहः स्यात्। अतश्च प्राकृतक्लृप्तोपकाराङ्गनिराकाङ्क्षा विकृतिर्गृहमेधीयवत् नातिदेशमपेक्षत इति नास्ति प्राकृतीतिकर्तव्यता। कर्मान्तराण्येतानि चोद्यन्त इति भाष्यस्यायमर्थः–यान्येतानि प्रधानकर्मणः कर्मान्तराणि प्रयाजादीनि तान्येभिश्चोद्यन्ते न गुणमात्रमिति। [७]**अधिकानामुत्पत्तिरिति** [८]**सूत्रावयवस्य प्राकृतानां निवृत्तिरित्यभिप्रायः।** प्रधानादधिकं यदङ्गं तदेभिर्वाक्यैरुत्पाद्यते चोदकाभावात्तु प्राकृतानि निवर्तन्त इति। गुणविधानेन तूत्तरः पक्षः। यद्यपि चोदकेन प्रातिस्विकरूपेण पदार्थानामुपस्थानं नास्ति तथापि सामान्येन रूपेण प्राकृत-

---

१. रेवायं. क.

२. कथं. नास्ति. ख.

३. तदेव विकृतिनिराकाङ्क्षात्स्वीकरोति। मु. पा.

४. अस्य. क.

५. पदार्थेषु. ख.

६. गुणविधिश्शक्यत इति. क.

७. अधिकोत्पत्तिरिति सूत्रपाठस्य विवरणम्।

८. सूत्रस्य. क.

मङ्गजातमित्येवं तावदस्ति। तावता च स्वशब्देऽनुवादके सति प्रत्यभिज्ञा भवत्येव। प्राकृतमङ्गं कुर्यात्तत्र प्रयाजमेवं [1]कुर्यादित्युक्ते भवत्येव हि[2] प्राप्तानुवादबुद्धिः। तस्यां सत्यां न विशिष्टविधानं युक्तम्। अगतिर्हि सा। तस्मात् न गृहमेधीयन्याय इत्यविहतोऽतिदेशः। किमतिदिश्यते? किं वानातिदिश्यते[3]? इत्येवमतिदेशस्यैवापवादानपवादचिन्ता लक्षणार्थ इत्यादावेवोक्तमिति नासङ्गतिः। एकदेशिनान्त्वतिदेशावगततादर्थ्यानामेवाङ्गानामनुष्ठानाननुष्ठानरूपबाधचिन्तामध्यायार्थं[4] वर्णयतामसङ्गतिः स्यादेवेति ॥१॥

[ २—वायव्यपशौ हिरण्यगर्भमन्त्रस्योत्तराघारशेषताधिकरणम् ]

## हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥१३॥

मन्त्रलिङ्गेन पूर्वः पक्षः। तद्धि पूर्वाघारे समर्थं नोत्तर इति दर्शितं भाष्ये प्रकृतिवदिति। उपचयसूत्रमिदम्। '[5]प्रकृत्यनुपरोधाच्च' इत्येतदर्थत उपात्तम्। तच्चान्वाचयहेतुप्रतिपादकम्। एवमुत्तरस्य प्रकृतिवच्छब्दप्राप्तो मन्त्रो न बाधितो भविष्यति।

## उत्तरस्य वा मन्त्रार्थित्वात्।

आघारश्रुतिस्तावदुभयोः पक्षयोस्तुल्या नान्यतरस्य प्रमाणं भवति। **वाक्यं च तुल्यमेवेति** सम्बन्धः। "हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति" इति वाक्ये येयमाघारश्रुतिर्यश्च तस्याः पदान्तरसम्बन्धः तौ तुल्याविति। लिङ्गं च भाष्ये पश्चाद्वक्ष्यमाणेन **न्यायेन तुल्यमेव। ततः किम्?** इदं ततो भवति, **प्रकृतौ पदार्थस्मरणे सर्वत्रोपायचतुष्टयं प्रसक्तम्—ब्राह्मणपदमन्त्रसूत्रोपद्रष्टारः तत उत्तरस्मिन्नाघारे** मन्त्राम्नानसामर्थ्यादितरेषां निवृत्तिर्जाता। **पूर्वस्मिंस्त्वाघारे**

---

१. कुर्यादिति ह्युक्ते ख.
२. हि नास्ति ख.
३. वा नास्ति ख.
४. बाधाबाध ख.
५. प्राकृतानुपरोधाच्च क.

मन्त्रो नास्ति । अतस्तत्र त एव [१]ब्राह्मणपदादयोऽभ्युपायाः प्राप्नुवन्ति । विकृतावपि तथैव प्राप्तिः–पूर्वोऽमन्त्रकः उत्तरस्तु समन्त्रक इति । तथापि किमित्याह—एवं सत्युत्तरे समन्त्रके मन्त्रविशेषमात्रं विधायिष्यते । इतरथा पूर्वस्मिन्नाघारे मन्त्रसामान्यं मन्त्रविशेषश्च विधातव्यः । कथमित्याह–भेदस्मरणं [२]विशेषस्मरणं विधीयते । तत्सामान्यञ्च [३]श्रौतं विज्ञानं पूर्वाघारस्याप्राप्तरूपं सामान्यं विधातव्यम्, तच्च मन्त्रविशेषजनितमिति । कथं सामान्यं विधातव्यमित्याह–मन्त्रकार्यञ्च सामान्यरूपम् श्रौतं विज्ञानं पूर्वाघारे पाक्षिकम् । स हि कदाचित्पुरुषेच्छावशेन केनचित्स्मर्यमाणोऽपि कदाचित्प्रजापतिलिङ्गेन केनचित् स्मर्येतेति पाक्षिकं [४]तत्र मन्त्रकार्यम् । अतस्तदपि विधातव्यम् । [५]तत्र च मन्त्रविशेषः । तत्र प्राप्तमन्त्रकार्ये उत्तराघारे मन्त्रविशेष नियम एव युक्तो लाघवात् । न तु मन्त्रकार्यस्यापि विधिर्युक्तः । यद्यपि मन्त्रविधानादेवार्थसिद्धं सामान्यं न पृथग्विधिमायासयति तथाप्यार्थिकोऽप्यतिभारः सत्यां गतावयुक्त एव । अपि च मन्त्रनियमादवश्यमदृष्टं कल्पयितव्यं पूर्वाघारे । तत्तु क्लृप्तमेवोत्तराघारे । तस्मिन् सति न कल्पयितुं शक्यते । तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेदिति भाष्यं निगदेनैव व्याख्यायोत्तरभाष्यार्थमाह [६]यदा मन्त्रप्राप्तिः तदापि विशेषविधानमित्यानर्थक्यं मन्त्रस्य । कथमित्याह–कदाचिद् भावो मन्त्रस्य कदाचिन्न, तेनानर्थक्यं पक्षे स्यादिति । अस्मत्पक्षपरिग्रहश्चेति भाष्यस्यार्थमाह–मयापि सामान्येन प्राप्ते मन्त्रकार्ये विशेषो विधीयते । तथापि कथमुत्तरविषयत्वमत आह–

---

१. ब्राम्हणादयः क.

२. विशेषस्मरणं नास्ति क.

३. श्रौतादिज्ञानं क.

४. तत्र नास्ति ख.

५. तच्चमन्त्रविशेषजनित्वमिति क.

६. यदा मन्त्रप्राप्तिस्तदा विशेष इत्यानर्थक्यम् सु. पा; तदा विशेषविधिः यदा मन्त्रप्राप्तिरित्यानर्थक्यं ख.

तत्र नियमेन मन्त्रस्य प्रयोगो भविष्यति, इतरथा तु नित्यवदाम्नातः पाक्षिकः स्यात्। उपदेशस्य चार्थवत्त्वमिति भाष्यम्, तस्यायमर्थः–यदि[१] नित्यं समाम्नानं मन्त्रकार्यस्य क्वचिदपि न स्यात् [२]तथा सत्यन्यथानुपपत्त्या[३] पाक्षिको मन्त्रोपदेशः कल्प्येत। अस्ति चोत्तरस्मिन्[४] नित्यसमाम्नानं यस्मिन् मन्त्रविशेषोपदेशस्य नित्यवदर्थवत्ता लभ्यते। तस्मादुत्तरे मन्त्रः। ननु सत्यप्युत्तरस्मिन् मन्त्रकार्ये पूर्वस्मिन्नेव मन्त्रो विधीयतां तद्बलेन मन्त्रकार्यमपि कल्प्यतां को दोषोऽत आह– उत्तरसूत्रे कार्यापत्तिं प्रतिपादयति 'विधेस्तु तत्र' इति। 'विधेस्तु तत्र[५] भावात्' इत्युत्तराधिकरणसिद्धान्तसूत्र[६] एव तद्वक्ष्यते-क्लृप्तकार्यापत्तौ सम्भवत्यां न कार्यान्तरं कल्प्यमिति। तच्च पूर्वस्मिन् न विद्यते तस्मादुत्तरस्मिन्निति॥

[ ३—सौमिकचातुर्मास्येषु वाजिनासादनादीनां कर्मान्तराभावाधिकरणम् ]

## संस्कारे तु क्रियान्तरस्य विधायकत्वात्॥

पूर्वपक्षमाह––ननु वाजिने [७]विशिष्टानुवादो वाक्यभेदो वा यदि[८] तद्वाजिनमासादयतीत्यनूद्योत्करो विधीयते ततो विशिष्टानुवाददोषः। [९]अथासदनमात्रमनूद्य वाजिनमुत्करञ्च विधीयते ततो वाक्यभेदः। कर्मान्तरे तु विशिष्टे विधीयमाने न दोषः। नियोजनेऽप्येवमेव। प्रदर्शनार्थन्तु वाजिन-

---

१. नित्यमाम्नानं क.

२. ततोऽन्यथा क.

३. पाक्षिकोऽपि क.

४. नित्यवदाम्नानं क.

५. भावादित्यनन्तराधिकरण क.

६. एनत् ख.

७. विशिष्टानुवादोषः ख.

८. यत् क.

९. यद्यासादन ख.

ग्रहणम् । अशक्यञ्च दृष्टकार्यमासादनं [१]नियोजनञ्चोत्करे परिधौ च कर्तुं [२]तीक्ष्णाग्रत्वात् उपशयत्वाच्च । तस्मात् कर्मान्तरम् । उच्यते—"वाजिनं निषिच्याभिघार्य" इति प्रकृत्य[३] ततः श्रूयते 'वाजिनमुत्करे[४] आसादयति" इति । तत्रोत्कर एव केवलो विधीयते वाजिनन्तु प्रकरणात् लभ्यते । परिधौ पशुमित्यत्रापि यन्नियुञ्जीत[५] तत् परिधावित्येतावदुच्यते । पशुस्तु सामर्थ्येनैव लभ्यते । तेन[६] तद्विषयमेव हि नियोजनम् । तस्मात् न विशिष्टानुवादः । न चाशक्यता, पृथ्वग्रतां स्थविमानं च करिष्यामः । ततः शक्यं भविष्यति ॥

[ ४—चयनप्रकरणे श्रुतानां दीक्षाहुतिमन्त्राणां प्राकृतमन्त्रैस्समुच्चयाधिकरणम् ]

## षड्भिर्दीक्षयति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥२३॥ पू०

दीक्षार्थतया विनियुक्ता मन्त्राः स्वाहाकारान्ताः सामर्थ्याद्दीक्षाहुतीनामङ्ग [ भूताः ] ताश्चावर्त्यमानाः मन्त्रानप्यावर्तयन्ति प्रधानवशवर्तित्वादङ्गानां तदावृत्तावावृत्तेः । तस्मादनवकाशत्वात् प्राकृतानां बाधः । नैतदेवम्, प्रतिमन्त्रमत्राहुतयः सन्ति । यावन्तः प्राकृता वैकृताश्च मन्त्राः समाम्नातास्तावत्य आहुतयोऽपि सन्ति । तत्र सम्भवति समुच्चये न बाधो युक्तः । दीक्षार्थता हि मन्त्राणां [७]सकृत्प्रयोगादेवोपपन्ना । नावृत्तौ

---

१. नियोजनमुत्करे ख.

२. 'वेदिं खात्वा तत्पांसूनां बहिर्देशे प्रक्षिप्तानां राशिरुत्कर इत्युच्यते । स चैकत्र विद्यमानानां पांसूनामन्यत्र राशिरूपेण क्षेपे तीक्ष्णाग्रत्वस्य लोके दर्शनात् 'पांसुमाग्नीध्रोऽञ्जलिनाभिगृह्णाति' इत्यभिग्रहणवशात् याज्ञिकाचाराद्वा तीक्ष्णाग्र इत्यर्थः इति शास्त्रदीपिकाव्याख्यायां सोमनाथः ।

३. अन्ततः श्रूयते मु. पा. प्रकृत्यैतत् श्रूयते क.

४. उत्करे सादयति क.

५. 'यन्नियुजन्वितत्यधा' इति मुद्रितपाठस्त्वशुद्धः

६. तेन नास्ति ख. ७. सकृदेवोपपन्ना. ख.

प्रमाणं भवति। आहुतयोऽपि प्राकृतैरेव मन्त्रैरुपपन्नाः। न वैकृतानामभ्यासे प्रमाणं भवति। तस्मादुभयग्राहिणा प्रयोगवचनेनोभयेषामपि होमेषु निवेशात् समुच्चयः। ननु प्रधानावृत्तावङ्गावृत्तिर्युक्ता। सत्यम्, यद्यनावर्तमानेऽङ्गे प्रधानं[1] विगुणं स्यात्। तत्तु मन्त्रान्तरेणापि सगुणमित्युक्तम्। मन्त्रान्तरं बाधितमिति चेत्—न, प्रमाणाभावात्। वैकृतमन्त्रोपदेशः प्रमाणमिति चेत् न, अबाधित्वापि तदुपदेशस्य सम्भवादित्युक्तम्। प्राकृतानामपि च पदार्थानां विकृतावङ्गतास्ति। तद्विशिष्टप्रकारस्यातिदेशेन विहितत्वात् विशिष्टविधिना चार्थात् विशेषणानामपि विधानम्। तस्मादुभयेषामप्यङ्गत्वात्समुच्चयः॥

[ ५—पुनराधानदक्षिणयाधानदक्षिणानां बाधाधिकरणम् ]

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद् वाक्यसंयोगात् ॥३०॥ पू०**

सत्यप्यत्रैककार्यत्वे प्राकृतवैकृतयोर्वचनबलात् समुच्चय इति पूर्वः पक्षः।

**विकारस्त्वप्रकरणे हि काम्यानि ॥३२॥ सि०**

सिद्धान्तमाह—

"पुनरुत्सृष्टोऽनड्वान्"[2] इत्येतस्माद्वाक्यात्समुच्चयो न गम्यते, समुच्चयशब्दाभावात्। न ह्यस्ति पुनरुत्सृष्टादि च दक्षिणेति। तस्माद् बाधः। ननु "ता उभयीर्ददाति" इति समुच्चयः श्रूयते। उच्यते—अर्थवादोऽयं न विधिः। 'अप्रकरणे हि काम्यानि' इत्यस्य सूत्रावयवस्यायं भाष्यग्रन्थः। तत्काम्याम्नानमसति प्राकृते प्रकरणे [3]सम्भवतीति तस्यार्थः। तत्सत्याधानप्रकरणे पुनरुत्सृष्टाम्नानं यदि भवेत्। तत्पुनरुत्सृष्टा-

---

१. निर्गुणं. क.

२. इत्येतस्माद्यावत्. क.

३. सतीति. ख.

म्नानमित्यन्वयः । **ततो न बाधेताधानदक्षिणाम्** । कस्मात् ? [1]अप्रकरणान्तराभावात् । उभयोरपि तुल्यप्रकरणत्वेन बाधासम्भवाद् [2]**असतित्वाधानप्रकरणाम्नाने यत्तत्र नैमित्तिकं पुनरुत्सृष्टादि विधीयते तत्प्राकृतं** नित्यं **बाधमानमेव निविशते** काम्याम्नानम्[3] । ३३॥

[ ६—आग्रयणे श्रुतया दक्षिणया प्रकृतिदक्षिणाबाधाधिकरणम् ]

## वासोवत्सं च सामान्यात् ॥३४॥ सि०

उत्तरविवक्षार्थमित्युक्तम् ॥३४॥

[ ७—वासोवत्सयोरन्वाहार्यधर्मकताधिकरणम् ]

## अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥३५॥ सि०

इदमपि तद्वत् ॥३५॥

[ ८—वत्से पाकबाधाधिकरणम् ]

## दाने पाकोऽर्थलक्षणः ॥

प्रकृतौ पक्वस्य [4]दक्षिणात्वादिहापि [5]दक्षिणा पक्वमेव प्राप्नोति । वत्सश्रुतिस्तु तत्प्रकृतितयापि सम्भवान्न पाकं विधातुमर्हति । तस्माद् वत्सं पक्त्वा तन्मांसं देयमिति । उच्यते—दक्षिणाशब्दोऽयं यद्भृतित्वेन दीयते तस्यैव वक्ता । तेन वत्स एव देयः । पाके च तन्नाशः स्यात् । तस्मादनतिदेशः पाकस्य । यदि वत्सः पुरुषसंस्काराय पुरुषाणां क्रत्वनुष्ठानसामर्थ्यं

---

१. अप्रकरणान्तरत्वात्. क. ख.

२. सति मु. पा.

३. काम्याच्चाम्नानम् मु. प.

४. दक्षिणार्थत्वात्. क.

५. दक्षिणा नास्ति. ख.

बलपुष्टिरूपं जनयितुं [1]वत्सः श्रूयेत ततः पच्येत, नत्वेवमस्ति। दक्षिणा-श्रुतिसंयोगादिति ॥

[ ९—वाससि पाकलोपाधिकरणम् ]

**पाकस्य चान्नकारितत्वात् ॥**

वत्सश्रुतिविरोधाच्चेद्वत्से पाकस्याकरणम्, अविरोधात्तर्हि वाससि क्रियताम्। नेति ब्रूमः प्रयोजनाभावात्। दक्षिणाद्रव्यनिष्पत्त्यर्थो हि प्रकृतौ पाकः [2]नादृष्टार्थः, नापि विकारमात्रार्थः। ततश्च वाससि तदभावात्तल्लोपः॥३७॥

[ १०—वासोवत्सयोरभिघारणबाधाधिकरणम् ॥ ]

**तथाभिघारणस्य ॥३८॥ सि० ।**

विनाप्यभिघारणेनान्वाहार्यस्वरूपं तत्कार्यं चान्नमनं निर्वर्त्यत इत्यदृष्टार्थ-मभिघारणं वासोवत्सयोरपि कर्तव्यम्। नैवम्, [3]स्वादिमार्थत्वात्। स्वादिम्ना हि पुरुषाश्चानता भवन्ति। तस्मिन् दृष्टे सति नादृष्टं सम्भवति। न च वासो-वत्सयोः क्रियमाणं स्वादिम्ने भवतीति निवर्तते ॥

[ ११—ज्यौतिष्टोमिकदक्षिणासु गवां द्वादशशतसंख्याधिकरणम् ]

**द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात् ॥३९॥ पू०**

का पुनर्बाधाभ्युच्चयलक्षणेऽस्य[4] सङ्गतिरित्याशङ्क्याह—दक्षिणा-प्रसङ्गेनेदमधिकरणमायातं वासोवत्सविचारप्रसङ्गात्। तेन प्रासङ्गिकी सङ्गतिः। अथवा प्रकृतौ निर्णीतायां विकृतौ दक्षिणाविचारः [5]दक्षिणाया

---

१. वत्सः नास्ति. ख.

२. दृष्टार्थः. क.

३. स्वादिमार्थतात्. नास्ति. क.

४. अस्य. नास्ति. क.

५. दक्षिणाबाधप्रकारः. क.

बाधप्रकारविचारः सुखं वर्तिष्यते "तस्य धेनुः" इत्यतः प्रभृति इति। तदर्थेषा चिन्तेति। ननु 'तस्य नवतिशतं स्तोत्रियाः' इत्यस्य वाक्यस्यार्थवादत्वेन शेषभूता गवादयः। कथं तस्य नवतिशतं स्तोत्रिया इत्यभिधायाह। तासां मध्ये यास्तावदशीतिशतं स्तोत्रियास्ताः षट्[१]त्रिंशिन्यो विराजः। त्रिंशिन्यो विराजः षड् भवन्ति "षड् ऋतवः ऋतुष्वेव [२]विराजः प्रतितिष्ठति" इत्येवं विराट् संस्तुतिस्तासां स्तोत्रियाणाम्। ततः पश्चादाहवः। अथ याः परिशिष्टा दश स्तोत्रियाः एषा वा आत्मन्या विराट् आत्मप्रतिष्ठापनी विराडिति त्रिंशदाख्या दशाख्या च भवति। तादृशस्तोत्रिया गवादिभिर्दशभिः स्तूयन्ते। एतस्यां वा इदं वक्ष्यमाणं गवादिद्रव्यं पुरुषः प्रतिष्ठितो "यद् गौश्चाश्वश्चाश्वतरश्च" इति। तथा च पश्चादिदमेवोपसंहृतं "एतस्यामेव विराजि प्रतितिष्ठति" इति। इदं पुरुष इति द्रव्यपुरुषयोरभेदात् सामानाधिकरण्यम्[३]। "श्रूयते हि एतावान् खलु वै पुरुषो [४]यावदस्य वित्तम्" इति। गवादिदशद्रव्यात्मकः पुरुषो दशस्वेतासु स्तोत्रियासु प्रतितिष्ठतीत्यर्थः। तेनैकरूपोपक्रमोपसंहारमध्यगतत्वात् गवादयो न पृथक् कर्तुं शक्यन्ते। "तस्य द्वादशशतं दक्षिणा" इति वाक्यान्तरम्। न तत्र गवादिश्रवणम्। तस्मादर्थवादत्वाच्छान्दोग्यवचनमिदमनुदाहरणम्। किन्तर्ह्युदाहरणम्? उत्तरम्—आध्वर्यवे यदीदृशं वाक्यं यादृशं भाष्योक्तं तत्र षोडश गवादिद्रव्याणि "तस्य द्वादशशतम्" इति च सहश्रुतानि तद् द्रष्टव्यम्। कृत्वा चिन्ता वेयं गवादीनाम्। एतस्यामेव विराजि प्रतितिष्ठतीत्यनेन व्यपेतानामपि तस्य द्वादशशतं दक्षिणेत्यनेनैकवाक्यत्वं कृत्वा चिन्त्यते। अथवोदाहरणमेवेदम्। तथाहि–तस्य द्वादशशतमिति वाक्ये यदि तस्येति क्रतुविशेषणं स्यात् अप्रवृत्तिविशेषकरमनर्थकं स्यात्प्रकरणसिद्धार्थानुवा-

---

१. षड्विंशत्यो विराजः मु. पा. अशुद्धः प्रतिभाति

२. विराजा प्रतितिष्ठतीति ताण्ड्यमहाब्राह्मणपाठः

३. सामानाधिकरण्यं हि श्रूयते. क.

४. यावदेतस्य. क.

दात्[1] । गवादयस्तु यद्यप्यर्थवादत्वेनोक्ता[2] स्तथापि विपरिवर्तमानास्त एव[3] तस्यशब्देन सम्बध्यन्ते ( तस्य प्रकृतस्य द्रव्यस्य द्वादशशतं दक्षिणेति तच्छब्दप्रातिपदिकेन गवादयः परामृश्य दक्षिणाशब्देन सम्बध्यन्त ) इत्यर्थः । अस्मिंश्च पक्षे य एव तच्छब्दनिर्दिष्टः सङ्ख्यासम्बन्धी तस्यैव दक्षिणात्वम् । अतश्च सिद्धान्ते गवामेव परामर्शादश्वादीनां वचनान्तरं यथा भाष्यमेव द्रष्टव्यम् ।

इदन्त्वधिकरणं छान्दोग्यवचनेऽपि सम्भवतीत्यभिप्रायेणैतदुक्तमिति[4] । [5]यदेव तच्छब्दनिर्दिष्टं तस्य संख्या । तच्छब्दपरामर्श[6] एव तु कस्येति चिन्त्यते । पूर्वपक्षमाह—**एकैकस्य गवादेर्द्रव्यस्य**[7] द्वादशशतसङ्ख्यया सम्बन्धः । **कुतः ? तच्छब्देन गवादयः सर्वे परामृश्यन्ते ।** षष्ठ्या तेषामेव गुणभूता **सङ्ख्या विधीयते । ननु गवादिभिर्बहुभिः** सङ्ख्यायाः सम्बन्धे तेषामिति **बहुवचनं प्राप्नोति ।** उच्यते-गवादयोऽत्र संख्या प्रतिप्रधानभूता तच्छब्देनोद्दिश्यन्ते । **उद्दिश्यमानस्य च सङ्ख्या न विवक्ष्यते ग्रहस्येव ।** ननु यदि तच्छब्देन गवादय उद्दिश्यन्ते सङ्ख्यां प्रति, केन तर्हि तेषां दक्षिणां प्रति विधानम् । नहि शब्दान्तरमस्ति । गवादिशब्दानामर्थवादशेषत्वात् । अत आह—**अथवा** न केवलमुद्देशकोऽयं किन्तु तन्त्रसम्बन्धोऽयं सा दक्षिणा "तस्य द्वादशशतम्" इति । यदि दक्षिणां प्रति गवादयो विधीयन्ते सङ्ख्यापि तर्हि तत्रैव विधीयताम् । माभूत्तस्य द्रव्यशेषतेत्यत आह **एवमपि यद्यपि**

१. सिद्धानुवादात्. ख.

२. उपयुक्ताः मु. पा.

३. तस्येति शब्देन. क. ( ) चिह्नान्तर्गतोंऽशः खण्डितः खपुस्तके ।

४. अभिप्रायेणैवोक्तमिति. क.

५. यदेतत्तच्छब्द. क.

६. एव तु नास्ति. क.

७. गवादिद्रव्यस्य मु. पा.

दक्षिणां प्रति गवादेर्विधानं तथापि गुणभूता सङ्ख्या द्रव्याणि प्रति षष्ठ्यन्तस्य शब्दस्य सामर्थ्यात् सामानाधिकरण्यनिमित्तो दक्षिणाशब्दसम्बन्धो वाक्यलक्षणत्वात् बोध्यत इति ।

## समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥४०॥

न गुणभूता सङ्ख्या द्रव्याणि प्रति । कुतः ? वाक्यभेदप्रसङ्गात् । तथाहि सकृदुच्चरितस्तस्येति शब्दस्तत्र यदि प्रातिपदिकार्थो दक्षिणायां विधीयेत[1] तं प्रति सङ्ख्या च षष्ठ्या विधीयेत ततो वाजपेयोक्तो वाक्यभेदः । अथापि[2] वाक्यभेदप्रसङ्गमङ्गीकृत्य तच्छब्दस्य तदुद्देश्येन सङ्ख्या विधीयते । तथापि दक्षिणायाः संख्याऽनङ्गं[3] स्यात् तां प्रत्य-विधीयमानत्वात् तत्रैकत्वमयज्ञाङ्गभूतम् इतिवत् । कथमित्याह तन्त्र-सम्बन्धे हि[4] यद्यप्येक एव तस्यशब्दः संख्यया दक्षिणया च तन्त्रेण सम्बध्यते। तथापि युगपत्सम्बन्धाद् गवादयः स्वरूपेणैव सङ्ख्ययानुरक्ता, न तु सङ्ख्या दक्षिणानुरक्ता । अथ प्रथमं दक्षिणया[5] सम्बध्य पश्चाद् गवादय-स्तदनुरक्तेन रूपेण सङ्ख्यया सम्बध्यन्ते, ततः[6] सङ्ख्यापि दक्षिणाङ्गं [7]भवत्येवेत्युच्यते तत्राह–तत्र वाक्यभेदादयो ये दोषास्तत्रैकत्वमित्यत्रोक्तास्त इहापि भवेयुः । तस्माद् गवादयः सङ्ख्या तच्छब्दश्चेति त्रितयमपि दक्षिणां प्रति विधीयते । तच्छब्दप्रातिपदिकविशिष्टः षष्ठ्यर्थो दक्षिणया

---

१. विधीयते मु. पा.

२. वाक्यभेदं. क.

३. संख्यानवगता. मु. पा.

४. सम्बन्धेऽपि. ख.

५. दक्षिणयानुरक्ताः मु. पा.

६. अतः. ख.

७. भवत्येवेति यद्युच्येत. क.

सम्बध्यते । तद्वशेन गवादीनामपि [1]तद्विशेषणभूतानां सत्सम्बन्धः । तथा द्वादशशतसङ्ख्याया[2] अपि तस्य प्रकृतद्रव्यस्य सम्बन्धि द्वादशशतं दक्षिणेति कृत्वा चिन्तापक्षे त्वयं ग्रन्थः सुगमः । तत्र[3] तु तच्छब्दस्य वैरूप्यापादनं पूर्वोक्तं दुर्घटं स्यादिति न तथाश्रीयते । भवतु दक्षिणया सम्बन्धः, ततः किमित्याह— **तच्छब्दस्यैकवचनान्तस्य सामर्थ्याच्चैकजातीयस्य द्रव्यस्य परिच्छेदिका सङ्ख्या यस्य कस्यचित् स्यात्** । अन्यथा[4] तत्र बहुवचनं स्यात् बहूनां सङ्ख्यासम्बन्धात् । यत्तूद्देश्यत्वाद् गवादीनामविवक्षितं वचनं इत्युक्तम्, तत्र तावदुद्देशो न सम्भवति वैरूप्यापत्तेरित्युक्तम् । अभ्युपेत्याह—**अपि चानूद्यमानेऽपि तच्छब्दे तेषामिति बहुवचनं प्राप्नोति** [5]इतरथाऽसाधुत्वप्रसङ्गात् । ग्रहादिषु [6]तु 'जात्याख्यायामेकस्मिन् बहुवचनम्' बहुषु चैकवचनं विहितम् इति नासाधुत्वम् । इहापि तर्हि तथैव स्यादत आह–**तच्छब्दस्य सन्ति हि तद्द्रव्यपरत्वाज्जात्याख्यायामित्येतदपि न लभ्यते** ॥४०॥

## यस्य वा संनिधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥४१॥

गृह्णीम एतदेकस्य सङ्ख्येति । यत्तु यस्यकस्यचिदिति तत्र माषा हि **दक्षिणाया**[7] **अनन्तरं विपरिवर्तन्ते** अतस्त एव ग्राह्याः । **गवादयस्तु न विपरिवर्तन्ते, व्यवहितत्वात्** । तेन माषाणामेव सङ्ख्येति ॥४१॥

---

१. तत् नास्ति. क.

२. संख्यायामपि. क.

३. तु. नास्ति. क.

४. अन्यथा हि ख.

५. अन्यथा ख.

६. तु० नास्ति क.

७. दक्षिणायां क.

## असंयुक्ता तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥४२॥

न केवलैर्माषैः सम्बन्धः। किन्तु सर्वसम्पादिनी सङ्ख्या। कुतः? चशब्दश्रवणात्। चशब्दो हि माषाणां परः श्रूयमाण एव द्रव्यान्तर-सहितान् माषान् गमयति[1]। कथं पुनः श्रुत्यैव गमयति? यावता पदान्त-रत्वादस्य। वाक्येन माषसम्बन्धः, ततश्च सङ्ख्यापि तुल्यकालमेव तैः सम्बध्यते, न तु चार्थयुक्तैरत आह—यथा प्रकृतिप्रत्यययोर्भिन्नार्थयोरपि सतोः पूर्वं प्रत्ययोच्चारणं यदि प्रकृतेः स्यात् ततो न किञ्चित्प्रत्यायितं भवेत्। विशिष्टक्रमकौ[2] तु तौ[3] प्रत्यायतः। एवमिहापि[4] चशब्दः प्रत्ययवत् परस्तादेवोच्चार्यमाणस्तद्वदेव श्रुत्यैव स्वार्थमर्थान्तरसम्बन्धित्वेन प्रतिपादयति। वाक्यसम्बन्धे हि पुरस्तादप्युच्चार्यमाण [5]एतमर्थं कुर्यात्। अपि च प्रथमाविभक्तियुक्तानि गवादीनि स्वार्थ एवो-च्चार्यमाणानि सामानाधिकरण्यं प्रतिपद्यन्ते। विविभक्तानि तु तस्य शब्दनिर्दिष्टानि सङ्ख्यया व्यधिकरणानि लक्षणया तया सम्बध्येरन्। तस्माच्चशब्दश्रुतेः सामानाधिकरण्याच्च मिथः संयुक्तानां गवादीनां पश्चात्संख्यायोग इति सर्वसम्पादिनी सङ्ख्या ॥४२॥

## असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्या-कोपात् क्रतोः ॥४३॥

एकेन द्रव्येण सङ्ख्या सम्बध्यते न सर्वैः सहितैः। कुतः? सङ्ख्या

---

१. वदति क.

२. विशिष्ट क्रमके तु प्रत्याप्येत मु. पा.

३. तौ नास्ति क.

४. इह च शब्दोऽपि क.

५. एवमर्थम् मु. पा.

हि दक्षिणां प्रति **विधीयते गवादयस्तच्छब्दश्च** । ततः किम् ? **तस्य-शब्देन** प्रकृतं द्रव्यं सङ्ख्याविशेषणतया [१]सम्बद्धम् । ततश्च तस्योपादेयत्वेन विवक्षितैकसङ्ख्यत्वादेक**जा**जीयमेव द्रव्यं दक्षिणां प्रति विधीयत इति वक्ष्य-माणेन सम्बन्धः । यदा ह्येकवचनबलात् पूर्वोक्तानामन्यतमं । तच्छब्देन निर्दिष्टम् तदा तदेकजातीयमेव भवतीत्यभिप्रायः । एवञ्च सङ्ख्यापि समञ्जसा भवति । सा ह्येकावच्छेदमाश्रित्यैव प्रतीयते नान्यथा । तस्मादेकजातीयस्य तत्रापि माषाणां पशूनां वेत्यनियमप्राप्तावाह[२]—**एकसंख्याविशिष्टं द्रव्यं दक्षिणां प्रति विधीयते । तेन** य एव पूर्वत्रैकवचननिर्दिष्टाः पशवस्तेषामनेन तच्छब्देनैकवचनान्तेन परामर्शः । माषास्तु व्रीह्यादयो बहुवचननिर्दिष्टाः । तेषाञ्चाढकादिपरिमाणान्तरापेक्षः सङ्ख्याव्यावहारो लोकेन स्वरूपेण मूल्यत्वाभावादित्युक्तं भाष्ये । **तेन द्वादशशतसङ्ख्याविशिष्टमेक [जाति] विशिष्टमेकसङ्ख्याविशिष्टञ्च**[३] **यत्तन्नियमेन ग्रहीतव्यम्** । यत्पूर्वत्रैकसङ्ख्या-विशिष्टं तद् द्वादशशतसंख्याकं कृत्वा दक्षिणायां ग्रहीतव्यम् । तत्रापि नियतमेव नानियतम् , शास्त्रार्थस्याव्यवस्थायोगात् । तस्मान्न माषाणाम् । एतेनाजावयोऽपि निरस्ताः । तेन गवादयश्चत्वारः परिशिष्टास्तेषामपि मध्ये [४]एकतममेव नियन्तव्यम् । यत्तु सर्वसम्पादनीति तत्राह—**न च गवादीनां वस्त्वन्तरभूतं किञ्चित् सर्वनाम विद्यते यत्सर्वनाम्ना प्रतिनिर्दिश्येत** । **तस्मात्प्रकृतानां गवादीनामन्यतमः सर्वनाम्ना प्रतिनिर्दिश्यते। ननु विद्यत एव समुदायः।** कथं व्यतिरिक्तं वस्तु न विद्यत इत्युच्यतेऽत आह—**भवन्नसौ वस्तुतस्तथापि न गवादीनां समुदायः शब्देनोच्यते गवादिशब्दव्यतिरिक्तेन पूर्ववाक्ये यः सर्वनाम्ना प्रतिनिर्दिश्यते** । निर्दिष्टस्य ह्यसौ प्रतिनिर्देशकः । तस्माद्

---

१. सम्बध्यते क.

२. प्राप्त्यामाह क.

३. एकसङ्ख्याविशिष्टं क.

४. एकमेव क.

( ) कोष्ठान्तर्गतो भागः खण्डितः कपुस्तके ।

गवादीनामेव परामर्शः। तत्रापि नियमो वक्तव्यः। तत्र महोपकारकत्वात्[१] अप्रतिषिद्धत्वान्मुख्यत्वाच्च[२] गवामेव परामर्श इति सिद्धं तासामेव सङ्ख्येति ॥४३॥

[ १२—ज्योतिष्टोमे गोदक्षिणाया विभज्य दातव्याधिकरम् ]

**तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥५०॥ सि० ।**

इदमप्युत्तरविवक्षार्थमेवाधिकरणम् । स्थिते ह्येतस्मिन् विभागे यजुर्युक्तादिषु अनियमादयो विचारा भविष्यन्ति नान्यथा। पूर्वपक्षमाह- "ऋत्विग्भ्यो दक्षिणां ददाति" इति सर्वविशेषणविशिष्टो ददातिर्विधीयते। ऋत्विग्भ्य इति चतुर्थ्यन्तः शब्दः। चतुर्थी च सम्प्रदाने भवति। सम्प्रदानञ्च कारकम्। कारकञ्च क्रियायां[३] गुणभूतम्। तत्र गुणभूताना-मृत्विजां विवक्षितबहुसङ्ख्यत्वात्सर्वसम्प्रदानकमेकं दानं कर्तव्यमित्यविभज्य-दानं प्राप्नोति। अथापि न सङ्ख्या विवक्ष्यते तथापि दानस्य न विभाग इत्याह (विभागस्याचोदितत्वात्। अतश्चानियम इति। उच्यते-ददातिरयं विधीयते। ददातेश्च स्वत्वनिवृत्तिः परस्वत्वापादनञ्च रूपम्। ततः किमित्याह—तेनैकैकं प्रति[४] स्वत्वनिवृत्तिः परस्वत्वापादनञ्च कर्तव्यम्। कथमित्याह) यदि समुदायमङ्गीकृत्य परित्यज्येत [५]तथा सति त्याग एव केवलः कृतो [६]भवति, न तु ददातिः। इदमाकूतम्—न तावदत्रर्त्विजां गुणत्वं येन बहुत्वं विवक्ष्येत। तथाह्यदृष्टार्थं[७] दानं स्यात्। ऋत्विगानत्यर्थं

१. कारत्वात् क.
२. मुख्यत्वात् नास्ति ख.
३. क्रियां प्रतिगुणभूतम् मु. पा.
( ) कुण्डलान्तर्गतो भागः प्रकृते खण्डितः कपुस्तके किन्तु
४. तच्च मु. पा.
५. परित्यजेत् मु. पा.
६. भवेत् क.
७. अदृष्टं क.

त्विदमित्युक्तम्। चतुर्थ्यापि तेषां प्राधान्यमेवाभिधीयते, सम्प्रदानस्य कर्मणाप्यभिप्रेयमाणस्य ततोऽपि प्राधान्यात्। तेन तदानत्यर्थं दानम्। अतो न तावदेकान्तेनाविभागः। नाप्यनियमः। ऋत्विजो[1] हि यदि दत्तं द्रव्यं विनियोगक्षमं भवति तत आनमन्ते[2]। तेन स्वीयं द्रव्यमृत्विजामुपयोगक्षमं कर्तव्यमिति शास्त्रार्थावगमात् अविभागे च त्यागमात्रे कृतेऽपि यथाचोदिता दानभावना न साकल्येन यजमानेनानुष्ठिता भवति। पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य। सति च सम्भवे यजमानेनैव समग्रानुष्ठानमुचितम्। औचित्यमपि चासति प्रबले परिपन्थिनि शास्त्रावधारणोपायं सङ्गिरन्ते न्यायविदः। तस्मात् [3]प्रविभज्यदानम्। एवञ्च "तुथो वो विश्ववेदा विभजतु" इति मन्त्रवर्णो न पाक्षिको भवति। यद्यपि तावन्न्यायेन विभागो न नियन्तुं शक्यते, तथापि मन्त्रवर्णादेव छागवन्नियम्येत किमुत यदा न्यायेनापि विभज्यैव दानमुचितम्। यत्र त्वेकमेव द्रव्यं दक्षिणा यथा धेनुर्दक्षिणेत्यादिषु तत्राविभज्यैव दानं गत्यभावात्। द्रव्यभेदे तु विभज्यैवेति ॥

[ १३—सोमयागेषु समाख्यानुरूपेण दक्षिणाविभागाधिकरणम् ]

## समं स्यादश्रुतित्वात् ॥५३॥ पू०

एतदधिकरणं प्रसक्तानुप्रसक्तेनारभ्यते। तथा पूर्वोक्तविभागोपोद्बलकं च। असत्यस्मिन्निर्विशेषो विभागो दुस्थ[4] एव स्यादिति। तत्राविशेषात् साम्यं लोकवद् वा यथाप्रयासमिति पूर्वः पक्षः। द्वादशाहिकात्समाख्यानात् तदनुरूपो विभाग इति सिद्धान्तः ॥५३॥

[ १४—भूसंज्ञकक्रतावुपदिष्टदक्षिणया प्राकृतदक्षिणाबाधाधिकरणम् ]

## तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्यात् यथेष्टिर्गुणशब्देन ॥५६॥

शाखान्तरवाक्यमङ्गीकृत्य चिन्त्यते। यत्र गवादीनि द्रव्याणि तस्य

---

१. ऋत्विग्भ्यः क.
२. आनमन्ति क.
३. प्र. नास्ति क.
४. दुःस्थो द्रव्यस्य. ख.

द्वादशशतमिति चैकवाक्यभूतं श्रूयते। भाष्योक्तं कारणसन्देहं दर्शयति—**विकृतिसिद्ध्यर्थं प्रकृतिं तावन्निरूपयामः**। यदि प्रकृतौ गवादयः प्रधानभूता दक्षिणां प्रति ततः प्रतिप्रधानं गुणसम्बन्धात् प्रत्येकं गवादीनां दक्षिणात्वात् दक्षिणात्वेन विधीयमानैकद्रव्यस्यैव[1] **निवर्तिका धेनुः**, तावतैवोपपन्नत्वात्। अतश्च गवामेव धेन्वा निवृत्तिः। **अथ तु दक्षिणा** प्रधानभूता ततः सर्वद्रव्यात्मिका सैकैवेति दक्षिणात्वेन श्रूयमाणा **कृत्स्नस्य दाक्षिण्यस्य निवर्त्तिका धेनु**र्भवतीति पूर्वपक्षमाह। **गवादयोऽत्र प्रधानभूताः। कुतः? ते ह्यत्र निर्दिश्यन्ते** न तत्समुदायः। तेन [2]**दक्षिणा तान् प्रति** एकैकमुद्दिश्य **विधीयते**। ननु चशब्देन तेषां समुच्चयो गम्यते। स दक्षिणाशब्देन सम्बध्यते। गवादयस्तु तद्विशेषणमत [3]आह भाष्यकारः— [4]**चशब्दः समुच्चयार्थो भवति, न समुच्चयस्य निर्देशक इति। तस्य कोऽभिप्रायः?** केचित्किलास्याभिप्रायमाहुः[5]—अनुवादकोऽयं चशब्दः प्रमाणान्तरसिद्धस्यार्थस्य न विधायक इति। अपरे पुनः द्योतकाश्चादयो न तु वाचका इत्येवं व्याचक्षते। तद्भ्रमापनोदनायार्थवत्त्वं वक्तुं प्रश्नः। उत्तरम्—**शब्दास्तावद् द्विप्रकाराः। केचिद्वाच्यमर्थं स्वप्रधानमाहुः नोपसर्जनत्वेन। यथा वृक्षाविति। वृक्षशब्दः** [6]**स्वार्थवानुच्चार्यते** स्वप्रधानभूतार्थवानित्यर्थः। **केचित्तु वाच्यमर्थमन्योपसर्जनीभूतं ब्रुवते न प्रधानभूतम्। यथात्रैव वृक्षाविति द्विवचनं प्रातिपदिकोपसर्जनभूत**[7]**मात्मार्थं ब्रवीति।** ननु द्वित्वमात्रवचनमिदं

---

१. एकद्रव्यनि० मु. पा.

२. दक्षिणा तावत्प्रत्येकं. क.

३. तदाह. क.

४. न च शब्द मु. पा. आशुद्धः प्रतिभाति।

५. किलास्यार्थमाहुः क.

६. स्वप्रधान मु. पा.

७. भूतं. नास्ति. ख.

न तु तद्विशिष्टं प्रातिपदिकार्थं वक्ति, अत आह-**द्विवचनार्थं द्वित्वमेवाहजहत्।** [१]अजहदेवेत्यन्वयः। एतदुक्तं भवति—द्वित्वमेवाभिधीयमानं स्वभावात् पूर्वावगतप्रातिपदिकार्थविशेषणत्वेन प्रतीयते न स्वातन्त्रेण। **एवं चशब्दोऽपि समुच्चयं ब्रुवन्** नियमेन शब्दान्तरात्पर उच्चार्यमाणः **परोपसर्जनत्वेन ब्रवीति न स्वं प्राधान्येन।** यद्यपि चास्य प्रत्ययवत्परत्वं न स्मर्यते तथापि प्रयोगनियमात् अनभिधानाच्च परस्तादेवास्य प्रयोगः। न ह्यसौ पुरस्तात्प्रयुज्यमानोऽर्थमभिधत्ते। **तस्माद्यस्योपसर्जनं चशब्दः सोऽत्र क्रियागुणाभ्यां सम्बध्यते।** तदेतत् **प्रधाने कार्यसम्प्रत्ययात्** सिद्धमिति। कोऽभिप्राय इत्यभिप्रायशब्देनेतिकरणो[२]ऽनुसन्धेय इत्यभिप्रायो [३]भाष्यस्येति। किं तत्प्रधानमित्याह—**ते चात्र गवादयः।** तस्मात् तैर्दक्षिणाशब्दस्य सम्बन्धः। ननु समुच्चयपर्यायश्चशब्दस्तद्वदेव च स्वतन्त्रार्थवचनः स्यादत आह— **न चशब्दः** [४]**समुच्चयस्य सर्वथा पर्यायवचनः। समुच्चयशब्दो** हि समुच्चयं **प्राधान्येन निर्दिशति नान्यत्र गुणभावेन।** तच्च दर्शितं भाष्ये। एवं स्वमतेन[५] व्याख्याय परमतं दूषयति-तत्रानुवादपक्षं 'तृतीया च बहोः छन्दसि' इत्यादिषु बहुशोऽभिधायकत्वदर्शनादतितुच्छमुपेक्ष्य द्योतकपक्षं दूषयति–[६]**चादयः** [७]**स्वार्थवक्तारः न द्योतकाः। कथम्? शब्दस्तावददृष्ट्या शक्त्यार्थमभिधत्ते।** तेन स एव [८]न्यायः ( स एव **चशब्दः**, समुच्चयाभिधायी कल्पयितुं न्याय्यः। ) **कथं एकशक्तिकल्पनादन्यथा शब्दान्तरस्य तदभिधायिता**

---

१. अजहदित्यर्थः. क.

२. इतिकरणेन. क.

३. भाष्यकारस्य. क.

४. समुच्चयपर्यायवचनः. क.

५. मतं. क.

६. गवादय इति मुद्रितपाठः प्रमादः।

७. स्वार्थस्य. क.

८. नाद्यः मु. पा. ( ) चिन्हान्तर्गतः खण्डितः कपुस्तके.

चशब्दस्य द्योतकत्वमिति शक्तिद्वयं स्यात्। अपि च वृक्षशब्द उच्चरिते वृक्षार्थ एव मनसि विपरिवर्तते नान्यसहितः प्राक् च शब्दोच्चारणात्। उच्चरिते तु चशब्दे इतरेतरयोगः प्रतीयते। यस्य चोच्चारणाद्योऽर्थः प्रतीयते स तस्यार्थः। तस्माद् वाचकश्चशब्दः परविशेषणत्वेन वक्तीत्येतावत्। न चैवं समुच्चयेन विशेषिता गवादयो न प्रत्येकं दक्षिणाः स्युरत आह—गवादीनामुद्दिश्यमानानां विशेषणमविवक्षितम्। तस्मादेकैकस्य दक्षिणया सम्बन्धः। उद्देश्यता च तेषां प्राधान्यात्। प्राधान्यञ्च द्रव्यत्वात्। दक्षिणाशब्दो हि गुणवचनः स द्रव्यशब्दैः समुच्चरितः। द्रव्यगुणयोश्च द्रव्यं प्रधानतः गुणस्तु गुण इति सिद्धमेतत् ॥५६॥

**स क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवायाद्धि कर्मभिः ॥५७॥ सि०**

इतरेतरयुक्ता गवादयः प्रधानभूतां दक्षिणां प्रति विधीयन्ते। कुतः? द्वादशशतसङ्ख्योपादनसामर्थ्यात्। यदि हि गवादीनुद्दिश्य दक्षिणा विधीयते तथा सति न सङ्ख्या दक्षिणां प्रति विधीयेत, वाक्यभेदप्रसङ्गात्। दक्षिणाशब्दस्य विरुद्धत्रिकद्वयारत्तेः। यदि चैतद्दोषपरिजिहीर्षया गवादय एव सङ्ख्यां प्रति प्रधानभूताः, तथा सति तस्य द्वादशशतमित्यत्र दक्षिणाधिकरणप्रथमपक्षवत् तेषामिति बहुवचनं प्राप्नोति। किञ्च गवादीनां प्राधान्ये सत्यदृष्टकल्पना विधेः प्राप्नोति कुतः? अन्यत्राशेषभावात्। गवादीनां दक्षिणाप्राधान्ये तु नादृष्टं कल्प्यम् ऋत्विग्भ्यो दक्षिणां ददातीति ऋत्विगर्थत्वेन तस्या विहितत्वात्। अपि च गुणवचनोऽयं दक्षिणाशब्दः, स यदा द्रव्ये गुण उपसर्जनीभूतस्तदा द्रव्यस्यैव यल्लिङ्गसङ्ख्यं तदेव लभते 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति स्मरणात्। गुणशब्दश्चात्र परोपसर्जनवचनः न रूपादिवचन इत्युक्तं कर्त्रधिकरणे। इह च बहूनि द्रव्याणि गवादीनि। तस्मात् बहुवचनेन भवितव्यं दक्षिणा इति। न च प्रत्येकमावृत्त्या सम्बन्धादयमदोष इति वाच्यम्। अनुषङ्गस्य सत्याङ्गतावन्याय्यत्वात्। यदा तु स्वप्राधान्येन विवक्षितो

**गुणस्तदा द्रव्यस्य यल्लिङ्गसंख्यं तन्न लभते,** प्रमाणाभावात् । तथापि कथमेकवचनमित्याह—**भवितव्यञ्च गुणस्यापि केनचिद् वचनेन । तस्मात्** प्राथम्यात् **एकवचनं युक्तम् ।** तस्मादेकं दाक्षिण्यमिति कृत्स्नस्य निवर्तिका धेनुरिति ॥५७॥

[ १५–नैमित्तिकगोदक्षिणासंख्यया प्राकृतगोसंख्याबाधाधिकरणम् ]

## एकां पञ्चेति धेनुवत् ॥५८॥ पू०

एकां गामिति मुख्यत्वादप्राप्तत्वाच्चैकशब्दार्थो विधीयते, न गोशब्दार्थः, तस्य जघन्यत्वात् । स तु किं दक्षिणादाने विधीयते ? किं वा गवीति ? तत्र धात्वर्थसम्बन्धलाभात् द्वितीयाश्रुत्या च दक्षिणादाने विधीयते धेनुवत् । गोसङ्ख्यासम्बन्धे ह्यत्यन्तं वाक्यं स्यादिति पूर्वः पक्षः । त्रिवत्सश्चेत्यादिसूत्र-द्वयं न्यायान्तरं सम्भवन्न तिरोधातव्यमित्यभिप्रेत्य[१] प्रथममन्तरागर्भिणीत्वेन व्याख्याय पुनः तत्र वाक्यभेददोषो[२] माभूदिति लिङ्गत्वेनैव व्याख्यातवानिति । सिद्धान्तस्तु—यदि तावदेकां दक्षिणां ददातीति विधीयते तथासत्यानर्थक्यं विधेः । प्रकृतावपि ह्येकैव दक्षिणेत्युक्तम् । अथैकमेव द्रव्यं दक्षिणेत्युच्येत[३], तथा सति प्राकृतानामन्यतमत् यत् किञ्चित् स्यात् । तत्र गोशब्दः पाक्षिका-नुवादोऽश्वाद्युपलक्षणार्थो वा स्यात् । तत्रात्यन्तं श्रुतिबाधः । तस्माद् गोसङ्ख्यासम्बन्धस्य विधानम् । यद्यपि द्वितीयाश्रुत्यैकामित्यस्यापि पदस्य क्रियासम्बन्धः श्रौतस्तथाप्यविधित्सिते तस्मिन्ननयोरेव परस्परसम्बन्धो वाक्य-लक्षणो विधीयते । भवतु वा दक्षिणाया विधानम्, तथापि न द्रव्यमनेन विधीयते, संख्यामात्राभिधायित्वात् न सैव विधीयते । सा तु सङ्ख्या-सामान्यात् प्राकृतीं द्वादशशतसङ्ख्यां विकरोति । सा च गोपरिच्छेदेनोपकृत-वतीतीयमपि गोविषया भवति । स्त्रीलिङ्गमपि तत्र गोविषयत्वाद् दक्षिणा-

---

१. तिरोधानव्यमित्यन्तरा. क.

२. वाक्यभेदो. क.

३. उच्यते. ख.

सामानाधिकरण्याद्वा प्राप्तमनूद्यते । तेन फलतो[१] गोसम्बन्धो विहितो भवतीति अश्वादीनामनिवृत्तिः ॥

[ १६–त्रिवत्ससोमक्रयणेन प्राकृतसोमक्रयणानां बाधाधिकरणम् ॥ ]

## त्रिवत्सश्च ॥६०॥ सि०

"त्रिवत्सः साण्डः सोमक्रयणः" इत्यत्रापि तर्हि साण्डानुवादेन त्रिवत्सत्वं वयो विधीयत इति पूर्वेण न्यायेनान्येषामनिवृत्तिः स्यात् । तत्र कश्चिदाह–द्रव्यविशिष्टवयोवचनोऽयं त्रिवत्सशब्दो न वयोमात्रवचनः । न द्रव्यं द्रव्यान्तरे[२] विधातुं शक्यमिति कथ एव तस्य विधानमिति । नैतद्युक्तम्[३], विशिष्टवचनेनापि[४] शब्देनांशस्य[५] प्राप्तौ सत्यामंशान्तरं शक्यं विधातुम् "दण्डीप्रैषानन्वाह" इतिवदित्युक्तमेतत् । अपि च नात्र क्रयः स्वतन्त्रः श्रूयते । सोमक्रयण इति कृदन्तेन क्रयविशिष्टद्रव्याभिधानात्तत्र न द्रव्यं द्रव्यान्तरे विधातुं शक्यमिति[६] तुल्योऽयं दोषः । न चांपसर्जनीभूतः क्रयः पृथक्कृत्य त्रिवत्सशब्देन शक्यते योक्तुम् । तत्रावश्यं द्रव्ययोरेव सम्बन्धो विशेषणप्रधान इति वक्तव्यम् । एवं साण्ड[७] शब्दोऽपि [८]विशेष्यभूतवयःप्रधानो भविष्यति । यद्वा विशेषणप्रधान एवायम्, त्रिवत्सशब्दस्य [९]त्रिवर्षद्रव्यवचनत्वात् । तस्मादन्यदुत्तरं वाच्यम् । तदुच्यते इह तावदप्राप्तत्वात् त्रिवत्सो विधीयते । सति च

---

१. गोसङ्ख्यासम्बन्धः क.
२. द्रव्यान्तरेण क.
३. तदयुक्तं क.
४. अपि नास्ति क.
५. अंशप्राप्तौ ख.
६. तुल्यो दोषः क.
७. सम्बन्धोऽपि ख.
८. विशेषण क.
९. त्रिवर्ष नास्ति क.

सम्भवे धात्वर्थे विधातुं न्याय्यन्, क्रियासम्बन्धलाभात् त्रिवत्सस्य नात्र कस्य चिदानर्थक्यं श्रुतिपीडा वा पाक्षिकानुवादत्वं वास्ति, येन धात्वर्थसम्बन्धस्त्रिवत्सस्य बाध्येत। किञ्च साण्डानुवादेन त्रिवत्सविधावग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयणशब्दस्यानुवादासम्भवादानर्थक्यम्। यः सोमक्रयणः साण्ड इति च विशिष्टानुवादे वाक्यभेदः। तस्मात् क्रयानुवादेनैकपदोपात्तं त्रिवत्सद्रव्य पुल्लिङ्गं च विधीयते। साण्डशब्दस्तु नित्यानुवादः। तस्मात्सर्वेषां निवृत्तिः। एका गामित्यत्र तु दक्षिणातोऽन्यत्रैकसङ्ख्यस्य[1] कर्मकारकरूपस्य गोद्रव्यस्य प्राप्त्यभावात् कर्मभूतगोमात्रमुद्दिश्यापि विहितमेकत्वं दक्षिणायामेव सामर्थ्याद्भवतीति दक्षिणां ददातीत्यनुवाद उपपन्न इति वैषम्यम्॥

[ १७— आश्विमेधिकप्राकाशाभ्यां प्राकृताध्वर्युभागबाधाधिकरणम् ]

## [2]प्रकाशौ तथेति चेत्॥६३॥

ददातं प्रकृतितः प्राप्तमनूद्य प्राकाशौ विधीयेते, न त्वपूर्वं दानं विशिष्टविधिदोषात्। ननु 'हिरण्मयौ प्राकाशौ' इत्यनेकार्थोपादानाद्विशिष्टविधिरेवायमन्यथा वाक्यभेदादत आह—**हिरण्मयाविति न विधीयते। कुतः? प्राकाशाविति हिरण्मयावेवोच्येते, नान्यद्रव्यमयौ धेनुशब्दवत्।** न चैकपदोपात्तानेकार्थविधौ वाक्यभेदः। माभूद्विशिष्टविधानं प्राकाशावेवाध्वर्यवनुवादेन विधीयेयाताम् एकत्वमिव गामनूद्य, न ददात्यनुवादेन। अत आह—**यदि प्राकाशाध्वर्युसम्बन्धो भवेत्तथा सत्यन्तमेव वाक्यं स्यात्।**[3] **न धात्वर्थो विधीयते।** न धात्वन्वयोऽन्यत्र **न धात्वर्थेऽन्यत्किंचित् अपि च कारकविभक्तिश्च श्रुत्यैव प्राकाशयोर्ददातिना सम्बन्धं ब्रवीति।** यत्त्वेकां गामितिवदित्युक्तम्, [4]तत्राह युक्तस्तत्र सामानाधिकरण्यात् **सम्बन्धः। इह**

---

१. अन्यत्रानेकसङ्ख्यस्य क.

२. प्राकाशौ च क.

३. तस्मान्न क.

४. तत्र हि सामानाधिकरण्यात् क.

तु न सामानाधिकरण्यम् वैय्यधिकरण्यञ्च[१] नाम्नोर्न षष्ठ्या विना सिध्यतीति अध्वर्युसम्बन्धे अध्वर्युशब्दात्[२] षष्ठ्यभविष्यत्। तेन द्वितीयाचतुर्थीभ्यामुभयोर्ददातीति[३] सम्बन्धः न मिथः। तस्माद् ददातिमनूद्य प्राकाशविधिः। उद्दिश्यमानं चाशक्यमध्वर्युणा विशेष्टुमिति कृत्स्नदाक्षिण्यनिवृत्तिः। अत्र भाष्यग्रन्थः—अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण सम्बध्यते अविशिष्टमेव कार्यं प्राप्नोतीति, तस्य कोऽभिप्रायः। उत्तरम्–अस्मिन् वाक्ये ददातिमनूद्य प्राकाशौ विधीयेते एतस्यां चानुवादावस्थायां ददातेर्विशेषणं श्रूयमाणमप्यविवक्षितं वाक्यभेदप्रसङ्गात्। प्रयुज्यमानमपि हि विशेषणं यदशक्तं विशेष्टुं[४] तन्न विशिनष्टि। कथमशक्तम्? उत्तरम्—प्रधानभूतोऽत्र ददातिः, प्रधानस्य[५] च लिङ्गसङ्ख्यमविवक्षितम्। कथम्? प्रत्ययः साक्षात्तावत् क्रियां विधत्ते। क्रिया च विधीयमाना कारकैर्विना न भवति, कारकाणि च स्वविशेषणैर्विना न भवन्ति। तस्मात्क्रिया च कारकाणि च कारकविशेषणानि च प्रत्ययेन परामृश्यन्ते। ननु यः क्रियां प्रत्युद्दिश्यते स हि प्रधानभूतः क्रियां प्रति, न तु स क्रियाङ्गम। क्रियैव तु तदर्था। तस्य प्रधानभूतस्य यल्लिङ्गसङ्ख्यं तदनङ्गत्वात् क्रियायाः प्रत्ययेन न परामृश्यते। क्रियाग्रहणञ्चात्र विधेयोपलक्षणार्थम्, लिङ्गसङ्ख्याग्रहणञ्च विशेषणोपलक्षणार्थम्। यद्विधीयते तस्य यत्प्रधानं तस्य विशेषणमविवक्षितमित्यर्थः। तस्माद् यत् क्रियार्थं प्रातिपदिकमुपादीयते तस्य यल्लिङ्गसङ्ख्यं तदेव विवक्षितं क्रियाङ्गत्वात्। प्रधानस्य तु ददातेः विशेषणमध्वर्युः[६] न विवक्षितम्। अयञ्च भाष्यार्थः–सत्यपि श्रूयमा-

---

१. तु० क.

२. अध्वर्युशब्दात् नास्ति क.

३. चतुर्थीभ्यां ददाति सम्बन्धः क.

४. विशेष्यं मु. पा.

५. प्रधानभूतस्य ख.

६. अध्वर्युणा क.

णेऽपि विशेषणे तस्य विधिसंस्पर्शाभावादविशिष्ट एव ददातिः प्राकाशसम्बन्धी स्यादिति। **तस्मात्कृत्स्नविकारौ प्राकाशौ अध्वर्युशब्दस्त्ववयुत्यानुवाद** इति। अपि तु **न कृत्स्नस्य दाक्षिण्यस्य निवर्तकौ प्राकाशौ**। कुतः? **यदि** ह्यध्वर्यवे ददातीत्यतो वाक्यात् पृथग्भूतौ दाक्षिण्यमनूद्य प्राकाशौ प्रथमान्तौ **विधीयेयातां** ततः कृत्स्नाया दक्षिणाया निवर्तकौ[1] स्याताम्–**प्राकाशौ दक्षिणेति तौ चाध्वर्यवे** इति। पश्चाद् वाक्यान्तरेण पुरुषापनयः स्यात्–**यथौदुम्बरः सोमचमसो दक्षिणा स ब्रह्मणे देय** इति, न त्वेवमस्ति। कथमित्याह–**एकश्चेदं वाक्यं प्राकाशावध्वर्यवे ददातीति**। चशब्दो हेतौ। अत एव **प्राकाशाविति न चेयं प्रथमा, यथा सोमचमस इति। किं तर्हि[2] द्वितीया[3]।** ततः किमित्याह—**सा चाध्वर्युददातिना [भ्यां] सम्बध्यते, न ददातिमात्रेण।** कथम्? अध्वर्युपदैकवाक्यत्वात् तदानन्तर्यात्। यत्तूद्दिश्यमानं न विशेष्टुं शक्यमिति तत्राह—**तत्र चाध्वर्युप्राकाशयोर्ददातिना** ददातिपरेण विधिना **सम्बन्धो विधीयते, न तु ददातिमध्वर्युविशिष्टमुद्दिश्य** प्राकाशौ विधीयेते यतो वाक्यभेदः स्यात्। **नापि ददातिमात्रमुद्दिश्य, अध्वर्युशब्दस्यावयुत्यानुवाददोषाद्व्यवहितसम्बन्धाच्च। किन्त्वध्वर्युमेवोद्दिश्येति।** ननु तदापि ददातिरनर्थकः स्यादत आह—**तत्र चतुर्थ्यन्ताध्वर्युसम्बन्धो ग्रहीतव्यः** नाध्वर्युस्वरूपेण तयोस्सम्बन्धः, किन्तु चतुर्थीश्रवणादध्वर्युविशिष्टसम्प्रदानकारकमुद्दिश्य सम्प्रदेयतया तयोर्विधिः। तर्ह्य [तद] विशिष्टं नोद्देश्यं भवितुं क्षममिति तस्मिन्नध्वर्युणा विशेष्यमाणेऽपि हविषि वार्तौ न वाक्यभेदः। सम्प्रदानसम्प्रदेयसम्बन्धश्चासति दानेऽनुपपन्न इति नित्याक्षिप्तो ददातिरनूद्यत इति। **ननु श्रुत्यैव क्रियया कारकाणि सम्बध्यन्ते तेन ददातिप्राकाशयोरेव सम्बन्धो भविष्यति** न त्वध्वर्युप्राकाशयोः, षष्ठी हि[4] तदा स्यादिति।

---

१. प्राकाशो स्याताम् क.

२. का तर्हि क, ख.

३. प्राकाशाविति अतः क.

४. तथा ख.

उच्यते— **अविधीयमानत्वाद् ददातेरिह वाक्यसम्बन्ध एव[1] बलवान् भवति।** ददातिग्रहणं तदङ्गस्याप्युपलक्षणम्। यस्मादत्र ददातिर्न विधीयते प्राप्तत्वात्, नापि तत्र प्राकाशौ, अध्वर्युशब्दस्याप्रमादपाठात्। तस्मादविधित्सिते श्रुत्यर्थे वाक्यव्यापारो भविष्यति। एतदेव विवृणोति—**विधीयमानायान्तु क्रियायां कारकाण्युद्भूतशक्तीनि[2] भवन्ति** कार्यक्षमाणि भवन्तीत्यर्थः। **तानि चोद्भूतशक्तीनि क्रियया सम्बध्यन्ते कारकत्वात्[3] कारकाणि। अविधीयमानायान्तु क्रियायामनुद्भूतशक्तीनि[4]** कारकाणि[5] **न भवन्ति।** तत्राविवक्षिते **श्रुत्यर्थे सत्यानन्तर्येण यः सम्बन्धः** षष्ठ्यभावेऽपि **वाक्यलक्षण**समभिव्याहारप्रमाणकः प्रतीयते **स एव ग्रहीतव्यः, न व्यवहितेन[6] ददातिना।** कथं व्यवधानमत[7] आह **अध्वर्युपदेन व्यवधानात्** प्राकशयोः। **नासौ वाक्यानपेक्षिणी श्रुतिरित्येवमादि**भाष्यग्रन्थोऽनेनैव श्रुत्यर्थस्याविधित्सितत्वन्यायेन[8] नेयः। इममेव न्यायमवष्टभ्यैतदुच्यते। अन्यथा हि व्यवहितमपि श्रुतिवशात् अरुणावत् क्रियया [9]सम्बध्येत। तथा **प्रसिद्धिर्येयं** कारकविभक्तिराख्यातसम्बन्धिनीति सा **दर्शनेन बाध्यत इत्ययमपि** ग्रन्थो**ऽविधीयमानत्वादेव नेयः।** योग्यत्वं दर्शनेन बाध्यत इतीदं भाष्यमर्थत[10] उपपन्नम्। **तस्मादध्वर्युणा सम्बन्धात्तद्भागस्यैव निवृत्तिः। एकाङ्गमित्य-**

---

१. बलात् क.

२. भवन्तीति क.

३. कारणात् ख.

४. क्रियायामुद्भूतशक्तीनि. क, ख.

५. कारणानि ख.

६. श्रुत्यर्थन ददातिना क.

७. इत्याह क.

८. न्यायेनैव क.

९. सम्बध्यते ख.

१०. उपात्तं क.

त्राप्येकशब्दस्य गोशब्देन सम्बन्धो न ददातिनेति यत्पूर्वाधिकरणं तत्राप्यनूद्यमानत्वादेव क्रियाया इत्ययमेव न्याय इत्युल्लङ्घितं पूर्वाधिकरणमिह व्याख्यातमिति। यत्तु भाष्यकारेण विशिष्टविधानमित्युक्तं तदुत्तरविभवात् सर्वथा न कृत्स्ननिवृत्तिरेत्येवं परमिति वेदितव्यमिति।

एवमिदमधिकरणं समाप्योपरितनमप्यधिकरणत्रयमत्रैव स्थित्वा संक्षिप्य दर्शयति —तत्र यदिदमधिकरणमपेक्ष्य द्वितीयमधिकरणं 'धेनुवच्चाश्वदक्षिणा' इति तत्र **कृत्स्नस्य** दाक्षिण्यस्य निवर्तकोऽश्वः। तृतीयमपि [1]कृत्स्नस्यैव। का पुनस्तत्र विशेषाशङ्केत्याह—**लिङ्गाशङ्कानिवृत्त्यर्थं त्वारभ्यते**। ॠतपेये हि "यत्पशून् दद्यादनृतं कुर्यात्" इति पशुदानप्रतिषेधो विधीयते। स च प्राप्तिपूर्वकः। तद्यदि सोमचमसः कृत्स्नस्य निवर्तकः ततः प्राप्त्यभावात् प्रतिषेधो नावकल्पेत। तस्माल्लिङ्गात् न [2]कृत्स्नस्य दाक्षिण्यस्य निवर्तक इतीमामाशङ्कां निवर्तयितुमारभ्यते। अनुवादोऽयमर्थवादः सोमचमसप्रशंसार्थः[3]। तदेकवाक्यत्वान्न विधिरिति। यजुर्युक्ताधिकरणन्तु न कृत्स्नविकारो नापीदन्ताविकारः[4] न भागविकारः इत्यर्थः। किन्त्वध्वर्युभागनियमार्थत्वम्। त्र्यधिकरणं कृत्वा चिन्ता। अधिकरणं तु स्पष्टत्वान्नानुक्रान्तमिति तदेतानि क्रमेण व्याख्यास्यामः॥

[ १८—उपहव्याश्वदक्षिणया कृत्स्नक्रतुदाक्षिण्यनिवृत्त्यधिकरणम् ]

**धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥६५॥ सि०**

दक्षिणोद्देशेनापि विहितोऽश्वः पश्चाद् ब्रह्मण्येवोपसंहृतः तद्भागमेव निवर्तयितुमर्हति नान्यान् भागान्। अवश्यञ्च पुरुषान्तराणामप्यानतिः कर्तव्या। सा च ब्रह्मणे दीयमानेनाश्वेन न सिध्यतीत्यलुप्तार्थत्वात्तद्भा-

---

१. कृत्स्नस्य ख.

२. कृत्स्नस्य निवर्तक इति तामाशङ्कां क.

३. प्रशंसार्थवादः ख.

४. विभाग. क.

गानामनिवृत्तिः । नैवम्; यद्यत्र दक्षिणाशब्दो न श्रूयेत ततः प्रकृतौ दान-पृथक्त्वात्सर्वत्राविशेषात् प्रसक्तोऽपि वचनान्तरेण चतुर्धा करणविाग्नेये ब्रह्मण्युपसंह्रियेत शब्दविरोधाभावात् । दक्षिणाशब्दस्तु इह श्रूयते । क्रत्वङ्गत्वेन चैका दक्षिणा प्राप्ता, तामुद्दिश्याश्वो विधीयते । तेन च क्रतावस्मिन्नानतिः कर्तव्येतीतरेषामानत्यर्थानां निवृत्तिः । इतरथा हि दक्षिणाशब्दस्तदेकदेशे लक्षणया वर्तेत । सा चान्याय्या । पश्चात्तु सर्वेभ्यो दातव्योऽश्वो वचनादि-तरेभ्योऽपनीय ब्रह्मणे दीयते । पुरुषान्तराणां त्वानतौ लौकिकोपायः समाश्र-यितव्य इति ॥ ६५ ॥

[ १६—सोमचमसस्य प्राकृतकृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ]

## तथा च सोमचमसः ॥६८॥ पू०

अत्र विशेषाशङ्का पूर्वमेवोक्ता । केचित्त्वेकवाक्यतया विशेषं वर्णयन्ति । तदयुक्तम्; वाक्यभेदस्य पूर्ववदत्रापि स्पष्टत्वात् । तत्रापि "अश्वः श्यावो दक्षिणा स ह्यनिरुक्तः । स ब्रह्मणे देयः" इति । इहापि "चमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः" इति श्रुतिसाम्ये कथमिहैकवाक्यता स्यात् । ननु [1]तत्र स ह्यनिरुक्त इति मध्येऽर्थवादश्रवणात् वाक्यभेदः स्यात् । इह तु कथम्? इहापि सशब्दश्रवणात् । एकवाक्यत्वे हि सशब्दो नान्वियात् । अपि चात्रापि भूयानर्थवादश्छान्दोग्ये श्रूयते "सोमचमसो दक्षिणा देवतयैव देवता अप्येति औदुम्बरो भवत्यूर्ग्[2] उदुम्बर" इत्याम्नाय पश्चात् "ब्रह्मणे देयः" इति श्रवणात् । यद्यप्यङ्गीकृत्यैकवाक्यत्वं सिद्धान्तितम्[3], तदप्ययुक्तम्; तदापि ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः । यदप्यसत्यपि दक्षिणाशब्दे पूर्वा-धिकरणे कृत्स्ननिवृत्तिरित्युक्तं तदपि तत्रैव निरस्तम् । तस्माद्वार्तिकोक्तैवात्र

---

१. तत्र नास्ति. ख.

२. ऊर्वा. क, क.

३. कपुस्तकेऽत्रांशः कश्चन खण्डितः ।

विशेषाशङ्का युक्तेति । एवं वा—सोमचमसो ब्रह्मणे [1]ददातीत्येकवाक्यतां कृत्वा चिन्त्यते । तदापि दक्षिणाशब्दस्य कृत्स्नवचनत्वात् एकदेशे लक्षणापत्तेः कृत्स्नस्य निवृत्तिरित्येवं पूर्वपक्षमुत्सूत्रमाशङ्क्य 'यदि तु ब्रह्मण' इत्याद्येन सूत्रेण सिद्धान्त उच्यते । दक्षिणोद्देशेन[2] चमसविधौ ब्रह्मग्रहणमनर्थकं स्यात् । अथ तदपि विधीयेत ततः प्राप्तायां दक्षिणायां ब्रह्मसम्बन्धश्च मससम्बन्धश्च विधीयत इति वाक्यभेदः स्यात् । अथोभयविशिष्टा दक्षिणा विधीयते तथा सत्यप्राकृतमिदं दक्षिणान्तरं ब्रह्मानत्यर्थं विहितं तद्भागमेव प्राकृतं कृतकरं निवर्तयेत्, न भागान्तराणि प्राकाशन्यायेन । तेन द्वे दक्षिणे पृथक् कार्ये समुच्चीयेते । तस्माच्चतुर्थ्यन्तब्रह्मसम्बन्ध एवात्र प्राकाशवत्सोमचमसस्य विधीयते दक्षिणाशब्दस्त्वनुवादः । न चानुवादे लक्षणादोषः । [3]तदेवात्र क्लिष्टविधानम् । तस्मादेकवाक्यत्वेन ब्रह्मभागस्यैव निवृत्तिः । 'सर्वं वा पुरुषापनयात्' इति द्वितीयसूत्रं कृत्वा चिन्तोद्घाटनमिति ॥

[ २०—यजुर्युक्ताधिकरणम् ]

## यजुर्युक्तोऽध्वर्युर्दक्षिणाविकारः स्यात् ॥७४॥

प्राकाशन्यायेनाध्वर्युभागविकारं मन्यते । वचनान्तरेण रथस्य यजुर्युक्तस्यर्त्विग्वनियमेन प्राप्ते नियममात्रपरत्वे सम्भवति नापूर्वविधानं युक्तम् । यथाप्राप्तस्य च नियमः । प्राप्तश्च द्रव्यान्तरसहितस्यैवेति तादृश एव यजुर्युक्तोऽध्वर्यवे नियम्यते—यद्यजुर्युक्तं ददाति तदध्वर्यव इति नेदन्ताया न कृत्स्नस्य विकारोऽत्र विधीयते । किन्तु वाक्यान्तरप्राप्तो यजुर्युक्तो नियम्यते ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य तृतीयःपादः ॥

---

१. दाक्षणेत्येक. क.

२. इह इत्यधिकं. क.

३. तदेवात्र क्लिष्टविधानं. नास्ति. क.

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमाध्यायस्य चतुर्थः पादः ॥

[ १ — नक्षत्रेष्ट्युपहोमादिभिर्नारिष्टहोमानां समुच्चयाधिकरणम् ]

**प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥१॥ सि०**

"निवीता ऋत्विजः" इत्येतदनुदाहरणम्। कथम्? ज्योतिष्टोम उपवीताभावात् न हि प्रत्यक्षेण[1] नापि चोदकेन ज्योतिष्टोम उपवीतमस्ति, यस्येह श्येने चोदकप्राप्तस्य निवीतेन बाधसमुच्चयौ चिन्त्येयाताम्। माभूज्ज्योतिष्टोमे दर्शपूर्णमासयोस्त्वस्तीति चेत्तत्राह तत्प्रकृतिकश्च श्येनो न दर्शपूर्णमासप्रकृतिकः। नन्वङ्गान्यैष्टिकानि। तेषूपवीतं प्राप्नोति निवीतमपि। तेषु प्रधानादवतीर्णमिति युक्ता चिन्तेत्यत आह—'आनर्थक्यात्तदङ्गेषु' इति न्यायोऽत्र नास्ति येनाङ्गेषु निवीतमवतरेत्। प्रधाने ह्यसम्भवन्[2] धर्मोऽङ्गेऽर्थात्क्रियते। सम्भवति चात्र प्रधान एव निवीतम्। तस्मात् प्रधानाङ्गविषयत्वेन भिन्नविषयत्वात् निवितोपवीतयोर्व्यवस्था, न तु बाधः समुच्चयो वा। तदेवमनुदाहरणमिदम्[3]। उपहोमाद्येव तूदाहरणमिति। ननूपहोमानां प्रत्यक्षविधानात् चोदक एव नास्ति, नक्षत्रेऽष्टौ यथागृहमेधीयस्याज्यभागयोः प्रत्यक्षाम्नानात् यथा च सोमस्य प्रत्यक्षविधानात्। अतो नारिष्टप्राप्त्यभावात् [4]न बाधसमुच्चयचिन्ता घटते। उच्यते—विषम उपन्यासः सोमवदिति। तथाहि—सर्वास्वेव विकृतिषूपमानेन धर्मप्राप्तिः। [5]न च सोमस्य केनचिद्धर्मवता कर्मणा सादृश्यमस्ति।

---

१. प्रत्यक्षेणापि. ख.

२. सोऽङ्गेष्वर्थात्. क.

३. एवमुदाहरणम् मु. पा.

४. न चात्र बाधसमुच्चयो घटेते. क.

५. न चेह केनचित्कर्मणा. क.

**दर्शपूर्णमासौ हि**[1] **विहितधर्मकौ। तौ च व्यक्तचोदनौ। सोमस्त्वा-व्यक्तचोदनः। तस्मादसादृश्यम्।** अस्तु वा सादृश्यं तथाप्युभयत्र सन्निपत्योपकारकाणामारादुपकारकाणां चाम्नानान्न कश्चिद्विशेषोऽस्ति, यैनैकप्रकृतिरितरः स्यात्। **तस्माद्युक्तं यत्सोमे य एव धर्मा विधीयन्ते त एव भवन्ति नान्य इति।** नक्षत्रेष्टावपि[2], तुशब्दार्थेऽपिशब्दः, प्रथमं तावदुपकारापेक्षा **भवति ततः सादृश्येन धर्मप्राप्तिः।** किमिति पुनः सन्निहिते सति धर्मे सादृश्येन तत्प्राप्तिरिति? आह–**न चापूर्वसङ्गं उपकारवद्दृष्टम्**[3], तेनोपकारापेक्षः क्रतुरक्लृप्तसामर्थ्यं सन्निहितमपास्य प्राकृतं क्लृप्तसामर्थ्यमर्थयते। न च सोमवत् सादृश्यम्, यतः [4]**सादृश्यञ्चास्याग्नेये** नास्ति। ततः किमित्याह–तत्र च **प्रकारा अनन्तरिता** अव्यवहिता आग्नेये [5]**विधीयन्ते** अङ्गावान्तरोपकाररूपितस्य प्राकृतस्य तद्वत्तासम्पादनात्मकस्य [6]यागगतस्य व्यापारस्य तद्भेदाद् भेदमुपचर्य बहुवचनान्तान् गृह्णाति विकृतिः। **ते च प्रकारा**[7] **उपकारमन्तरेण न सम्भवन्ति** [8]इति तत्सद्भावः। न ह्युपकारमन्तरेण तद्वान् यागः सम्पादितः स्यात्। **तस्माद्** [9]**यत्प्रकारादनन्तरमुपकारा विद्यन्ते** आग्नेये **तान् गृह्णाति विकृतिः** नोपहोमान। कथमित्याह-**इमे चोपहोमा नोपकारपूर्वका दृष्टाः। तस्मात्प्राकृतमङ्गजातं प्रवर्तते।** यत्तु गृहमेधीयवदित्युक्तं तत्राह–**गृहमेधीये तु दृष्टोपकारावाज्यभागौ पुनः**

---

१. हि. नास्ति. क.

२. नक्षत्रेष्ट्यामपि. कं.

३. उपकारकं. क.

४. सादृश्यश्चात्र. क.

५. विद्यन्ते. क, ख.

६. यागगतव्यापारस्य. क.

७. उपकाराः ख, मु. पा.

८. इति तत्सद्भावः. नास्ति. क.

९. यत्. नास्ति. क.

श्रूयेते तौ शक्नुतो(क) गृहमेधीयं निराकाङ्क्षीकर्तुम्। न च वैकृताना-मुपहोमानां [१]श्रुत्याद्यभावादाज्यभागवत्स प्राकृत उपकारः शक्यते कल्पयितुम् यतस्तेऽपि क्लृप्तोपकाराः स्युः। तस्मात्प्राकृतः[२] प्रवर्तते। नन्वेवं श्रुत्याद्य-भावादनङ्गत्वमेव विकृतावुपहोमानां प्राप्नोति। श्रुत्यादित्रयस्याभावः स्पष्टः। प्रकरणमपि प्राकृतेत्थम्भावनिराकाङ्क्षत्वान्नास्तीति कथमेषामङ्गत्वमिति। उच्यते—सत्यं श्रुत्यादित्रयस्याभावः। किन्तु प्राकृताङ्गसन्दंशोपग्रहणे [३]तेषा-मङ्गत्वाद् ग्रहणम्। तथाहि पूर्वेऽपि ( पूर्वमपि ) पदार्थाः प्राकृताः श्रूयन्ते उपहोमानाम्, तथापरेऽपि ( परमपि ) प्राकृताः तन्मध्य उपहोमा मध्यतो ( सोऽत्र ) जुहोतीति। तस्मादाकाङ्क्षाग्राह्यप्राकृताङ्गसन्दंशेन तेषामप्या-काङ्क्षयैव ग्रहणम्। यत्रापि सन्दंशाभावस्तत्रापि क्रमादेवाङ्गत्वमिति। नन्वि-त्थम्भावो यागगतव्यापारविशेषात्मकः क्रियया सम्बध्यते न क्रियान्तरम्। न हि नक्षत्रेष्टिं कुर्य्यादुपहोमान् कुर्यादिति सम्बन्धसम्भवः। इत्थम्भावश्चैक एवा-पेक्षितः। स च प्राकृत एव गृहीतः। तत्र च नान्तर्गता उपहोमाः। कथ-मेषामङ्गत्वम्? क्रमो[४] ह्येकवाक्यत्वकल्पनया विनियोगकारणं न स्वतः। न चैषामेकवाक्यता[५] सम्भवति अनित्थम्भावत्वात्। उच्यते—सत्यं विकृतेस्त्वेक[६] एवापेक्षित इत्थम्भावः। स च प्राकृत[७] एवेत्थम्भावः। अत्र तु वैकृतपदार्थोप-देशबलात्तदाधिक्येन विकृतौ भवति। यथा कृष्णलादिष्ववघाताद्यसम्भवात्

---

(क) इतो यः यद्दुष्टीकासन्दर्भः न तस्य व्याख्या कृता व्याख्याकाराभ्याम्। सम्पादकोऽपि पाठापरितुष्ट इति भाति।

१. श्रुत्याद्यभावात्स उपकारः. ख.

२. प्राकृतं. ख.

३. तेषां ग्रहणे. ख.

४. क्रमोऽपि. क.

५. सम्भवः। अत्रोच्यते. क.

६. विकृतेरेकः. ख.

७. प्राकृत एव। तथापि स एव. ख.

प्राकृत इत्थम्भावः किञ्चिन्न्यूनो भवति, तथेहाधिक्यं द्रष्टव्यम्। तेन प्राकृत-वैकृतोभयाङ्गत्वजन्योपकारवत्तासम्पादनरूपो व्यापारो विकृतेरिति सम्भवत्येक-वाक्यता। यद्यन्ततोऽप्यपूर्वाणि ग्राह्याणि ततो वरमादावेव तानि गृहीतानि प्राकृतान्युपेक्ष्यन्तामिति चेत् न; तेषामक्लृप्तोपकारत्वात्सन्निपातित्वाभावेन[1] चाकाङ्क्षानुपरमात्। तस्मात्समुच्चयः। पूर्वपक्षमाह—जुहोतिशब्द-सामान्यात्स्थानसामान्याच्च प्रकृतिलिङ्गद्वयान्नारिष्टबाधः। उच्यते—नात्र बाधः। कुतः ? कार्यापत्त्यभावात्। प्रत्यक्षेण तावत् कार्यापत्तिर्नास्ति। यथा "नैवारश्चरुर्भवति" इति व्रीहीणां कार्ये नीवारा वर्तन्ते। ननु शब्देनेयं कार्यापत्तिः। कथं प्रत्यक्षेणेत्युच्यते ? न हि। कुतः ? नीवार-प्रातिपदिकं नीवारान् ब्रवीति तद्धितो विकारम्, चरुशब्दश्चरुम्, बृहस्पति-शब्दस्तस्य देवतासम्बन्धम्, न तु केनचिच्छब्देन व्रीहिकार्यापत्ति-र्गम्यते। प्रत्यक्षेण त्ववगम्यते। तथा हि—व्रीहयः पुरोडाशं निर्वर्तयन्ति। पुरोडाशो यागम्। एवं नीवाराश्चरुं साधयन्ति। चरुश्च यागमित्यु-भयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम्। न चैवमुपहोमनारिष्टहोमानां प्रत्यक्षमेककार्यत्वम्। अदृष्टार्थत्वात्। न चानुमानेन कार्यापत्तिः, यथा "नखावपूतानां चरुः" इति। तत्र हि तुषकणविमोकं दृष्ट्वा फलं नून-मवघातकार्ये, अवहन्यतेऽनेनेत्यवघात उलूखलमुसलम्। तत्कार्ये वर्तते नखवपनम्। नखाख्यमवपवनमवपूयतेऽनेनेति। न[2] चापि प्रतिषेधेन कार्या-पत्तिरनुमीयते, यथा "न गिरा गिरेति ब्रूयात्" इति। ननु परस्पर-निरपेक्षमिदं[3] वाक्यद्वयं विधायकद्वयसद्भावात् ब्रूयादुद्गेयमिति च। अतः कथमिहैकस्य कार्येऽपरस्य विधानम्। उच्यते—एवं सति वाक्यभेदः प्राप्नोति। विधायकशक्तिकल्पना चैकैकस्य स्यात्। तस्माद् गिरापदस्य

१. च. नास्ति. क.

२. नापि. क.

३. निराकाङ्क्षमेवेदं मु. पा.

प्रतिषिध्यमानस्य यत्कार्य[१] साधनाकाङ्क्षं लक्ष्यते तत्रेरापदं विधीयते। तस्मिंश्च विहिते गिरापदप्रतिषेधोऽनुवाद इत्यवाक्यभेदः। तस्मात्कार्यलक्षणार्थं गिरापदमुच्चार्यते, न तु प्रतिषेधार्थं वाक्यभेदादिदोषात्। न चापि लक्षितलक्षणया कार्यापत्तिः। यथा 'पृष्ठ्यः षडहः संतिष्ठते" इति। अत्र ह्यभावः संस्था। तेन चा भावेन संस्थाशब्दाभिधेयेन प्रतिषेधो लक्षणया गम्यते, प्रतिषेधेन च लक्षणया[२] कार्यं गम्यते। कार्ये च मध्वशनघृताशने विधीयेते। नैवमिहास्ति(क)। नापि स्वशब्देन कार्यापत्तिः, यथा 'परिधौ पशुं नियुञ्जीत" इति। जुहोतिशब्दो हि होमान्तरेऽपूर्वे वर्तमानो न प्राकृतहोमकार्यमुपस्थापयितुमलम्, सम्बन्धाभावात्। तस्मात्पञ्चप्रकारापि कार्यापत्तिः नास्त्युपहोमानां येन बाधेरन् प्रकृतम्। न च केनचिदन्येनावगम्यते कार्यापत्तिरिति निरुपपत्तिकोऽयं भाष्यग्रन्थः। पञ्चकातिरिक्तकार्यापत्तिप्रमाणासम्भवादनादरोक्तन्तु भाष्यमिति। अथ नेदं होमान्तरम्। प्राकृत एव तु होमे मन्त्रविधानमित्युच्यतेऽत[३] आह—न च होमानुवादेन मन्त्रविधानं शुद्ध एव तु होमो विधीयतेऽनेन वाक्येन सोऽत्र जुहोतीति। न त्वत्र मन्त्रग्रहणम्। (द्वितीयेन तु वाक्येन मन्त्राः केवलाः पठिताः। "अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा" इत्यादिना तयोर्होममन्त्रयोः सम्बन्धः प्रकरणेन भवति न वाक्येन।) तस्मात् नारिष्टोपहोमयोः समुच्चयः॥

---

१. यत्कार्ये साधनाख्य. क.

२. कार्यं लक्षणया. क.

(क) कार्यापत्तौ (१) प्रत्यक्षेण कार्यापत्तिः (२) अनुमानेन कार्यापत्तिः (३) प्रतिषेधेन कार्यापत्तिः (४) लक्षितलक्षणया कार्यापत्तिः (५) स्वशब्देन कार्यापत्तिः इति पञ्च प्रमाणानि। शास्त्रदीपिकायाः ६१३ पृष्ठे पञ्च स्थानापत्तौ प्रमाणानीत्येषा मयूखमालिकापङ्क्तिरवलोकनीया। तत्रान्यान्येव प्रमाणानि सङ्गृहीतानीति भाति।

३. उच्येतेत्यतः. क. ( ) चिन्हान्तर्गतो भाग खण्डितः क.

एवं वा—"तत्प्रकृतिवचने मयट्" इत्यपि स्मरणात् [१]बहुशरसंयोगो बर्हिषो विधीयते, पाषाणमयी भूरितिवत्। एवं प्राकृतबाधो न भविष्यति। नैवम्, अदृष्टार्थत्वप्रसङ्गात्। तस्माद् बर्हिःकार्ये शरविधानम्। ननु विकारवचनो मयट्, *तेन च बर्हिःकार्यस्य स्तरणस्य शरविकारता सम्भवति। उच्यते—न कार्यस्य तन्मयतेह विधीयते, किन्तु प्राकृतं स्तरणसाधनं* लवनादिसंस्कारविशिष्टं द्रव्यं जातिवाचिनापि[२] बर्हिःशब्देनाभिधीयते। तच्च कुशप्रकृतिकम्। प्रकृतौ संस्कृतावस्थं ह्यसंस्कृतावस्थस्य विकृतिर्भवति 'खादिरो यूपः" इतिवत्। तस्य द्रव्यस्य शरविकारतात्र विधीयते। तेनात्र कुशानां बाधः॥

एवं वा—रथघोषेणेति रथो दर्भयोर्निवर्तकः। घोषो मन्त्रस्य। कुतः? एवं स्वार्थेन रथशब्दो भविष्यति द्वन्द्वत्वात्। इतरथा षष्ठीतत्पुरुषाश्रयणात् परविशेषणत्वेनोच्चार्येत। अनेन रथः परार्थमुच्चरिष्यत[३] इति भाष्यमर्थत उपात्तं व्याचष्टे। विशेषणमिति लक्षणां ब्रवीति श्रुतं स्वार्थम् इति। द्वन्द्वे हि रथशब्दो रथमेव ब्रवीतीति घोषशब्दोऽपि घोषमेव। तत्पुरुषे तु रथः परार्थमुच्चार्येत। तस्माद् द्वन्द्वोऽयम्। ननु द्वन्द्वे सति द्विवचनं प्राप्नोति। उच्यते—'सर्वो द्वन्द्वो विभाषयैकवत् भवति' इत्येवं समाहाराश्रयणेन एकवचनमपि [४]द्वन्द्वे भवत्येव। सिद्धान्तमाह—एवं तर्हि[५] यदि समाहारसमासोऽयम् ततस्तत्पुरुषादपि पापीयानयं समासः प्राप्नोति। कथम्,[६] अत्र हि समाहारसमा। धवखदिरयोर्यः समाहारः स प्रधानभूतः। तं प्रति धवखदिरावुभावप्यत्यन्तं गुणभूतावुच्चार्येते। तल्लक्षणा-

---

** चिन्हान्तर्गतो भागः खण्डितः क.

१. बहुशरस्तम्बोद्भावं बर्हिर्यागे क.

२. अपि नास्ति ख.

३. उच्चार्यंत इति क.

४. द्वन्द्वे नास्ति क.

५. यदि नास्ति ख.

६. कथं नास्ति क.

र्थतयोच्चार्येते इत्यर्थः। कथं लक्षणेत्याह—स च समुदायः चशब्दो हेतौ अनेकार्थसमुदायो हि समाहारः। अतोऽसौ न केनचिच्छब्देनोच्यते। तत्र द्वावपि रथघोषौ परार्थौ समाहारलक्षणार्थौ भवेताम्। तस्मात्तत्पुरुष एष एव श्रेयान्। तत्र ह्येकस्यैव लक्षणार्थयतेता न द्वयोः। अनेन[१] चैतत् ज्ञातये युगपदधिकरणवचनता नाभिमतेति। यदि ह्यभिमता स्यात् तत इतरेतरयोग-द्वन्द्वेऽपि द्वयोरपि[२]लक्षणार्थत्वात् तत्पुरुषात्पापीयस्त्वमस्त्येवेति न विशेषतः 'एवं तर्हि' इत्यादिना समाहारपक्षस्य दोषमुद्भावयेत्। द्वन्द्वमात्रस्यैव[३] त्वापाद-येदिति। प्रयोजनं यदि रथो घोषविशेषणमेवं नियमो भवति रथस्यैव[४]घोषलक्षणं स्यात्। अथान्यार्थः समाहारलक्षणार्थः ततोऽनियमो भवति। घोषमात्रं लक्षणं स्यात्। ननु पूर्वपक्षेऽपि नियम एव स्यात्। अरुणावदैक-कर्म्यात्। उच्यते-असाधारणगुणवचनोऽयं यो गुणः, क्रियाया एवासाधारणः क्रिययैव केवलया साक्षात् सम्बध्यते। ( न तु तत्साधनरूपद्रव्येणापि परिच्छेद-कतया सम्बध्यते। ) तादृशगुणवचनोऽयमिह वाक्ये घोषशब्दः। तेनासौ शब्द एव घोषमात्र एवोपपद्यते न तु शब्दगुणकं द्रव्य परिछेद्यमपेक्षते। स्वरूपेणैव घोषो लक्षणं भवितुमलमुपाकरणस्य। अरुणगुणस्तु साधारणोऽपि भवति। यद्यपि श्रुत्या प्रथमं क्रिययैव सम्बध्यते तथापि केवलस्य क्रयसाधनत्वानुपपत्ते-र्द्रव्यसाधारणोऽपि भवति[५]। द्रव्येणापि पश्चात् सम्बन्धमपेक्षते। तत्र वाक्येनैक-हायनीद्रव्यनियमो भवति। तस्यैव तत्साधानत्वेन परिच्छेदार्हत्वादिति॥

[ २—बृहस्पतिसवादिषु वैकृतप्राकृतग्रहाणां समुच्चयाधिकरणम् ]

## सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत्॥

वैकृतैर्ग्रहैः प्राकृता ग्रहाः निवर्तन्ते न वेति चिन्त्यते। तत्रोभयेषां यागनि-

---

१. च ज्ञायते क.

२. लक्षणार्थतया क.

३. लक्षणार्थतया तत्पुरुषः स्यात् इत्यधिकं कपुस्तके

४. घोषो लक्षणया क.

५. द्रव्यस्य क.

वृत्त्यर्थतयैककार्यत्वावगवान्न समुच्चयः। बाध एवेति पूर्वपक्षमाशङ्क्य प्रकृतिवदधिकं स्यादिति सिद्धान्तितम्। **तत्र प्रकृतिं तावन्निरूपयामः "ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति"[१] इत्येवमादीनि वाक्यानि प्रकृतौ श्रूयन्ते।** तत्र[२] **यद्यैन्द्रवायवेन यजेत मैत्रावरुणेन यजेतेति** श्रूयेत, तथा सति वाक्येनैव निरपेक्षेण विनियोगाद् बन्धनार्थखादिरादिवत् विकल्पः स्यान्न त्वेवं श्रूयते। किं तर्हि ? **इन्द्रवायू देवता अस्येति तद्धितो देवतां द्रव्योपसर्जनीभूतां ब्रवीति।** तच्च **द्रव्यं द्वितीयया गृह्णातिं प्रति** प्रधानभूतम्[३]। गृह्णातिश्च द्रव्यस्य पृथक् कल्पनम्। दृष्टार्थः। स एव गृह्णातिर्दृष्टार्थः। यस्त्वत्र[४] देवतानिर्देशः सोऽदृष्टार्थ एव[५]। एतच्चाभ्युपेत्यापि दृष्टार्थत्वं गृह्णातेर्देवतासंयोगाददृष्टार्थत्वादेव शक्यते समुच्चयो वक्तुमित्यभिप्रायेणोक्तम्। परमार्थतस्तु गृह्णातिरदृष्टार्थ एव। तदुक्तम्—

शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते।
द्रव्येऽस्मिन् देवतोद्देष्टुमित्यदृष्टार्थताविधेः॥ इति।

इहापि च भाष्यकारेणोक्तं विभागश्चादृष्टार्थो देवतोद्देशश्चेति। कथमदृष्टार्थता देवतानिर्देशस्येत्याह—**अन्यत्र**[६] **देवताया** वाक्यान्तरेणाचोदित**त्वात्**। यदि हि चोदिता स्यात् ततो ग्रहणे सङ्कीर्तनं निर्वाणादिष्विव स्मरणार्थं स्यात्। यदि च विना देवतया ग्रहणं न[७] निर्वर्तेत ततोऽपि दृष्टार्थता स्यात्। तदभावात्त्वदृष्टार्थतेति। [८]तस्मादेवाचोदितत्वात्कारणात्

---

१. इत्येवमादिवाक्यानि क.
२. तद्यदि क.
३. गुणभूतं मु. पा.
४. योऽपि स्वार्थस्तत्र क.
५. एव नास्ति ख.
६. अन्यत्र वाक्यान्तरे ख.
७. निर्वर्त क.
८. एतस्मादेव क.

द्वितीयादिष्वपि ग्रहणेषु अयमेव न्यायोऽदृष्टार्थो देवतासंयोग इति। सति चादृष्टार्थत्वे न चैन्द्रवायवोऽयं[1] मैत्रावरुणकार्ये वर्तेत इति प्रमाणमस्ति। येनैकार्थ्याद्विकल्पः स्यात्। तस्माद्देवतासंयोगं सम्पाद्यादृष्टभेदाद् भिन्नान्येतानि ग्रहणानि भेदेन कर्तव्यानि। समुच्चेतव्यानीति यावत्। ननु सर्वासां देवतानां [2]यागनिर्वर्तकत्वेनैकार्थ्यमस्त्येवात आह-यागोऽत्र देवतां स्ववाक्ये श्रवणादपेक्षते। देवताश्च ग्रहणसंयुक्तास्तद्धितोक्ता यागमन्तरेण न सम्भवन्तीति यागमपेक्षन्ते। न ह्ययमर्थान्तरे तद्धितः, मरुत्वतीयादिष्वसाधारणाच्छप्रत्ययादितरेष्वपि देवतासम्बन्धसम्भवे सम्बन्धमात्रस्यानिरूपितविशेषस्यान्याय्यत्वात्। ननु न ग्रहणे देवतान्वयः सम्भवति। सत्यम् यागमन्तरेण न सम्भवति। अत एव तया यागोऽपेक्ष्यत इत्युक्तम्। अतो निर्वापादिवत् ग्रहणमपि यागद्वारं देवतां भजत एव[3] सौर्यं निर्वपेदितिवत्। ननु[4] तत्रानुवादो निर्वपतिः। केन वोक्तं नेति। पदान्वयो ह्यनुवादे विधौ च साधारणः। न ह्यनन्वय्यर्थप्रतिपादकस्यानुवादकतयापि वाक्ये समावेशः सम्भवति। तेन तत्रापि निर्वापेण सौर्यं चरुं कुर्यादित्येवार्थः। तत्र तु प्राप्तत्वाच्चोदकेन निर्वापेणेत्यनुवादः। सौर्यं कुर्याच्चरुमित्येतावत्तु विधित्सितम्। इह त्वप्राप्तत्वाद् ग्रहणेनेन्द्र वायुदैवत्यं कुर्यादिति विधीयते। न च ग्रहणमात्रेण तद्देवत्यता सम्भवति विनायागेनेति यागमपेक्षन्ते देवताः। तयोर्यागदेवतयोः सन्निधानेन सम्बन्धो भवति न वाक्येन। तच्च सन्निधानं सर्वेषां ग्रहणानामविशिष्टमिति निरपेक्षविध्यभावात् समुच्चयो ग्रहणानां देवतानाञ्चेति। ईदृशी तावत्प्रकृतिः। न चैवं प्रधानस्य यागस्य गुणानुरोधेनावृत्तिः स्यात्? तामङ्गीकृत्यैवाह—यागः प्रधानभूतः फले चोदितत्वात्। देवतावाक्यानि सर्वाणि तदर्थानि, सन्निधानाविशेषात्। तस्मात्प्रधानभूत एव यागोऽर्थादभ्यस्यते। विकृतौ

---

१. अयं नास्ति क.

२. यागनिर्वर्त्यत्वेन कः

३. सौर्य इव निर्वपति क.

४. नन्वनुवादः क.

त्वैन्द्रवायवं गृह्णातीति चोदकेन प्राप्तानि ग्रहणानि सन्निहितानि इतराण्यपि बार्हस्पत्यादीनि। आम्नानसामर्थ्यात्सन्निहितान्येव, तेन तत्रापि सर्वाणि युगपद् गृह्णाति, प्रयोगवचनसन्निधानाविशेषादतः समुच्चयः। ननु बृहस्पतिर्देवता चोदकप्राप्तेषु [1]ग्रहेषु विधीयते। तेन तत्र ग्रहान्तरत्वाभावात् अनुदाहरणत्वमिति। उच्यते—न सम्भवति देवताविधानम्, द्रव्यवचनत्वात् बार्हस्पत्यशब्दस्येति भावः। चोदयति—कथं यद्देवताविधानं तस्योपसर्जनार्थो विधीयते। यथा दण्डीति पुरुषोपसर्जनीभूतो दण्डो[2] विधीयते पुरुषस्य प्राप्तत्वादेवमिहापि कथम्? उत्तरम्—द्रव्यदेवतासम्बन्धं चोदकप्राप्तमनूद्य बृहस्पतिर्देवतोपसर्जनीभूता विधीयते। उच्यते—उपसर्जनार्थोऽत्र[3] न शक्यते विधातुम्। कस्मात्? असामर्थ्यात्। कथमसामर्थ्यम्? उत्तरम्—बृहस्पतिर्देवतास्येति अस्य वाक्यस्यार्थे बार्हस्पत्यशब्दो वर्त्तते। तत्रास्य देवतेत्यनुवादः बृहस्पतिरिति विधानम्। तत्र यदास्य देवतेत्ययं सम्बन्धः[4] अस्यशब्दोऽनूद्यमानदेवताविशेषणत्वेनोच्चार्येत, तदा परार्थमुच्चारणमस्य शब्दस्य (देवताविशेषणार्थं न तु स्वार्थं न विधानार्थम्, नात्मीयमर्थं स्वरूपेणान्यविशिष्टतया वा विधातुमित्यर्थः। यदा तु) बृहस्पतिरस्येति बृहस्पतिशब्देनास्यशब्दस्य सम्बन्धः, तदा स्वार्थमात्मीयमर्थं बृहस्पतिविशिष्टतया विधातुमुच्चारणं न परार्थं न विशेषणार्थम्। सकृदुच्चारणे च स्वार्थवत्परार्थवच्चोच्चारणं विरुद्ध्यते। इदं तदसामर्थ्यं यत्पूर्वमुक्तम्। यदा तु नास्यशब्दो देवाविशेषणत्वेनोच्चार्यते[5] सिद्धान्ते, तदास्यशब्दः प्रधानभूत एव न

---

१. ग्रहणेषु. क.

२. दण्ड एव. क.

३. उपसर्जनार्थश्च. क.

४. तदा अस्य. मु. पा.

( ) चिह्नान्तर्गतः खण्डितः क पुस्तके.

५. उच्चार्येत. क.

विशेषणम्। तदा हि[1] न केवलं बृहस्पतिपदं तदर्थम् अपि तु देवताप्रातिपदिकं देवताशब्दोऽपि तदर्थम्[2]। तस्माद् द्वाभ्यां विशेषणाभ्यां विशिष्टस्तद्धितार्थो द्रव्यं विधीयते—बृहस्पतिदेवत्यं द्रव्यं कुर्यादिति नोपसर्जनत्वमन्यशब्दस्य। देवताबृहस्पतिशब्दौ प्रति यथाक्रमं विशेषणविशेष्यभावापत्त्या वैरूप्यप्रसङ्गात्। तस्माद् बार्हस्पत्यं गृह्णातीति वाक्यार्थः। ग्रहणमेवात्र विधीयत इत्यर्थः। भाष्ये च श्रुत्यैव विधानमित्येतदनेनैवाभिप्रायेणोच्यते[3] श्रुत्यैवावैरूप्यादित्यर्थः। ननु तद्धितेन बृहस्पतिदेवताविशिष्टं द्रव्यमेव प्राधान्येनोच्यते। तत्र तु प्राप्ताप्राप्तविवेकेन बृहस्पतिरेव विधीयते। किं तत्र वैरूप्यम्? न च विग्रहवाक्यगतं वैरूप्यं सदपि वेदं दूषयति, तस्यावेदत्वात्। न च तत्रापि वैरूप्यम्, एकान्तविशेषणत्वादस्यशब्दस्य[4] षष्ठ्यन्तस्य विग्रहः। तस्मात् कोऽत्राभिप्रायः? उच्यते—उपचयत्वेनेदमुक्तम्, एकवचनश्रुतिस्तु मूलयुक्तिः। अनुवादेऽपि बहुषु बहुवचनमेव साधु "ग्रहं समार्ष्टि" इत्यत्र तु ग्रहविशिष्टसंमार्गविधौ द्वितीयोक्तप्राधान्यबाधः स्यात्। इह तु प्राकृतग्रहानुवादे ग्रहान्तरविधाने वा न द्वितीयायाः कश्चिद्विशेषः, द्वेधापि संस्कारत्वात्, एकवचनन्तु ग्रहान्तरविधौ समञ्जसं स्यादिति तदेव युक्तमिति। केचित्तु धात्वर्थविधिवलेनैव ग्रहान्तरविधिं मन्यन्ते, तद् 'उत्करे वाजिनम्' इत्यत्र भाष्यकारेणैव निरस्तम्। अन्यथा[5] तत्राप्यासादनान्तरं स्यात्, "एकां गाम्" इत्यत्रापि[6] च दानान्तरं स्यात्। तेन च प्राकृतदक्षिणाकार्ये सिद्धेऽश्वादीनामदानं स्यात्। अथ तत्र विशिष्टविधिदोषान्न दानान्तरम्, एवमिहापि ग्रहान्तरं स्यात्। तस्मादेकवचनश्रुत्या ग्रहान्तरम्। अर्कादिषु तु संज्ञाभेदादेव ग्रहान्यत्वं

---

१. हि नास्ति. क.

२. तदर्थः. क.

३. एव नास्ति. क.

४. शब्दस्य नास्ति क.

५. तत्रासादनान्तरं क.

६. च नास्ति क.

सिद्धम्। सति च ग्रहान्तरत्वेऽदृष्टार्थत्वात्सन्निधानविशेषाच्च प्रकृतिवत् समुच्चय इति। ननु यदिदमुक्तं सन्निधानाद्ग्रहाणां यागसम्बन्धः प्रकृताविति तदयुक्तम्, अपूर्वीयैन्द्रवायवादिद्रव्यशेषतया द्वितीययैव विनियोगात् प्रोक्षणादिवदत आह—न चैतत् "व्रीहीन् प्रोक्षति" इत्यनेन तुल्यम्। तत्र हि वाक्यान्तरेण व्रीहयो यागस्य साधनत्वेनावगताः, तेषां स्वरूपमपि विद्यते श्रौतम्। लक्षणयाऽपूर्वसाधनत्वमपि। तत्र द्वितीया प्रोक्षणस्य गुणभावं ब्रवीति (व्रीहिलक्षितापूर्वप्रतीतियुक्तं न त्विहैन्द्रवायवाख्यं द्रव्यं प्रमाणान्तरेणावगतं यागसाधनत्वेन व्रीहिवत् येन गृह्णाति-) क्रियापूर्वांशेन सम्बध्येत प्रोक्षणवत्। तस्मात् ऐन्द्रवायवाख्यं द्रव्यं गृह्णातिक्रियां प्रति प्रधानभूतं द्वितीयाविभक्तिसामर्थ्यादैन्द्रवायवस्वरूपमेव द्वितीयया प्रधानं भवति। नापूर्वीयं रूपमित्यर्थः। न चैवमपूर्वासम्बन्धिनः संस्कारायोगादारादुपकारकं ग्रहणं प्रकरणविनियोज्यं स्यादत आह—न च प्रयाजादिवाक्येन तुल्यम्। तत्र हि द्रव्यदेवतेन क्रिया निर्वर्त्यते। सा चारादुपकारिका। इह तु विपरीतम्। गृह्णातिनैवैन्द्रवायवं निर्वर्त्यते। प्रागसिद्धत्वादैन्द्रवायवस्य द्रव्यस्य। तेनैन्द्रवायवं द्रव्यं ग्रहणेन कुर्यादिति वाक्यार्थः। नन्वेवं यागमन्तरेण तद्देवत्यता न सम्भवतीतीहैव यागविधानं स्यात्। अतश्च "सोमेन यजेत" इति समुदायानुवादः स्यादरूपत्वाद्विद्वद्वाक्यवदत आह—न चाग्नेयादितुल्यम्। तत्र हि "आग्नेयोऽष्टाकपालो भवति" इति साकाङ्क्षमपरिपूर्णं, एतद् वाक्यं पुंव्यापाराश्रवणात्। तच्च यागमन्तरेण निराकाङ्क्षं न भवतीति यागकल्पनया पूर्यते। ननु विद्वद्वाक्ये प्रत्यक्षश्रुत एव याग इति किं तत्कल्पनयात आह—परिपूर्णं वाक्यं वाक्यान्तरेण सम्बध्यते। प्राक् च यागात् परिपूर्णमेव न भवति पुंव्यापाराश्रयणात्। तथापि कथं यागकल्पना अत आह—न च यागमन्तरेणान्येन प्रकारेण देवतासंयुक्तं वाक्यं पूर्यते। तस्माद्यागविधानम्। ननु दर्शपूर्णमासवाक्ये-

( ) चिह्नान्तर्गतः स्खलितः. क.

नैव[1] यागस्य विहितत्वात् किमत्र यागविधिनात आह—**तत्राग्नेयादयो** याग उत्पन्ना **दर्शपूर्णमासाभ्यामित्यनेन प्राकृता एव** सन्तः केवलं **फले विधीयन्ते,** न तूत्पाद्यन्ते।[2] तेन न तत्र यागविधानम्। विद्वद्वाक्यञ्चारूपत्वाद-नुवादः। **नत्विह तथा**। कस्मात्? **ऐन्द्रवायवादीनां यागविधानाभावात्**। कथमित्याह—**अन्यथानुपपत्त्या** अर्थान्यथानुपपत्त्या ह्यत्र **यागकल्पना** न त्वा-ग्नेयादिवत् वाक्यापरिपूर्त्या। **परिपूर्णं** हीदं **वाक्यं "ऐन्द्रवायवं गृह्णाति"** इति पुरुषव्यापारश्रवणात्। **न त्वाग्नेयादिवाक्यं परिपूर्णम्**। तेन **तत्र** वाक्यस्यैव **साकाङ्क्षत्वात्** तत्परिपूरणाय **यागकल्पना**। **इह तु परिपूर्णस्यैव** वाक्यार्थानुपपत्तवेलायां **"सोमेन यजेत"** इति **यागो विद्यते** सन्निहितः। **स च यागो देवतासात्मनिर्वृत्त्यर्थमपेक्षते**[3]। तथैन्द्रवायवादीन्यपि वाक्यानि प्रकृतद्रव्यविषयाणि **यागमपेक्षन्ते**। **तयोर्द्वयोः साकाङ्क्षयोरेकाङ्गविकलयोः सम्बन्धो भवति**। सोमेन यजेतेति देवताविकलं वाक्यं किंदेवत्यः सोम इत्यपेक्षते। ऐन्द्रवायवादिवाक्या-न्यपि केन यागेन इन्द्रवायुदेवत्यं भवतीत्यपेक्षन्ते। तयोर्नष्टाश्वदग्धरथवत् सम्बन्धः। **तस्मान्न** प्रयाजादिवत् **प्रकरणेनैन्द्रवायवादीनां सम्बन्धः**। प्रधानस्य [4]चेतिकर्तव्याकाङ्क्षाया[5] अङ्गस्य च प्रयोजनाकाङ्क्षया प्रकरण-सम्बन्धो भवति। इह त्वर्थानुपपत्त्यैव यागदेवतयोः सम्बन्धो नातीव प्राकरणिक इत्यभिप्रायः। उभयाकाङ्क्षालक्षणत्वात्तु सम्बन्धस्य प्राकरणिकत्वमपि सम्भवति। फलवदफलविषयत्वाच्चेति मत्वा पशुसोमाधिकरणादिषु प्रकरण-विनियोगव्यवहार इति वेदितव्यम्। **वाक्येन** च **न सम्बन्ध** इत्यनुषङ्गः। श्रुतिरेव वाक्यशब्देनोच्यते। ऐन्द्रवायवादिद्रव्यस्य यागसम्बन्धानवगमात्।

---

१. एव नास्ति क.

२. तेन नास्ति क.

३. सिध्यर्थम्. मु. पा.

४. हि. क.

५. काङ्क्षायां. ख.

न तल्लक्षितापूर्वार्थता प्रोक्षणस्येव श्रुत्या सम्भवति, किन्तु सन्निधानेन सम्बन्धः। इतश्च न प्रकरणमित्याह—**न चैतैर्देवतावाक्यैः पूर्वमसम्बध्यमानो यागः फलेन सम्बध्यते**। कथम्? देवतया विना ह्यरूपत्वान्न फलेन सम्बध्यते। न चाफलस्य प्रकरणमस्तीति न प्राकरणिकस्सम्बन्धः। अपि [1]च **ऐन्द्रवायवं गृह्णातीति एतदपरिपूर्णं वाक्यम्** यद्यपि वाक्यं परिपूर्णमेव तथाप्यर्थानुपपत्त्या पुनरपरिपूर्णं भवति। तच्च **सोमयजिना सह** शीघ्रं फलसम्बन्धात् [2] यागे च सन्निधानात् **सम्बध्यते** न तु **प्रकरणेन**। सन्निधानविशेषाच्च समुच्चयः। तथा विकृतावप्यदृष्टार्थत्वात् उपदेशातिदेशाभ्यां चोभयेषां सन्निहितत्वात् ग्रहशब्दस्य च विधीयमानार्थत्वेन प्रकृतिलिङ्गत्वाभावात् समुच्चयः॥

[ ३—वाजपेये क्रतुपशूनां समुच्चयाधिकरणम् ]

## प्राजापत्येषु चाम्नातात् ॥६॥ सि०

प्राकृतपश्वनुवादेन प्रजापतिविधिरुपपन्न इति मन्यते। संख्यानर्थक्यात्तु न देवताविधिसम्भवः। तस्या अपि विधौ वाक्यभेदः। तस्मादुभयविशिष्टकर्मान्तर-विधानाददृष्टार्थत्वात्समुच्चयः॥

[ ४—आमनहोमैरनूयाजानां समुच्चयाधिकरणम् ]

## आमने लिङ्गदर्शनात् ॥७॥ सि०

यत्त्रिस्त्रो जुहोतीति अनूयाजाननूद्य मन्त्रमात्रविधानं सम्भवति। न, विशिष्टानुवाददोषात्। तस्माद्धोमान्तरविधानम्। एवञ्च धात्वर्थविधानाच्छ्रु-त्यनुग्रहः। अत्र भाष्यकारेण प्रथमं कर्मान्तरत्वे लिङ्गमुक्त्वा सति च कर्मान्तरत्वे त्रित्वमात्रस्यानेकसाधारणस्य प्रकृतिलिङ्गत्वाभावात् अदृष्टार्थत्वाच्च समुच्चय इत्युक्त्वा [3] लिङ्गमिदम् प्राप्तिर्वक्तव्येति कर्मान्तरत्वे प्राप्तिः पृष्टा कथिता चेति द्रष्टव्यम्॥

---

१. तु. क, ख.

२. प्रागेव. ख.

३. खपुस्तकेऽत्र ग्रन्थपातः।

[ ५–महाव्रते पत्नीकर्तृकोपगानस्य भिन्नकार्यताधिकरणम् ]

**उपगेषु शरवत्स्यात प्रकृतिलिङ्गसंयोगात् ॥८॥ पू०**

गानशब्दः शारीर्यां गीतौ[१] प्रसिद्धो न वादित्रे । उपशब्दश्चोपचयवचनः । तेन सामगानस्यायमुपचयो[२] विधीयते । अभिधीयत इत्यर्थः। स च प्राप्त एवेति तत्र पत्न्यो विधीयन्ते । ( गानस्य च गानेनैवोपचयो भवति । तच्च प्रकृतितः प्राप्तमनूद्य पत्न्यो विधीयन्ते ) ऋत्विजस्तु निवर्तन्त इति । स्यादेवं यदि शारीरमेव गानं स्यात् । तन्त्रीगानेऽपि[३] तु गायतिः प्रयुज्यते । तेन यद्यपि गानस्योपचयोऽयं तथापि "दिक्षु दुन्दुभयो नदन्ति" इति प्रत्यक्षविहितानन्तर-विपरिवर्तमानदुन्दुभ्यादिनादस्योपचयोऽयं पत्न्यः काण्डवीणादिभिर्दुन्दुभ्यादि-नादानुपनदेयुरिति न त्वानुमानिकप्रकृतिवच्छब्दप्रापितप्रकारद्वारेणार्थात्प्राप्तस्य सामगानस्य, किमुत यदा गानमेवोपचयात्मकं (उपगानं) सामानाधिकरण्य-लाभात् धात्वर्थप्रधान्याच्चोपगायतिनाभिधीयते, तदापि कस्यायमुपचय इत्या-काङ्क्षायां शब्दनिर्दिष्टानन्तरविपरिर्तमानदुन्दुभ्यादिनादस्यायमुपचयो भवति । अभिधानानुसारी च विधिरिति[४] विशिष्टविधानमदोषः । तस्माद् भिन्न-कार्यत्वात् नर्त्विजां पत्नीभिर्निवृत्तिः। धात्वर्थविधानलाभस्तु सर्वत्राभ्युच्चयत्वेनैव भाष्यकृतोपन्यस्त[५] इति वेदितव्यम् । परमार्थतस्तु गुणविशिष्टकर्मविधितो गुणमात्रविधिरेव ज्यायान् । तदुक्तं 'यो हि पाषाणान् भक्षयति ईषत्करा-स्तस्य शष्कुल्यो भवन्ति' इति । इतरथा ह्युत्करे वाजिनमित्यत्राप्यासादनान्तर-विधानं स्यादिति ॥८॥

---

१. प्रसिद्धः नास्ति. क.

२. विधीयते नास्ति. क. ( ) कोष्ठान्तर्गतोभागः खण्डितः खपुस्तके ।

३. गाने हि गायतिः क.

४. विशिष्टविधौ न. क.

५. उपन्यस्यत इति. क.

[ ६-अञ्जनाभ्यञ्जनसोमे गौग्गुलवाद्यभ्यञ्जनेन नवनीताभ्यञ्जनस्य समुच्चयाधिकारम् ]

## संस्कारे चान्यसंयोगात् ॥१०॥ सि०

"गौग्गुलवेन प्रातः सवने" इत्यनेकार्थोपादानादिदमञ्जनान्तरमेव विधीयते। तत्तु दृष्टार्थत्वात् प्राकृतं नवनीताञ्जनं निवर्तयति, अन्यकालमपि प्रयाजा इव तिष्ठति पशौ क्रियमाणाः पाशुकाः पौरोडाशिकान् हविरासादनोत्तरकालीनान् प्राकृतान् प्रयाजान्। उच्यते—नात्रैकार्थत्वम्। नवनीताञ्जनं हि स्नेहनार्थं सुखप्रचाराय। गौग्गुलवाञ्जनन्तु स्नेहनासम्भवात् [१]रूक्षकरणार्थमित्यन्यकार्यत्वादबाधः। यद्यपि गौग्गुलवेन स्नेहनं भवेत् तथापि न प्राकृतकार्यत्वम् नवनीताञ्जनं हि दीक्षाकाले कृतमुत्तरकालप्रायणीयादिप्रचारसौकर्यार्थम्। न च सुत्याकालमञ्जनान्तरं तत्सम्पादनक्षममित्यबाधः ॥१०॥

[ ७-महाव्रते तार्प्यदर्भमयाभ्यां प्राकृतवाससस्समुच्चयाधिकरणम् ]

## आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥१३॥ पू०

कौपीनाच्छादनमेव परिदधातिना विधीयत इत्येकार्थत्वात् प्राकृतस्य निवृत्तिं मन्यते। कम्बलं परिधत्त इत्यादावुपरिवासःकार्येऽपि प्रयोगाच्चोदकाबाधायोपरिवासः कार्य एवेदं दर्भमयादिविधानमिति समुच्चयः ॥१३॥

[ ८-महाव्रते श्लोकादिसामभिरग्निष्टोमस्तोत्राणां समुच्चयाधिकरणम् ]

## सामस्वर्थान्तश्रुतेरविकारः प्रतीयेत ॥१६॥ सि०

स्तुतेरदृष्टार्थत्वान्न वैकृतं स्तुत्यन्ततरमङ्गीकृत्य प्राकृतीनां स्तुतीनां निवृत्तिः शक्या शङ्कितुम्। अनेकार्थोपादानाच्च गुणविधिरपि न प्राकृतीषु शङ्कितव्यः। तस्मादुत्तरविवक्षयेदं[२] सूत्रम् 'अर्थान्तरश्रुतेरविकारः' इति ॥१६॥

---

१. विरूक्षीकरणार्थमिहान्यकार्यत्वेनाबाधः. ख.

२. सूत्रमर्थान्तरत्वेनाविकारः. क.

[ अथवा-वैकृतैः कौत्सादिभिः प्राकृतानां स्तोत्रसाम्नां बाधाधिकरणम् ]

**अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥१७॥ सि०**

यत्र त्वर्थान्तरं न श्रूयते विधेयं सामान्तरमेव तु श्रूयते तत्र कथम् ? यथा 'कौत्सं भवति'' इत्यादि[१]। तत्रापि प्राकृतकार्यसाधनत्वेनाविधानादनिवृत्ति[२] मन्यते। सिद्धान्तस्तु अवश्यं तावत्सामभिः क्रतावुपकर्तव्यम्। तच्च-मन्त्राधिकरणन्यायान्न दृष्टे सम्भवत्यदृष्टं कल्पयितुं शक्यते। तस्मादृक्संस्कारद्वारं चोदकप्राप्तस्तुतिनिवर्तनमेषां कार्यं लिङ्गप्रकरणाभ्यामवगतमिति प्राकृतसामनिवृत्तिः ॥

[ ९-वैकृतैस्सामभिः प्राकृतानां तत्समसंख्यानां साम्नां बाधाधिकरणम्। ]

**सर्वेषामविशेषात् ॥१८॥**

विशेषाभावात्सर्वबाधं मन्वानस्योत्तरम्-यावन्ति प्रत्यक्षपठितानि तावतामेव प्राकृतानां निवृत्तिः। तावतैव वैकृतसामपाठस्य चरितार्थत्वात्। इतरबाधे प्रमाणाभावात् ॥१८॥

[ १०-विवृद्धन्यूनस्तोमकेषु साम्नामावापोद्वापाधिकरणम् ]

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥२०॥ सि०**

किमेष एवोत्सर्गः सर्वत्र प्रत्यक्षश्रुतैरानुमानिकानि तावत्संख्याकानि निवर्तन्त इति। एवं खलु प्राप्तम्। एवं प्राप्त इदमारभ्यते। स्तोमविविवृद्धौ त्वधिकं स्यात् समुच्चय इति। यथा "एकविंशतिनातिरात्रेण प्रजाकामं याजयेत्'' (क) "द्वात्रिंशपवमानोऽभिषेचनीयः'' इत्यादिषु तत्र राजसामादिभिः

---

१. सम्भवतीत्यादि पु. ख.

२. अविधानादेव निवृत्ति. क.

(क) 'द्वात्रिंशः पवमानः' इति क्वचित्पुस्तके पाठो दृश्यते, स च मशककल्पसूत्रानुकूलः। तत्र तिष्वपि पवमानेषु द्वात्रिंशस्तोत्रियाविधानात्। भाष्ये च 'द्वात्रिंशाः पवमाना अभिषेचनीयस्य' इति पाठस्समीचीनः। 'द्वात्रिंशपवमानः' इति समासपाठोऽपि कल्पसूत्रानुकूलः।

प्रत्यक्षश्रुतैरपि न प्राकृतानां[१] बाध इति । तत्र च संख्याविवृद्धिः श्रुता । सा च प्राकृतवैकृतसमुच्चये [२]सम्पाद्या न बाधे । ननु प्राकृतानि बाधित्वापि[३] सामान्तरागमेन सङ्ख्या पूरयितुं शक्यते । तथा च साम्नामुत्पत्तिरर्थवती भवति । नैतद्युक्तम् ; आगमस्याश्रुतत्वात् । संङ्ख्यावसेन [४]त्वागमः । सा चातिदिष्टोपदिष्टसमुच्चयेनैव सिद्धा इति नास्त्यागमे प्रमाणम् । तस्माद् विवृद्धावनिवृत्तिः. अविवृद्धौ [५]द्रव्यविकारः स्यादिति पूर्वाधिकरणे सामान्येनोक्तो न्याय उदाहरणविशेषे व्यवस्थाप्यते । एतदुक्तं भवति-यत्र नास्ति वृद्धिः किन्तु यथाप्रकृत्येव सङ्ख्यावस्थिता यत्र वा हीना "पुनस्तोमस्य सवनं मध्यमं द्वादशं स्मृतिम्" इत्यादौ तत्रैव प्रत्यक्षश्रुतैरानुमनिकानि तावत्सङ्ख्याकानि सामद्रव्याणि निवर्तन्ते न तु विवृद्धाविति । भाष्ये च हीनस्तोमकोदाहरणं [६]विवृद्धयभावोपलक्षणार्थम् उभयमुदाहरणमिति[७] च प्रत्युदाहरणमात्राभिप्रायेणोक्तं विवृद्धिरेव त्विहोदाहरणमिति ॥२०॥

[ ११–विवृद्धन्यूनस्तोमकेषूत्तरयोः पवमानयोस्साम्नामावापोद्वापाधिकरणम् ]

## पवमाने स्यातां तस्मिन्नावापोद्वापादर्शनात् ॥२१॥

विवृद्धस्तोमकेषु प्रत्यक्षश्रुतानामधिकानामावापः । अन्यत्र तु प्राकृतीनां तावत्सङ्ख्यानामुद्वाप इति स्थितम् । तत्र संशयः—किं यत्र क्वचित्स्तोत्रे प्रत्यक्षपठितानामावापो यतः कुतश्चिच्च[८] प्राकृताना-

१. बाधः नात्र हि. ख.
२. सम्पाद्यते. ख.
३. अपि नास्ति. क.
४. तु. नास्ति. क.
५. द्रव्यतो विकारः क.
६. विवृद्धस्तोमोपलक्षणार्थं. क.
७. इति. नास्ति. क.
८. च. नास्ति. क.

मुद्वापः ? अथ पवमानविषयावेवापोपाद्वापौ[1] इति । तत्र वैकृतानां यत्र क्वचिदपि निवेशनार्थत्वादनियमः । वचनन्तु पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थं न स्तोत्रान्तरपरिसङ्ख्यानार्थमिति प्राप्ते ब्रूमः—"त्रीणि ह वै यज्ञस्योदराणि" इत्युपक्रमाद्यज्ञगतयोरावापोद्वापयोरयं देशः, न पवमानगतयोः । तस्मात् गायत्र्यादिष्वेवावापोद्वापौ, ताश्च पवमानेष्वेव । तस्मात्पवमानेष्वेवावापोद्वापाविति । ननु यत्र विवृद्धिर्नास्ति तत्र वैकृतानां "कौत्सं भवति" इत्यादीनां यत्र क्वचिदपि निवेशेऽर्थवत्वाद् भवतु नाम पवमाने निवेशः । यत्र तु विवृद्धिस्तत्र सर्वस्तोत्रेषु सङ्ख्याविवृद्धिः कर्तव्या । तत्र[2] चावश्यंभाविनि सर्वत्र सामान्तरागमे पठितानामप्यनियमेन निवेशः स्यात्, सत्यं यदि सर्वत्रावापः स्यात् । स तु पवमानेष्वेव वचनात् "अत्र ह्येवावपन्ति" इति परिसङ्ख्यानात् न स्तोत्रान्तरेष्वावापः । न च परिसङ्ख्यायाः त्रिदोषत्वम् । एवकारेण तस्या एव श्रुतत्वात् । कथं तर्हि स्तोत्रान्तराणां विवृद्धिः ? माभूत्तेषामपि विवृद्धिरिति चेत्—न; अविशेषेण श्रवणात् "एकविंशेनातिरात्रेण" इति । तथा च क्वचित्पवमानग्रहणं कृतम् [3]"द्वात्रिंशपवमानोऽभिषेचनीयः" इति । [4]तद्ध्यविशेषिता विवृद्धिः पवमानेष्वेव (ष्वपि) स्यात् । नेह पवमानग्रहणं क्रियेत । कृतश्च तत् । तथेदमपरं लिङ्गम् गवामयने द्वितीयमहश्चतुर्विंशस्तोमकमुक्थ्यसंस्थम् । तत्र वाक्यशेषः—"तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रियाः" इति । तथा 'यावत्यश्चतुर्विंशस्य स्तोत्रियास्तावत्यः संवत्सरस्य रात्रयः" इति । पञ्चदश ह्युक्थ्यस्य स्तोत्राणि । तानि यदि सर्वाणि चतुर्विंशानि ततः सर्वाः स्तोत्रियाः समाहृताः षष्टिः त्रीणि च शतानि च भवन्ति । यदि पुनः पवमानेष्वेव स्यान्न तत अष्टाशीश्चतुरशीतिर्द्वे च शते

---

१. उद्वापावापौ. क.

२. च. नास्ति. क.

३. द्वाविंश. क.

४. तद्. नास्ति. क.

स्तोत्रिया भवेयुः। तस्मात्सर्वत्र विवृद्धिः कर्तव्या। सत्यमेवम्, आवापस्तु पवमानेष्वेव वचनात्। अन्यत्र त्वभ्यासेन सङ्ख्यापूरणमिति ॥

[ १२–यागहोमत्यागेषूपदिष्टशब्देनैव देवतोच्चारणनियमाधिकरणम् ]

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥**

अस्याधिकरणस्य बाधसम्बन्धो वक्तव्यः। स उच्यते। पूर्वपक्षे न[1] किंचिद्बाध्यते। सिद्धान्ते तु पर्यायशब्दा बाध्यन्त इति बाधाबाध-प्रसङ्गात् सङ्गतिः। तत्र कैश्चिच्छब्दमात्रं देवतेति सिद्धान्तितम्। तदुपन्य-स्यति–इन्द्रादीनां यद्यर्थो[2] विद्येत लोकव्यवहारे यथा गवादीनाम्, ततः पर्यायशब्दानामवकाशो भवेत्। न तु तेषां लोकेऽर्थो विद्यते। कस्मात्? इन्द्रादीनामप्रत्यक्षत्वात्। अप्रत्यक्षैश्च व्यवहारायोगात्। अतोऽर्थ एवैषां नास्ति, न तरां पर्यायत्वम्। अतः शब्दस्य स्वरूपमेव देवतेति शब्दा-न्तराणाम्[3] अश्रुतानामनवकाश इति। तदिदमेकदेशीयमतं दूषयति–उच्यते-इन्द्रशब्द उच्चरिते किमपि प्रतीयते सामान्येन। इन्द्रमिन्द्रायेत्यादि-विविधविभक्तियोगेनानर्थकडुमादिवैलक्षण्यात्। तत्र "यो जात एव प्रथमो मनस्वान्" इत्यादिकादुपपदाल्लोकप्रसिद्धयात्मकाच्च व्यवहारात्स्मरणा-च्चेन्द्रादीनां विशेषरूपेणैव (अर्थो विद्यते यथा प्राची दिगिति न प्रत्य-क्षेण प्रतीयते नानुमानेन। किं तर्हि? शब्दादेव प्रतीयते। ननु प्रत्यक्षैव दिक्। सत्यं परमतेनैतदुपन्यस्तमित्यदोषः। अथवायमर्थः–प्राची दिगिति सर्वशब्दानामुपलक्षणार्थं यथान्येषां शब्दानामभिधानशक्तिर्न प्रत्यक्षेणावगम्यते) नानुमानेन, किन्तु शब्दानन्तरप्रतीत्यैव, तथेन्द्रशब्दस्यापि शब्दानन्तरप्रतीत्यै-वार्थवत्त्वमिति। तथापि कथं पर्यायत्वमत आह इन्द्रशब्देन च यदुच्यते-

---

१. कश्चित्. क.

२. विद्यते. ख.

३. अश्रुतानां नास्ति. क.

( ) चिन्हान्तर्गतो भागः खण्डितः कपुस्तके.

शक्रशब्देन च तदेवोच्यत इति लोकस्मरणम्। पुराणेषु च मन्त्रार्थवादेषु च सामानाधिकरण्यम्। अनादि च स्मरणं न शक्यं पर्यनुयोक्तुम्। यथा प्रत्यक्षेण रूपमवबुध्यमानं न शक्यते पर्यनुयोक्तुं किमर्थमवबुध्यत इति, एवमिहापि न पर्यनुयोगः। तस्मादिन्द्रादिशब्दा अर्थवन्तः पर्यायाश्च अग्निपावकादीनां स्पष्टमेवार्थवत्व[1] च। दूषणमुपसंहरति–इति हेतोरुभयो-र्वादिनोर्न केवलं पूर्वपक्षवादिनः किन्तु सिद्धान्तवादिनोऽप्यर्थः[2] एव देवता। तस्य च[3] वाचकः शब्दः। कथं तर्हि सिद्धान्तः? अतः[4] प्राह-स हविषा सम्बध्यमानोऽर्थस्य देवतात्वं प्रतिपादयति। अर्थसद्भावेऽपि शब्द एवा-स्मिन् वाक्ये हविस्त्यागांगतया विधीयते? तद्विधाने चार्थस्य देवतात्वं प्राप्तमनूद्यते। [5]यद्वाची हि शब्दो हविस्त्यागे समुच्चार्यते सैव देवता भवति। नान्यथा न द्रव्यादिशब्दवदर्थसमर्पणेन चरितार्थो भवति। कथं तर्हि पूर्वः-पक्षे? अत आह पूर्वपक्षस्तु शब्दोऽर्थं प्रत्यत्यन्तगुणभूतः। [6]स एव त्वर्थः कार्ययोगी कार्येण त्यागेन सम्बध्यते। प्रधानत्वादग्नये त्यजेदिति। अग्नि-शब्दस्तु न स्वयं कार्येण स्वयं कार्ययोगितया द्रव्येण सह सम्बध्यते। अग्निशब्दं समुच्चार्य त्यजेदिति। किं तर्हि? अर्थेन सम्बध्यते। ततः किमित्याह अर्थपरत्वाच्च निर्देशस्य पर्यायशब्दानामनिवृत्तिः। ननु शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायते। सम्भवति[7] त्विह शब्द एव कार्य-मत आह न चाग्निशब्दः शब्दपदार्थक एव स्वयं द्रव्येण सम्बध्यते।

---

१. पर्यायत्वञ्च. क.

२. वादिनश्चाप्यर्थ एव. क.

३. च. नास्ति. क.

४. आह. क.

५. यदर्थोहि शब्दः. क.

६. स त्वर्थः. ख.

७. चेह. क.

कुतः ? लिङ्गादसौ[1] ज्वलन एव वर्तते। अर्थे हि तस्य[2] सामर्थ्यं न स्वरूपे, तस्यावाच्यत्वात्। वाक्येन त्वसौ स्वयं पुरोडाशेन सम्बध्यते। तच्च दुर्बलं लिङ्गात्। न चासावितिकरणेन निष्कृष्य निर्दिश्यते–अग्नय इति पुरोडाशं त्यजेदिति, येन श्रुत्या लिङ्गं बाध्येत। किं चाग्नेय इति तद्धितोऽयम्। तत्र[3] यदि निष्कृष्य शब्द एव पुरोडाशेन सम्बध्यते तथा सति तद्धितानुत्पत्तिरेव स्यात् समर्थानां तद्धितो भवति। सामर्थ्यञ्च परस्परापेक्षया भवति। न च शब्दस्य द्रव्यस्य[4] च मिथोऽपेक्षा विद्यते। शब्दयोर्ह्यर्थतोऽपेक्षा भवति, न स्वरूपतः। अतोऽसत्यर्थे तद्धितानुत्पत्तिः स्यादेव। अपि च वाक्यार्थे तद्धितान्तपदनिर्वचनं वाक्यस्याग्निरस्य[5] देवतेत्यस्यार्थश्च[6] पदार्थपूर्वको भवति। तत्र यदि शब्द एव देवता भवेत् तथा सति देवतावाच्यग्निपदमर्थशून्यं स्यात्। अर्थशून्ये च सति तस्मिन्नस्येति[7] शब्देन योऽर्थ उच्यते[8] स एव केवलः स्यात्। तत्रैकस्यार्थस्य वाक्यार्थबोधेऽर्थान्तरसाकाङ्क्षत्वात्[9] अग्निशब्देनानर्थकेनास्यानिराकाङ्क्षीकृतत्वाच्च वाक्यमेव न स्यात्। असति च वाक्ये कस्यार्थे तद्धितो वर्तेत। तस्मादर्थ एव कार्ययोगीति।

नन्वेवमपि पर्यायशब्दानामप्रसङ्ग एवम् ? कथं अग्निशब्दः सत्यं ?

---

१. लिङ्गबलात्तद्धित एव मु. पा.
२. सामर्थ्यात्. क.
३. यदि च तत्र. क.
४. वा. क.
५. वाक्यस्य च. क.
६. च. नास्ति. क.
७. शब्दस्य. क.
८. उच्चार्यते. क.
९. अर्थान्तरापेक्षत्वात् अग्निशब्देन च. क.

[ स्वमर्थं ] प्रथमोपनिपाते पुरोडाशं प्रति देवतात्वेन प्रतिपादयति। तत्तु देवतात्वं यदि वाचिकां श्रुतिमुद्दिश्योच्चार्य परित्यजति द्रव्यं ततः सम्पादितं भवति नान्येन प्रकारेण। ततः किमित्याह–एतस्याञ्च[1] शब्दाकाङ्क्षावस्थायामग्निशब्द एव मनसि विपरिवर्तते नान्ये। तस्माद्विपरिवर्तमानः स एव ग्रहीतव्यो नान्ये। कुतः? स च शब्दः श्रुत इत्यर्थः। चशब्दो हेतौ। अन्ये त्वशाब्दाः। तस्मात्स एवोच्चारयितव्यः [2]वाचकश्रुतिवेलायाम्। अत्रोच्यते–अग्निशब्दः शास्त्रप्रकृतिवेलायां स्वमर्थं पुरोडाशस्य [3]देवतात्वेन प्रतिपाद्य कृतार्थो जातः। नहि तदा शब्दाकाङ्क्षास्ति। उच्चारणवेलायां अनुष्ठानवेलायान्तु शब्देन प्रयोजनम्। न ह्यन्यथा शब्दाभावे यागो भवतीति हेतोः। एतस्यां चावस्थायामग्निशब्दो न विद्यते, चिरनिवृत्तत्वात्। किन्तु* येन केनचिच्छब्देनोच्चारणमग्नेः कर्तव्यम्, नाग्निशब्देनैवकथम्? अग्निशब्दस्य व्यवहितत्वात्। अर्थ एव ह्यनुष्ठानवेलायां स्मृत्या सन्निहितो भवति, व्यवहितश्शब्दस्तद्द्वारेण स्मर्येत न साक्षात्। स चाविशेषात्सर्वान् स्वशब्दान् स्मारयति, नाग्निशब्दमेव। तस्मादग्निशब्दो न शक्यो नियन्तुमिति। सिद्धान्तस्तु—अग्निशब्द एवाष्टाकपालेन सम्बध्यते यागे, स तु सम्बन्धोऽर्थात् तस्य देवतात्वं प्रतिपादयत्यर्थस्य। यथा "वैष्णवीमृचमनुब्रूयात्" इति विहिते सति ऋगुच्यमाना विवक्षितमथर्मप्यृर्थं प्रतिपादयति। न च तावता स विवक्षितो भवति ऋगर्थः कार्ययोगेन, स्वभावात्तु प्रतीयते केवलम्। इहाप्याग्न्यार्थो न कार्ययोगेन विवक्ष्यते, शब्द एव तु कार्येण हविस्त्यागेन सम्बध्यते। अपि च योऽप्यर्थमष्टाकपालेन सम्बन्धयितु-

---

१. तस्याञ्च. क.

२. बोधक. क.

३. देवतार्थत्वेन. क.

* चिह्नान्तर्गतो भागः खण्डितः ख पुस्तके।

सिष्यति तस्याप्युत्तरकालमवश्यं वाचिका श्रुतिरुच्चारणीया। तद्द्वारेण हि देवता क्रियया सम्बध्यते, न स्वरूपेण। तत्र द्वे कल्पने प्राप्नुतः प्रथसमर्थस्य देवतात्वम्, पश्चाच्च शब्दोच्चारणं विधीयत इति। शास्त्रेणैवार्थः इदं श्रुत्यर्थाभ्यां बोधयितव्यम्। यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन सम्बध्यते तस्य तदुच्चारणमेव केवलं विधीयते-अग्नय इत्युच्चार्याष्टाकपालं स्यजेदिति। अग्न्यर्थो देवतेत्ययं यथाप्राप्तानुवाद एव, न तु श्रुत्या, अर्थाद्विधीयत इति लाघवम्। नन्वर्थस्य देवतात्वं शब्दतः प्रतीयमानमुत्सृज्याप्रतिपन्नशब्दोच्चारणस्य चोदना न युक्ता वक्तुमत आह—यथा "पूतीकानभिषुणुयात्" इति यागोऽर्थाल्लभ्यते। अस्यार्थ:–अत्र हि श्रूयमाणेऽप्यभिषवे तदन्यथानुपपत्तिकल्पितं यागसाधनत्वमेव पूतीकानां विधीयते। तद्विधौ चाभिषवोऽनुवादः। अभिषवविधौ हि तदन्यथानुपपत्त्या यागोऽप्यत्रैव विधेयस्स्यात्, अङ्गेन प्रधानस्यानाक्षेपात्। अतश्च विध्यायासस्स्यात्। यागसाधनत्वविधौ तत्संस्कारोऽभिषवः प्राप्त एवेति नास्य विधेरायासः। तेन यथात्र लाघवलिप्सयार्थिकमपि यागसाधनत्वमेव विधीयते तथेहाप्यग्न्यर्थस्यैव देवतात्वे शब्दाभिहितेऽप्यर्थानुपपत्तिबलसिद्धं शब्दोच्चारणमेव विधीयते। तद्विधौ च स्वार्थमनुवदति अभिधानस्य[१] चार्थनिष्ठत्वान्न[२]तद्धितानुपपत्यादिदोषापत्तिरिति।

( अत्र ग्रन्थपात इति भाति, वार्तिकमव्याख्यातम् )

[ १३–वैकृतेष्वावाहनादिषु वैधपदेन देवताप्रकाशनाधिकरणम् ]

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥२५॥ सि०

ननु नैवेदमधिकरणमारभ्यम्। य एव हि शब्दश्चोदितःस एव प्रकृताविवान्यत्र[३] विकृतावप्युच्चार्यस्तुल्यन्यायत्वात्। उच्चार्यते यत्र शब्दो विद्यते तत्रैव पर्यायशब्दानामप्रसङ्गः। यत्र तु शब्दो नाम्नायते

१. च. नास्ति. क.

२. तद्धितानुत्पत्त्यादि. क.

३. अन्यस्यां. क.

तत्रार्थ एव केवलः प्रत्यायायितव्यः। स च येन केनचिच्छब्देन[१] प्रात्याय्यत इति पूर्वः पक्षः। अस्यार्थः—हविस्त्यागमात्रे सूर्यशब्दोच्चारणं प्रधानवाक्येन विधीयते न निर्वापादिनिगमेषु। प्रकृतावपि हविस्त्याग एवाग्निशब्द आग्नेयचोदनया विधीयते। निगमेषु त्वाम्नानसामर्थ्याद् अग्निशब्दो न चोदनावशात्। इह च न [२]प्रधानयागाद्युदाहरणम्, किन्तु प्रकृतावग्निशब्दसंयुक्ता ये निगमास्त उदाहरणम्। तत्रार्थलोपदग्निपदे निवृत्ते यः कश्चिच्छब्दः प्रक्षेतव्यः, चोदनया पाठेन वा सूर्यपदस्यानियतत्वादिति। सिद्धान्तस्तु-सूर्यशब्दो यागानुमितप्रयोगभावनया वचनेन सम्बध्यते न यागस्वरूपेण। कारकविभक्तेराख्यातेन सम्बन्धात्। तदेवं सत्यन्यः शब्दो यद्युच्चार्येत[३] तथा सति शब्दप्रयोगेऽश्रुत एवोच्चार्येत। श्रुतश्च लुप्येत। एवं प्रकृतावपि आग्नेयचोदनाप्यग्निशब्दप्रयोग एव विधत्ते। प्रयोगे च श्रुतः शब्दः कियत्कृत्व उच्चार्यः कस्मिन्वा प्रदेश इत्यपेक्षायां निर्वापादिनिगमेषु अग्निशब्दाम्नानात्तेषु तावत्कृत्वः प्रयोक्तव्य इति विज्ञायते। तदिदमुक्तं भाष्यकारेण (विधिशब्दाभिप्रायोऽग्निशब्दो निगमेषु प्रयुक्तः एषु च प्रदेशेषु) विधिशब्दः प्रयोगे श्रुतः समुच्चारणीय इति नान्यभिधानपरः। इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्या इति ॥२५॥

[ १४–सगुणदेवतानामावाहनादिषु सगुणदेवताशब्दोच्चारणाधिकरणम् ]

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥२६॥ सि०

पर्याययोरन्यतरेण देवतानिर्देशसिद्धौ [४]न द्वितीयेनार्थः। तत्र चोदकानुग्रहाद् अग्निशब्द एव वक्तव्यः। पूर्वाधिकरणञ्च विधिशब्द एव वक्तव्यो नान्य इत्येतावन्मात्रेणाप्युपपन्नम्। न तु सर्वो विधिशब्दो वक्तव्य इति प्रमाणमस्तीति

१. प्रत्याय्यः. क.
२. प्रधानयाग उदाहरणं. क.
३. उच्चार्यते. क.
४. तद्. ख.

मन्यते। स्यादेवं यद्यर्थनिर्देशो विवक्षितः स्यात्। इह तु शब्दोच्चारणमेव विधीयन इत्युक्तम्। अतः सकल एव[1] विधिगतः शब्द उच्चारणीयः॥

[ १५—आज्यभागयोर्निर्गुणदेवताशब्दोच्चारणाधिकरणम् ]

## वृधन्वान् पवमानवद् विशेषनिर्देशात् ॥३०॥ पू०

आग्नेयस्याज्यभागस्य वृधगुणवत्ता विधीयते। तस्य देवताद्वारेण तद्वत्ता सम्भवति, न स्वत इत्यानर्थक्यात्तदङ्गेष्विति न्यायेन देवताया एव वृधगुणवत्तानेन प्रकारेण विधीयते। मन्त्रस्य तु वृधन्वत्तः सामर्थ्यप्राप्तत्वादनर्थकं विधानमिति। उच्यते—न नियमेन वृधन्वतः प्राप्तिः। ततो नियमार्थं विधानमुपपन्नम्। न चाहत्य [2]वृधन्वत्ताग्नेर्विधीयते। तद्धितार्थे वृत्तास्योपसर्जनीभूतस्याग्नेर्विशेषणान्तरासहत्वात्। न च सत्यां गतावानर्थक्यतदङ्गन्यायो युक्त इति [3]मन्त्रस्यैवाग्नेयस्य वृधन्वत्ता विधीयत इति देवताया अविकार इति॥

[ १६—विधिगतोस्त्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवताभिधानाधिकरणम् ]

## विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वात्
## विकृतावपि भेदः स्यात् ॥३२॥

ननु "उस्रायै वपायै मेदस" इति मन्त्रवर्णाम्नानानादनियमोऽपि नैव प्राप्नोति विधिशब्दो वा। तेन पक्षद्वयस्याप्यनुपपत्तेः संशयानुपपत्तिः। उच्यते—सत्यां समीपे मन्त्रः श्रूयते, न त्वनेन कर्तव्यमिति विधीयते। तस्माद् युक्तः संशयः। तत्र विधिशब्द इत्युपक्रममात्रम्। द्रव्येषु विधिशब्दनियमाभावाद् अनियम एव पूर्वः पक्षः। तमाह—चोदकस्तु विधिशब्दादन्येन प्रकाशनं प्रापयति[4]। तस्मान्न नियमः[5]।

---

१. सकलो विधितोऽवगतः. क.

२. वृधन्वत्ता विधीयते. क.

३. मन्त्रस्यैव वृधन्वत आग्नेयता अग्नियागार्थता. क.

४. प्रापयतीत्यनन्तरं खपुस्तके-तस्मान्नियमो विधिशब्दः प्रकाशनं प्रापयति इति पाठः।

५. विधिरन्येन येन केनचित्. ख.

विधिशब्दादन्येन केनचित्प्रकाशनमिति। नन्वनुबन्ध्यायां द्रव्ये भवेदूह्या-नियमः, वनस्पतौ तु देवतात्वात् विधिशब्द एव प्राप्नोति 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इत्युक्तेन न्यायेन। उच्यते—स्विष्टकृद्विकारो हि वनस्पतिः। स्विष्टकृति च विधिशब्दादन्येन प्रकाशनं कृतं प्रकृतौ। विकृतौ च चोदकेन तथैव प्राप्नोति। ननु प्रकृतौ स्विष्टकृद्गुणयुक्तस्याग्नेर्गुणमात्रं लुप्तम्, अग्निशब्दस्तु न निगमे पठ्यते। तेनेहापि वनस्पतिशब्दो न लोपनीयोऽत आह—न चेह गुणलोपः सम्भवति निर्गुणत्वादाम्नानस्या "वनस्पतिं यजेत" इति। अन्यत्वं चावश्यकं कर्तव्यं विधिशब्दात्। अत्र निर्गुणत्वात् गुणलोपेनान्यत्वं न सम्भवतीति वनस्पतिशब्दस्यैव[1] लोपः। अतः पर्यायशब्दप्रसङ्ग इति। नन्वनुबन्ध्यायां मन्त्राम्नानेन तद्गत एवोह्या-शब्दो वक्तव्य इति सिद्धान्तः। वनस्पतौ तु देवतात्वात् विधिशब्द एव वक्तव्य इति कथमनयोरेकाधिकरणोदाहरणत्वमत[2] आह—सिद्धान्तस्तु समान इति कृत्वा वनस्पतिरुदाहृतः। तुशब्दोऽवधारणे। समान एव सिद्धान्त इति। विधिनिगमभेदः प्रकृतावार्थिकः न तु शास्त्रीय इत्ययमत्र सिद्धान्तः। स चोभयत्रापि तुल्यः। तस्मिंश्चोक्ते पूर्वोक्तादेव न्यायाद् वनस्पतौ विधिशब्दोऽनुबन्ध्यायां च मन्त्रशब्द एव न्यायाद् भविष्यतीति ॥३२॥

[ १७–अवभृथे सगुणयोरग्नीषोमयोर्निगदेषूच्चारणाधिकरणम्। ]

## स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥३४॥ पू०

[3]स्विष्टकरणस्य भूतस्याग्नावभावात् सांविज्ञायकमग्नेरभिधानं मन्यमानो देवता-निवृत्तिं मन्यते। भूतकालत्वमात्रासम्भवेऽपि कर्तृधातूपसर्गार्थानां सम्भवतामपि न हानं युक्तम्। भूतकालतापि पूर्वकृतयागापेक्षया सम्भवत्येव। अतो न रूढिशक्तिः कल्पयितव्या। अग्नीवरुणयोरपि चानादौ वेदवेदार्थानुष्ठानेन

१. लोपात्पर्याय. क.

२. उदाहरणता न क.

३. स्विष्टकरणस्य सांविज्ञायकं. ख.

समस्त्येव भूतकालापेक्षयैव स्विष्टकृत्त्वम्। अतः सस्विष्टकृच्छब्दकं वचनमिति ॥३४॥

[ १८—अग्नीषोमीयपशुपुरोडाशे स्विष्टकृद्यागीयदेवतायाः
सर्वत्र निर्गुणानुकीर्तनाधिकरणम् ]

**सगुणस्य गुणलोपे निगमेषु गुणस्थाने यावदुक्तं स्यात् ॥३६॥ पू०**

प्राकृत्या देवतायाः सगुणायाः सर्वत्र प्राप्ताया यागमात्रे गुणलोपो विहित इति निगमेषु यथाप्रकृतिवचनं मन्यते। प्रयोग एव त्वसौ गुणलोप इति सर्वत्र गुणलोपः ॥३६॥

[ १९—अनुयाजस्विष्टकृद्यागस्यावापिकस्विष्टकृत्संस्कारार्थत्वाधिकरणम् ]

**स्विष्टकृदावपिकोऽनूयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥३८॥ सि०**

भूतभव्यन्यायाच्छ्रुतेश्चारादुपकारकतां मन्यते। देवताविशिष्टयागविधौ हि धात्वर्थप्रधानो विधिरिति श्रुत्यनुग्रहः स्यात्। यागेन तु देवता संस्कर्तव्येति विधौ देवताप्राधान्यात् वाक्यार्थे तात्पर्यं स्यादिति। दृष्टे तु सति न युक्तादृष्टकल्पनेति पशुपुरोडाशन्यायेन संस्कारकर्मता। ननु तेनैव गतमेतत्। उच्यते—अस्त्यत्र विशेषाशङ्का। द्वयोरपि दर्शपूर्णमासप्रकरणे श्रुतयोः स्विष्टकृद्देवत्ययोर्न ज्ञायते किं कस्य संस्कारकमिति! तस्मादुभयत्रापि गुणभूतैव देवतेति। सिद्धान्तस्तु—द्रव्यप्रतिपत्त्या अयाडिति निगदेन देवतास्मरणेन च दृष्टेनैव[१] सप्रयोजन आवापिकः स्विष्टकृद्यागः। तेन तद्देवतासंस्कारोऽनूयाज इति युक्तम्। अन्यथाऽदृष्टार्थत्वापत्तेः। तेन विकृतिषु स्विष्टकृद् देवतान्यत्वेऽनूयाजैः स्विष्टिकृतो बाधः। यत्तु भाष्यकारेणोक्तं प्रधानदेवतैव स्विष्टकृति देवतेति तदर्थस्वरूपमात्राभिप्रायमिति वेदितव्यम्। [२]अत्राप्यस्त्यग्निरत्रापीति।

---

१. दृष्टेनैव च. ख.

२. तत्राप्यग्निरत्रापि. क.

न तु तद्देवतासंस्कारकता मन्तव्या । गुणान्तरोपादानेन प्रत्यभिज्ञानाभावात् विकृतिषु [1]च यथाप्रधानदेवतमूहप्रसङ्गात् इति ॥३८॥

[ २०-याज्यापुरोनुवाक्ययोः संस्कृतित्वाधिकरणम् ]

**अन्वाहेति च शब्दवत्कर्म स्याच्चोदनान्तरात् ॥३९॥ पू०**

वचनानर्थक्यात् प्राधान्यं मन्यते। स्थानासनगुणार्थं वचनमिति सिद्धान्तः ॥३९॥

[ २१-मनोतायामग्निशब्दस्याबाधाधिकरणम् ]

**मनोतायान्तु वचनादविकारः स्यात् ॥४२॥ सि०**

ननु वचने सति केयं चिन्ता अत आह—' यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या'' इत्येतद्वचनं चिन्त्यते। किं प्रकृतावुपपद्यते ? उत तत्रानुपपन्नं विकृतावुत्कृष्टव्यम् ? इति । तत्र पूर्वः पक्षः—प्रकृताविति । कथं ? अग्निलिङ्गा हि मनोता। सा प्रकृतौ नाग्नीषोमावभिधातुं शक्नोतीत्याशङ्का भवति ।[2] तस्यामाशङ्कायां चोत्कर्षे प्राप्ते प्रकृताविदं वचनमिति पूर्वेण सम्बन्धः। उत्कर्षप्राप्तौ हि वचनमिदमनुत्कर्षविध्यर्थमन्यदेवत्येऽप्यग्नीषोमीये कार्यैव मनोतेति प्रकृतावेवोपपन्ने नोत्कृष्टव्यमिति। पूर्वपक्षमाक्षिपति—विकृतावनाम्नानात्तस्यामपि न भवति, श्रुतिलिंगाद्यभावात्। ननु लिंगेन प्राप्नोति विकृतौ। उच्यते—सामान्य-सम्बन्धे सति लिंगमवकाशं लभते। न च मनोताया विकृतौ सामान्यसम्बन्धोऽस्ति। तस्मात्प्रकृतावेव निवेशो मनोतायाः। तेनानुत्कर्षार्थतया प्रकृताविदं वचनमित्ययुक्तम्, अन्तरेणापि वचनमनुत्कर्षसिद्धेः । नन्वियमसमर्था प्रकृतौ। अत उत्कृष्टव्येत्युक्तमत आह—न चादृष्टार्था मनोता प्रकृतौ। सा ह्यग्निं तावत् श्रुत्यैवाभिधत्ते । तत्सम्बद्धं सोममपि लक्षणया शक्नोति

---

१. च. नास्ति. क.

२. सत्यां. क.

**वक्तुम्**। कः सम्बन्ध इत्याह—**उभयोर्यागसाधनत्वात्**। तदेव कथमित्याह—**इतरेतरयुक्तौ हि तौ देवतात्वं प्रतिपद्येते**। तेनैककार्यकरत्वाच्छक्यतेऽग्निना सोमो लक्षयितुम्। **यथा पुष्करं स्वनन्तं दृष्ट्वा** तत्सहचारी **गृहेश्वरोऽपि स्वनन्निव लक्ष्यते, एककार्यत्वात्** सम्बन्धात् **एवमिहापि**। तस्मात्प्रकृतिनिवेशस्य सिद्धत्वान्न प्रकृत्यर्थं वचनमिति शक्यं पूर्वपक्षयितुमिति। समाधत्ते—**इदं वचनमर्थवादत्वेन स्तुवन्मन्त्रं प्रकृतावेव निवेशयति**। यत्प्रकृतौ मनोताया विधायकं वचनं 'मनोतामन्वाह" इति तस्यायमर्थवादः[1] अन्यथा हि विकृतिष्वन्याय्यनिगदो मनोता स्यात्। वचनञ्चेदमुत्कृष्येत, तच्चान्याय्यम्। **अथवोत्कर्षाशङ्कायां** मन्दधियं **प्रतीदमेव वचनमनुत्कर्षं करोति**। न्यायस्यैव स्पष्टीकरणार्थं वचनमित्यर्थः। वचनेन प्रकृतौ निवेशितापि मनोता यद्यदृष्टार्था स्यात् ततो विकृतौ नोह्येत,[2] न त्वेवमस्ति। तदाह—**लक्षणया च सोमं** प्रत्याययतीत्युक्तमेव [3]**पुष्करवद्गृहेश्वरम्**। तस्मादूहः।

**सिद्धान्तस्तु—एवकारकरणमनर्थकं प्रकृतौ भवति**। कस्मात्? **अवधारणाभावात्**। यदि हि प्रकृतावनाग्नेयी प्रसज्येत ततस्तद्व्युदासेनाग्नेय्येवेत्यवधारणं क्रियते, न तु तथा प्रसक्तिः। **विकृतौ चावधारणं विद्यते**। **तत्र हि** [4]**चोदकेन यद्देवत्यः पशुः तद्देवत्यैव मनोता प्राप्नोत्यूहेन**। **एवं च प्राप्ते** सत्यवधारणं क्रियते **आग्नेय्येवेति**। नन्वर्थवादोऽयं यथाकथञ्चिन्नीयमानो न दुष्यतीत्यत आह—**नचार्थवादत्वेनोपपद्यते**। प्रकृताविदं वचन**मन्यत्रैव** हि **मनोता श्रूयते** विधीयते **मनोतामन्वाहेति अन्यत्र** च **यद्यप्यन्यदेवत्यः पशुराग्नेय्येव**[5] मनोता कार्येति वचनम्। तेनैकवाक्यत्वा-

---

१. इत्यर्थः. क.

२. निविशेत. क.

३. पुष्कर इव

४. चोदकेन. नास्ति. क.

५. तद्देवत्या. क.

भावात् नार्थवाद इति। अपि चार्थगादत्वे सत्यपि एवकारस्य पर्युदसितव्याभावो भवत्येव, यथा विधौ विधाविवार्थवादेऽपि भङ्क्त्वा व्याख्याने दोष एवेति। तस्मात् विकृत्यर्थं[1] वचनमित्यनूहः। कः पुनरूहानूहविचारस्य लक्षणसम्बन्धः? तमाह—दशमसम्बन्धो बाधसामान्येन न्यायप्राप्तस्योहस्य वचनेन बाध इति। इदं चाधिकरणमाग्नेयः सवनीयः पशुर्ज्योतिष्टोमे नास्तीति कृत्वा चिन्तितम्।[2] तस्मिन् हि सति महाप्रकरणेन सामान्यसम्बन्धलाभात्[3] तत्रैव लक्षणाबाधेन मुख्यार्थलिप्सायां[4] मनोतोत्कृष्यते। तथोत्कृष्यमाणवचनेनानेन निवार्येत यद्यप्यन्यदेवत्योऽयमग्नीषोमीयः पशुस्तथापि मनोतात्रैव कार्येति, न तु विकृत्यर्थं स्यात्। प्रकृतावाम्नातमिदं वचनं तत्रैव सम्भवात् किमिति विकृतौ वचनं कार्यं कुर्यात्। एवकारश्च व्यवहितकल्पनया कार्यैवेत्यत्र सम्बध्येत, वरं [5]ह्युत्कर्षाद् व्यवहितकल्पनम्। तस्मात् कृत्वा चिन्तेयमिति ॥४२॥

[ २२–पृष्ठकणवरथन्तरस्य स्वयोनौ गेयाधिकरणम् ]

## पृष्ठार्थेऽन्यद्रव्यान्तरात्तद्योनिपूर्वत्वात् स्यादर्चा विभक्तत्वात् ॥४३॥ पू०

बृहद्योनौ वा रथन्तरयोनौ वा गेयम्, तयोश्चोदकप्राप्तत्वात्। अरथन्तरे वा रथन्तरशब्दः तत्सादृश्यात् ऋते नोपपद्यत इति रथन्तरयोनावेव गेयम् ॥४३॥

## स्वयोनौ वा सर्वाख्यत्वात् ॥४४॥ सि०

अस्य सिद्धान्तसूत्रस्य भाष्यकारेण यदिदं व्याख्यानं कृतं प्रस्तावो-

---

१. विकृत्यर्थमिदं. क.
२. तस्मिन् सति हि. क.
३. सत्त्वात्. क.
४. लिप्सया. ख.
५. हि. नास्ति. क.

दुगीथादौ प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनविशिष्टस्य कण्वरथन्तरशब्दो वाचक इति, तदयुक्तम्; 'गीतिषु सामाख्या'इत्युक्तेन[१] न्यायेन कण्वरथन्तरशब्देन सामैवोच्यते, न त्वृक्, येन प्राकृत्यृक् निवर्तेत। ननु मोच्यतामृगनेन, तथापि साम तावत्पृष्ठसाधनत्वेनात्र विधीयते। तेन प्राकृत्या ऋचः पृष्ठसाधनभूताया निवृत्तिः स्यादत आह—प्रकृतौ [२]चर्गक्षराणि संस्कुर्वन्ती रथन्तरगीतिः पृष्ठस्य साधनभावेनावगता। एवं बृहद्गीतिरपि। इह तु विकृतौ बृहद्रथन्तरानुवादेन तत्कार्यानुवादेनेत्यर्थः। अन्यद्गीत्यन्तरं विधीयते पृष्ठसाधनत्वेन। तस्माद्गीतिर्गीतिरेव कार्यं अक्षराभिव्यक्तौ वर्तते, नर्चः कार्यँऽक्षमत्वात्। नन्वृगप्यस्य स्वयोनिरेव विद्यतेऽत आह—ऋक् च चोदकेन प्राकृती प्राप्नोति। सा विना कारणेन न बाधितव्या। सा हि प्रकृतौ क्रमप्रकरणाभ्यामङ्गभूता। तेन वाक्यस्य तावदयमर्थः[३]—यदुत साममात्रान्यत्वकरणम्, तेन शब्दतस्तावन्नर्चो बाधः। ननु कण्वरथन्तराख्यं साम न स्वयोनिमन्तरेणोपपद्यतेऽतस्तत्सामर्थ्यादेव बाधः स्यादत आह—न च [४]पदार्थसामर्थ्यादपि चोदकप्राप्ताया ऋचो बाधः। यथा धेनुशब्देन छागशब्दबाधः। [५]कुतः? धेनुशब्दो हि गोद्रव्यमन्तरेण नैव दृष्टः प्रयुज्यमानः। कण्वरथन्तरगीतिस्तु ऋगान्तरेऽपि दृष्टैव प्रयुज्यमाना। अन्यथोत्तरयोर्गीत्यनुपपत्तेः। न च गौणी सा गीतिरन्यत्र[६] क्रियमाणा[७] प्रमाणाभावात्। तस्माच्चौदकेन [८]ऋक् प्राकृती

१. इत्युक्तम्. क.

२. चाक्षराणि. क.

३. अपदार्थं मु. पा.

४. अपदार्थं मु. पा.

५. कुतः नास्ति. क.

६. अन्येन मु. पा.

७. प्रयुज्यमाना. क्रियमाणाभावात्. क.

८. प्राकृती ऋक्. क.

प्राप्नोतीति, नैवं सिद्धान्तयितुं शक्यते । किन्तु वैश्यस्तोमप्रकरणे कण्वरथन्तरयोनिः पठितोत्तोराग्रन्थे । तस्मात्तया प्रकरणप्राप्तया प्राकृती बाध्यत इत्येवं वक्तव्यम् । तस्मात्स्वयोनौ गेयम् । एवञ्चाम्नानसिद्धयर्क्ं परित्यागर्गन्तरसञ्चारौ न कल्पितौ भविष्यतः ॥ ४४ ॥

[ २३—कण्वरथन्तरे स्वयोन्युत्तरयोरबाधाधिकरणम् ]

**कार्यत्वात्तूत्तरयोर्यथाप्रकृति ॥४७॥ पू०**

उत्तरयोस्त्वाम्नान सिद्धभावादवश्यं तत्र [1]स्वरूपेणैव गानं कार्यम् । अतो न चोदकप्राप्तबाधो युक्त इति विशेषाशङ्का । [2]प्रकरणाम्नानन्तूत्तरयोरपि [3]तुल्यमिति सिद्धान्तः ॥४७॥

[ २४–विकृतिषु स्तुतशस्त्रयोरविकाराधिकरणम् ]

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥४९॥**

प्रयोजनकथनमित्युक्तम् ॥४६॥

[ २५.—पृषदाज्यकानुयाजेषु आज्यपशब्दस्य बाधाभावाधिकरणम् ]

**उभयपानात्पृषदाज्ये दहनः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥५०॥ पू०**

द्वयमिद सर्पिश्च दधि चेति तुल्यवच्छ्रवणादुभयं हविरित्युभयोपलक्षणम् । न च यज्ञपतिवत्परार्थं द्रव्यम्, देवतावत् द्रव्यस्यापि स्मरणीयत्वादित्येकः पक्षः । [4]उपस्तरणाभिघारणार्थत्वादाज्यस्य दध्येव हविः । अत[5] आज्यशब्दं

---

१. पुरूषेणैव. ख.

२. प्रकरणाम्नानात्तु. ख.

३. तुल्यत्वं. ख.

४. उपस्तरणभिधारणार्थवादादाज्ये. ख.

५. अतः नास्ति. क.

बाधित्वा दधिपानित्येव वक्तव्यम् इत्यन्यः। पृषदाज्यं नाम द्रव्यान्तरमुभाभ्यामारब्धं यागे श्रूयते ।[१] ततस्तद्धविः, तदनुसारेण[२] चतुर्ग्रहणवाक्यार्थवाद उपस्तरणार्थवादश्च व्याख्येयः । तस्मात्पृषदाज्यपनिति वक्तव्यमित्यपरः । सिद्धान्तस्तु—आज्यं प्राकृतमेवात्र पृषत्तागुणकं हविः ।

पृषदाज्यपदं नैव सांविज्ञायिकमिष्यते ।
प्रसिद्धावयवार्थेषु न हि रूढिः कथञ्चन ॥
चित्रवाची पृषच्छब्दः आज्यमाज्यस्य वाचकम् ।
प्रत्यभिज्ञायते ह्यत्र तन्न द्रव्यान्तरं हविः ॥
आज्यपा निगमास्तेन भवेयुरविकारतः ॥ ५० ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य चतुर्थः पादः॥

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमस्याध्यायस्य पञ्चमः पादः॥

[ १—विकृतिष्वेकदेशग्रहणे पाठक्रमेण ग्रहणाधिकरणम् । ]

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १॥ सि०**

समाजेषु पूर्वनिविष्टेषु केषुचिदन्येऽवकाशाभावान्न निविशन्ते । अत्र तु निवेश एव केषां स्यादिति चिन्त्यते[३]। तेन नात्रागन्तुन्यायः। पृष्ठलोपदर्शनमपि यस्मिन् कस्मिंश्चिदप्यकृते भवत्येव । तस्मादनियमः । नैतदेवम् ; पूर्वेण ह्युपक्रान्तो द्वितीयः कर्तव्यः। स तेनानुपक्रान्तः क्रियमाणः क्रमलोपाद्विगुणः स्यात् । पूर्वस्य तु न वैगुण्यम् । अत आदितः प्रवृत्तिरन्त्यानां लोप इति ॥ १ ॥

[ २—एकत्रिकाधिकरणम् ]

**एकत्रिके तृचादिषु माध्यन्दिनस्थश्छन्दसां श्रुतिभूतत्वात् ॥७॥ पू०**

**आदितो वा तन्याय्यत्वात् इतरस्यानुमानिकत्वात् ॥८॥ सि०**

पूर्वपक्षमाह—ननु प्रकृतौ क्रम आनुमानिकः (अनुमानात्प्रभवतीत्या-

१. तत्र. क.
२. तदनुसारेण तु ग्रहण. ख.
३. अतः. क.

नुमानिकः श्रुत्यनुमानेन क्रमस्य प्रमाणत्वं एवं भूतः) पाठकल्प्यत्वात् न शब्दः। त्रिच्छन्दस्त्वन्तु 'त्रिछन्दा आवापो माध्यन्दिनः पावमानः'' इति वचनेनैव प्रतीयते। चोदकेन च प्राप्नोति। तस्मादानुमानिकत्वात् क्रमस्य बाधः। वाचनिकत्वात्तु छन्दसामनुग्रह इति युक्तम्। उच्यते— युक्तं प्रकृतौ [१]बलाबलम्। यच्छ्रौतानुमानिकयोर्बलाबलं तत्प्रकृतौ युक्तं न विकृताविति। कथम्? तत्र हि प्रकृतौ प्रत्यक्षाणि शास्त्राणि बलाबलचिन्तां सहन्ते। इह पुनः प्रकृतावेव कृतकार्येषु शास्त्रेषु तत्कृता उपकारा अतिदिश्यन्ते न शास्त्राणि। तेन विकृतौ श्रुतिप्राप्तस्य समाख्याप्राप्तस्य च बलाबलशङ्कैव नास्ति। कथम्? अनाम्नादिह प्रमाणयोः। यत्र च ते आम्नाते, तत्र प्रकृतावविरोधात् उभयं लब्धात्मकम्। अर्थद्वयञ्च तत्प्रमेयं लब्धात्मकमेवेह प्राप्यत इति न बलाबलशङ्का। असत्याञ्च बलाबलशङ्कायामुभयं कर्तव्यं[२] यदि विरोधो नास्ति। इह त्वस्ति विरोधः। तद्यत्रैवं[३] कश्चिदुपस्थाने विशेषस्स्यात् इदं पूर्वमुपस्थितमिदं पश्चादिति ततो बलाबलं भवेत्। पूर्वोपस्थितमनुग्राह्यं पश्चादुपस्थितं नेति। तत्र छन्दसामनुग्रहः किं स्यादुत क्रमस्येति चिन्तायां क्रमस्यानुग्रह इति ब्रूमः। कथमित्यपेक्षायां भाष्यं पठति—अत्र ग्रन्थः। अप्रवृत्तो कस्मिंश्चित् पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्त इति। पठित्वा व्याचष्टे—वैकल्पिकानां हि[४] सर्वेषां युगपत्प्राप्तिः। तत्र यावदेवान्यतमाध्यवसायो न भवति, तावत्सर्वेषां [५]तुल्या प्राप्तिः। अध्यवसाये[६] तु कृतं तदेवानुष्ठेयमितरेषां तु निवृत्तिः।

---

( ) चिह्नान्तर्गतो भागः क पुस्तकगतः।

१. बलाबलं नास्ति. क.

२. यत्र. क.

३. एव. क.

४. हि. नास्ति. क.

५. तुल्यप्राप्तिः मु. पा.

६. अध्यवसाने मु. पा, क.

तदुक्तम् "निर्देशात्तु विकल्पे यत्प्रवृत्तम्" इति । कुत एतदित्याह—**प्रवृत्ते च ततोऽन्यत् न भवत्येवाशक्तत्वात्**[1] । च शब्दो हेतौ । तदनेन भाष्ये प्रवृत्तिशब्देनाध्यवसानमेव कारणे कार्यवदुपचारादभिधीयत इति व्याख्यातम् । अध्यवसानमिति कर्तव्यतयोपस्थापनमेवोच्यत इति । भवत्वेवमिह तु किमायातमित्याह—**अत्र च**[2] तावत् स्तोत्रारम्भात् **पूर्वेण** **मन्त्रान्तरेणासज्यं** सर्जीत्यादिना स्तोत्रादिभूता प्रथमा **गायत्री प्राप्यते** [3]प्रारभ्यत इत्युभयसिद्धम् । पूर्वो हि पदार्थ उत्तरस्य पर्युपस्थापकः प्रारम्भो भवति । तथापि किमित्याह—**सा च** [4]**गायत्री गायत्रीमेव द्वितीयं पर्युपस्थापयति** । तयैव सा प्रारब्धा भवतीति सैव कर्तव्या, **न तु द्वितीयं छन्दः** प्रारब्धुं **पर्युपस्थापकाभावात्** । **तस्मात् क्रमानुग्रह** इति आद्ये तृचे गानमिति ॥७॥

## त्रिकास्तृचे धुर्ये स्यात् ॥१०॥ पू०

तृचे क्रियमाणं साम प्रत्यृचं क्रियते । तत्र प्राप्तैवावृत्तिः साम्न इति अनुवादमात्रमिदं वचनम् "आमावृत्तं धूर्षु स्तुवते" इति । नानेन चोदकप्राप्तस्य [5]तृचस्य बाध इति मन्यते । स्यादेवं यदि सामावृत्तिरियमुच्यते, स्तुतेस्त्वियमावृत्तिरेकरूपैव स्तुतिरावर्तनीयेति । साच गुणभिधानात्मिका । न चाभिधायकावृत्तिमन्तरेणाभिधानावृत्तिस्सम्भवति ऋक्भेदे चाभिधानप्रकारभेदोऽवश्यं भावीति न तादृश्येव स्तुतिः पुनः पुनः कृता स्यात् । तस्मादेकयैव पुनः पुनः स्तोतव्यम् । एवञ्च वचनमप्यर्थवद् भवतीति ॥१०॥

## चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥१२॥ सि०

अविशेषात् कृत्स्नप्राप्तावुच्यते— मध्यमानां दशानां [6]अह्नां दशरात्र इति

---

१. अशक्यत्वात्. क.
२. यदि. क.
३. प्रारब्धं. क.
४. गायत्री नास्ति. क.
५. तृचस्य नास्ति. क.
६. अन्हां. नास्ति. क.

पृथक् समाख्यास्ति । तेन रात्रान्तशब्दवत्त्वावान्तरसादृश्यविशेषात् "यत् प्रथमं तद् द्वितीयम्" इत्यादिलिङ्गोपबृंहितात् प्रायणीयोदयनीयौ वावर्जयित्वा-वशिष्टस्य प्रवृत्तिरिति ॥१३॥

**अपूर्वासु तु संख्यासु विकल्पः स्यात्**
**सर्वासामर्थवत्त्वात् ॥१४॥ सि०**

प्रकृतानामिवाम्नातानामप्येकदेशग्रहणे क्रमानुग्रहादाद्योपादानमन्त्यलोपश्चेति पूर्वः पक्षः। सिद्धान्तमाह—**प्रकरणे मन्त्रा आम्नायन्ते**। **ते च प्रकरणात्सर्वे प्रयोक्तव्या इति** गम्यते। **श्रुत्या च चतुर्दशानां प्रयोग उच्यते** 'चतुर्दशभिर्वपति" इति **स च प्रयोगोऽनियमेनापि** येषां[१] केषाञ्चिच्चतुर्दशानामुपादाने **घटते**। अतो न नियमः। यत्तु क्रमानुग्रह इत्युक्तं तत्राह-**क्रमस्तु नियतक्रमानेव प्रापयति**। क्रम एव केवलोऽत्र मन्त्रनियमे प्रमाणमिति। ततः किमित्याह —**प्रकरणेन तु** प्रमाणेन **सर्वे प्रयोक्तव्याः**। तच्च क्रमाद् बलीयः। **नन्वत्र क्रमोऽपि नैव प्रकरणं बाधते**। क्रमप्रकरणयोर्विरोधो नास्तीत्यर्थः। कथम्? **प्रकृतकरणात्** प्रकृता एव हि क्रमवशादपि गृह्यन्ते, नाप्रकृताः। तेनोभयानुग्रहादाद्योपादानमिति। **उच्यते—सर्वविषयतान्तु प्रकरणेनावगतां** क्रमो **बाधते**। कथमित्याह[२]—**सा च क्रमानुग्रहे सर्वविषयता** चतुर्दशश्रुतेर्या प्रकरणेनावगता सा **न घटते**। चशब्दो हेतौ। **तस्माद् विरोधे सति सर्वविषयस्य प्रकरणस्यानुग्रहः। अतो विकल्पः**। क्रमानुग्रहेण हि प्रकरणप्राप्तपदार्थबाधो न युक्तः। अतिदेशे तु सर्वविनियोगस्य प्रकरणविनियोगवदसिद्धत्वात् आकाङ्क्षावशादेकदेशस्यैव ग्रहणे कर्तव्ये सत्याद्यस्यैवोपादानं क्रमानुग्रहात्। इह तु प्रकरणसहितेन लिङ्गेन सर्वेषां विनियुक्तत्वात् न दुर्बलेन क्रमेण बाधः सम्भवतीति ॥१४॥

संख्यापूरणविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतत्वात् ॥१५॥

---

१. केषाञ्चिदुपादाने. क.

२. यावत्क्रमानुग्रहे च. क.

## स्तोमविवृद्धौ प्राकृतानामभ्यासेन आगमेन वाभ्यासस्याश्रुतत्वात् ॥१६॥

पूर्वपक्षस्त्वभिधीयते—[1]प्राकृतस्य संङ्ख्याविधानं प्राकृतेष्वेव संख्याविधानम् कुतः ? संङ्ख्येयस्याबाधितत्वात्। न ह्यत्र केनचिच्छब्देन संङ्ख्येयानां साम्नां निवृत्तिर्गम्यते । तस्मात्प्राकृतानामबाधितत्वात् तेषामेवाभ्यासः संङ्ख्येयानां संङ्ख्यासम्पत्यर्थम्। यथा हि प्रयाजानामेकादशत्वे विधीयमाने संख्यामात्रविधानं संख्येयास्तु त एवावतिष्ठन्ते तद्वदिहापीति। सिद्धान्तस्तु—पृथक्त्वनिवेशः संङ्ख्याया न्याय्यः। यत्राहत्याभ्यासस्य वचनं[2] नास्ति वचनेन तु केवलं बाध्यते ; यथा धुर्येषु "आवृत्तां धूर्षु स्तुवते' इति । यत्तु प्रयाजवदित्युक्तं तत्राह— यत्र संङ्ख्येयानुवादेन संख्येयविशेषमेव स्वशब्देनानूद्य संङ्ख्याविधानं तत्रैव पृथक्त्वनिवेशित्वं बाध्यते। यथैकादशप्रयाजानिति। तत्र हि प्रयाजा वाक्येनोपात्ताः। तेन तत्र संङ्ख्याभ्यस्यते अभ्यासेन पूर्यते। कस्मात् उपात्तत्वात्संङ्ख्येयस्य । इह तु नोपात्तं संङ्ख्येयं वाक्येन यथा प्रयाजेषु। तस्मादत्र प्रथक्त्वनिवेश एव न्याय्यो न त्वभ्यासः। बहिष्पवमाने च श्रुत्यैवानाभ्यास उक्तः "पराक् बहिष्पवमानेन स्तुवते" इति। तेन तत्र तावन्नाभ्यासः। तत्सामान्यादितरेषु तथात्वमिति सर्वत्रैवागमः[3]। स च साम्नामेव[4] स्तुत्यङ्गत्वादिति केचित्। तदयुक्तम् ; [5]ऋचामेवाङ्गत्वात्। येऽप्यनङ्गत्वमाहुस्तेऽपि साधनत्वम् नापह्नुवते, तन्मात्रमेव च स्तोमपूरणौपयिकम् नाङ्गत्वम्। अतस्तासामप्यागमः स्यात्।

---

१. प्राकृतसङ्ख्याया विधानं. क.

२. वचनमुपादानं. क.

३. सम्भवतीति. क.

४. एव नास्ति. क.

५. ऋचामपि. ख.

वचनात्तु साम्नामेवागमो [1]नर्चाम् "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्चात्र ह्येवावपन्ति अत एवोद्वपन्ति" इति 'प्राकृतीष्वेव गायत्र्यादिष्वा-[2]गमनियमात्। न[3] हि ह्यृत्रामृक्ष्वागमः सम्भवति। सम्भवति तु साम्नाम्। तस्मात्सामागमः। सोऽपि गायत्र्यादिष्वेव। ताश्च पवमान एव भवन्ति नान्यत्रेति पवमानविषय एवागमः परिसङ्ख्यानात् "अत्र ह्येवावपन्ति" इति। अन्यत्र [4]त्वागत्याभ्यासाश्रयणमिति ॥१६॥

## बहिष्पवमाने त्वृगागमः सामैकत्वात् ॥२६॥ सि०

पूर्वेण न्यायेन बहिष्पवमानेऽपि सामागमः प्राप्नोति। तत्रापि हि तृचो [5]गायत्रः। तेन तत्र शक्यः सामागम इति मन्वानस्योत्तरम्—वाचनिकसामैकत्वाबाधायर्चामेवागमः। न चैवं स्तोत्रान्तरेष्विव [6]बहिष्पवमानेऽप्यभ्यास एव स्यात्। आगमस्य गायत्र्याद्याधारत्वनियमादृचां चर्क्ष्वागमासम्भवात् सत्यमेवम् पराक्शब्देन तु तत्राभ्यासस्याहत्य निषिद्धत्वात् आगम एव कर्तव्यः। तेन बहिष्पवमाने ऋगागमः माध्यन्दिनार्भवपवमानयोस्तु सामागमः, स्तोत्रान्तरेषु तु[7] अभ्यास इति ॥

## अभ्यासेन तु सङ्ख्यापूरणं सामधेनीष्वभ्यास-प्रकृतित्वात् ॥२७॥ पू०

अत्र प्राकृतीरेकादशर्चो गृहीत्वावशिष्टानां सर्वासामागमः कर्तव्यः।

---

१. नर्चां नास्ति. क.

२. नियमदर्शनात्. क.

३. न ह्यत्र ऋगागमः. क.

४. तु ऋगभ्यास. क.

५. गायत्राद्यः. क.

६. बहिष्पवमानेऽभ्यास एव क.

७. तु नास्ति क.

[१]एवं सङ्ख्यासामंजस्यादित्येकः पक्षः। "त्रिः प्रथमां त्रिरुत्तमाम्" इति वचनेन लक्षणा यावत्सङ्ख्यासम्पत्तिः प्रथमोत्तमयोरभ्यासो विधीयते, दृष्टार्थत्वात्। श्रुत्यर्थविधौ ह्यदृष्टार्थता स्यात्। तस्मादभ्यासेनैव सङ्ख्यापूरणमित्यपरः। विधेयस्य प्रयोजनकल्पना, न तु तद्वशेन विधेयावधारणम्। तस्मात् त्रिरभ्यास एव विधीयते, न तु सङ्ख्यापूरणम्। तत्तु प्रकृतावर्थात्सञ्जातम्। तद्विधाने हि त्रिःशब्दोऽत्यन्तानुपपन्नत्वादनुवादासम्भवात्। द्विचतुराभ्यासेनापि हि सङ्ख्यापूरणं भवत्येव। न चात्र लक्षणापि सम्भवति, अविनाभावाभावात्। न ह्यत्रैकेन वाक्येन प्रथमोत्तमयोर्व्यासक्तः षडभ्यास उच्यते, येनाविनाभावात् सङ्ख्यापूरणं लक्ष्येत। वाक्यद्वयं ह्येतत् 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति। तत्रैकैकेनान्यनिरपेक्षेण[२] त्रिरभ्यास उच्यते। न च त्रिरभ्यासस्य सङ्ख्यापूरणेनाविनाभावोऽस्तीति न तल्लक्षणासम्भवः। तस्मात् त्रिरभ्यास एव श्रुत्यर्थो विधीयते। तद् विधानाच्चार्थात् सङ्ख्यापूरणं संजातम्। आर्थिकश्च न चोदकः प्रतिदिशति। तस्माद्यावदुक्तमभ्यस्यावशिष्टा आगमयितव्याः ॥२७॥

## षोडशिनो वैकृतत्वं [३]तत्र कृत्स्नविधानात् ॥३४॥ पू०

ननु फलार्थः षोडशी 'षोडशिनां वीर्यकामः।' इति। तत्कथं [४]तस्य प्रकृतिविकृत्यर्थत्वविचारोऽत आह—"य एवं विद्वान् षोडशिनं गृह्णातीति" इति अस्यार्थः। य एवं विद्वानित्यनेन वाक्येनोत्पन्नस्य फलासंयुक्तस्यास्य वाक्यान्तरेण फलसम्बन्धः। वाक्यान्तरञ्च [५]क्रत्वर्थत्वेऽप्यस्त्येव "अग्निष्टोमे गृह्णीयान्मध्यमेहंस्त्रिरात्रस्ये" इत्यादिकमिति युक्ता चिन्ता। अत्रैवं पूर्वः

१. एवं नास्ति ख.

२. अन्योन्यनिरपेक्षेण क.

३. तत्र नास्ति क.

४. तस्य नास्ति क.

५. क्रत्वर्थोऽपि क.

पक्षः "मध्यमेऽहंस्त्रिरात्रस्य गृह्यते" इति प्रत्यक्षेण वाक्येन विकृतिसम्बन्धः। प्रकृतौ तु प्रकरणाम्नानानुमितेन वाक्येन सम्बन्धः स्यात्। तच्च प्रत्यक्षे सति वाक्ये दुर्बलम्[१]। ननु प्रकृत्यर्थत्वेपि प्रत्यक्षं वाक्यम् "अग्निष्टोमे गृह्णीयात्" इति। मैवम्। वचनान्तरेणापि विकृत्यर्थ[२] त्वावगमाद्वैकृतेऽग्निष्टोम इत्येवमिदं[३] व्याख्यातव्यम्। तस्माद् वैकृतः षोडशीति ॥३४॥

## प्रकृतौ चाभावदर्शनात् ॥३५॥

नहीदं वचनं प्रकृतौ प्रतिषेधकम्। किं तर्हि ? विकृतावुपदेशकम् तस्मात् प्रकृतौ [४]शिष्टाप्रतिसिद्धत्वात् षोडशी भवितुमर्हतीति। जात्युत्तरमिदं भाष्योक्तम् "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यत्रापि शक्यं वक्तुम् गार्हपत्यसम्बन्धं श्रुतिर्ब्रवीति नेन्द्राभिधानं निवर्तयतीति [५]न केवलमत्रैव, सर्वत्रैवेदमुत्तरं घटते प्रबलदुर्बलप्रमाणसमवाये अत[६] इदमुत्तरं श्रुतिलिङ्गाधिकरणोक्तेन न्यायेन विरुद्धम्। उपसंहरति–तस्मादसमञ्जसम् कथं तर्ह्ययं ग्रन्थः यदैतदुत्तरमसमञ्जसं तदा कथमयं ग्रन्थ इति। समाधत्ते-उपचयत्वेनायं ग्रन्थः मूलयुक्तिस्त्वन्यैव। तामाह–यदुक्तं पूर्वपक्षे वाक्योनोत्कर्षः षोडशिन इति तन्न; कथम् प्रकृतौ षोडशी विधीयते "षोडशिनं गृह्णाति" इति केनापि प्रयोजनेनासंयुक्तः। तत्र विधीयमानस्य त्र्यंशा भावना किं केन कथामिति तत्र किमंशं कारणोपकारो विपरिवर्तमानो निराकांक्षं[७] करोति स्ववाक्येऽन्यस्याश्रवणात्। केनेत्यंशं षोडशी निराकाङ्क्षी

१. दुर्बलमिति ख.
२. अपि नास्ति क.
३. इदं नास्ति क.
४. शिष्टाप्रतिषिद्धत्वात् नास्ति क.
५. तेन केवलं ख.
६. अतः नास्ति क.
७. निराकाङ्क्षीकुरुते क.

करोति। कथमंशं षोडशिन इतिकर्तव्यता यत्राम्नायते, सा निराकाङ्क्षी कुरुते। तत्र प्रकृतावेव षोडशिवाक्यं परिसमाप्तं [१]न त्वेकेनाप्यंशेनापरिपूर्णम्। यदिहि प्रकृतौ किमंशपरिपूर्तिर्न स्यात् ततो वैकृतः स्यात्। अस्ति तु सर्वांशपूर्तिः। तस्मात् परिपूर्णत्वाद्वाक्यस्य प्रकृतावेव निवेशो नोत्कर्षः। यत्र तु स्ववाक्य एव विधीयमानस्यैव[२] किंसंशपरिपूरणं[३] पदान्तरेणोपनीयते यथा "युवं हि एवं स्वर्पती" इति प्रतिपद् विधीयमानैव विधानावस्थायामेव स्ववाक्येन द्वियजमानकेन[४] ऋतुना सम्बध्यते। तत्र प्रकरणबाधो युक्तः। यथा च द्वादशोपसत्त्वस्य विधीयमानस्य[५] किमंशपरिपूरणं स्ववाक्यश्रुत एवाहीनशब्दः करोति, एवं नात्र किमंशस्य पूरणं वाक्येन क्रियते[६] येन प्रकरणादुत्कर्षः स्यात्। वाक्यान्तरन्तु मध्यमेऽहंस्त्रिरात्रस्येत्यादिकं विकृत्यर्थतां बोधयेत्। वाक्यान्तरञ्च प्रकृत्यर्थतायामप्यस्त्येव "अग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युवथ्यो ग्राह्योऽतिरात्रे ब्राह्मणस्येति। न च वैकृतेऽग्निष्टोमे इति युक्तं, प्रकृताभिधानप्रतीतेः। न च "उत्तरेऽहन् द्विरात्रस्य" इत्यादिवाक्यशेषोऽयं सम्भवति। न हि द्विरात्रेषूत्तरमग्निष्टोमसंस्थमस्ति। नापि त्रिरात्रेषु मध्यमं, नापि चतूरात्रेषु चतुर्थं तत्संस्थम् तस्मात्प्रकरण एव निवेशः। बाधप्रसङ्गेन प्रकरणसम्बन्धः षोडशिनो बाध्यते नेति प्राप्तबाधवदप्राप्तबाधोऽपि[७] चिन्त्यत इत्यध्यायसङ्गतिः[८] ॥३५॥

## तस्याग्रयणाद् ग्रहणम् ॥४२॥ सि०

षोडशिप्रसङ्गात् कुतस्तस्य ग्रहणमिति चिन्त्यते। तत्र "आग्रयणाद्

---

१. न केनापि मु. पा.

२. एव नास्ति क.

३. परिपूर्णं ख.

४. यजमानेन मु. पा.

५. विधीयमानस्यैव ख.

६. श्रूयते क.

७. चिन्त्यः ख.

८. पादसङ्गतिः क.

गृह्णाति उक्थ्याद् गृह्णाति" इति वचनद्वयादुभाभ्यां ग्रहणम् [१]यदपि वचनान्तरं "पराञ्चमुक्थ्यान्निगृह्णाति षोडशिनम्" इति तत्राप्यपादान एव पञ्चमी न दिक्शब्दयोगे। पराक्शब्दस्य "पराचीः सामिधेनीरन्वाह" इतिवदभ्यास-वचनत्वेनादिक्शब्दत्वात् तस्मादुभाभ्यां ग्रहणम् ॥

## तृतीयसवने वचनात् स्यात् ॥४४॥ सि०

किमर्थं पुनरिदं प्रस्तुतमसमाप्यान्तरा चिन्त्यते। केचिदाहुः—मूलाधिकरण-सिद्धान्ते स्थितेऽन्तरा चिन्तायाऽनवकाशः। तत्र हि पराक्शब्दस्य कालवाचित्वात् उक्थ्योत्तरकाल षोडशी ग्रहीतव्यः पूर्वयोश्च सवनयोर्नासौ कालः सम्भवति। उक्थ्यस्य [२]तत्राविद्यमानत्वात्। तेन कालवचने स्थिते न प्रतिसवनं[३] ग्रहणं शक्यं शङ्कितुमिति न चिन्तावकाशः स्यात्। तस्मात् पूर्वपक्षस्थे मूलाधिकरणे चिन्तेयं क्रियत इति। तदयुक्तम्; एवमपि हि पूर्वपक्षे समाप्ते कर्तव्या स्यात्, न मध्ये। अपि च 'प्रातस्सवने गृह्णाति" इत्यादिवचनबलात् (अत्र पूर्वपक्षकरणम्, न च वचनस्य परिपन्थी विद्यते। तेन यद्यपि पूर्वयोरुक्थ्योत्तर-कालता न सम्भवति, तथापि वचनबलात्) अन्यकालमपि गृह्येत। काल-वचनन्तु तार्तीयसवनिकस्य ग्रहणस्य स्यात्। अपि चास्ति त्रिष्वपि सवने-षूक्थ्यः। तेन सम्भवत्येवेयं चिन्ता समाप्तेऽप्यधिकरणे। तस्माद् विचित्रगतिः सूत्रकारः प्रसङ्गादिदं मध्ये वर्णितवान्[४] इत्येव वक्तव्यम्। तत्र प्रातःसवनादि-वचनात् त्रिष्वपि ग्रहणं [ न ] मन्यते। सिद्धान्तस्तु यत्प्रातःसवन इत्यादि निन्दाद्वारं तृतीयसवने ग्राह्य इत्यनेन विधिनैकवाक्यमवगम्यमानं प्रातस्सवन इत्यादि वचनं न पृथग् वाक्यं भवितुमर्हति। तस्मादनेन तावद्वचनेन तृतीय-

---

१. यद्यपि क.

२. तत्र नास्ति. क.

३. ग्रहणं नास्ति. क.

( ) चिह्नान्तर्गतो भागः खण्डितः क पुस्तके.

४. वक्तव्यं. क. इति

सवन एव विधीयते। 'षोडशीसवने सवने गृह्णाति'' [ गृह्यत ] इति शाखान्तरवाक्येनानन्यशेषभूतेन सवनान्तरेऽपि भवत्येवेति।

स्थितादुत्तरम्—आग्रयणादेव ग्रहणं नोक्थ्यात् नहि निरपेक्षश्रुतस्य नित्यवत् श्रुतस्य चाग्रयणस्य सत्यां गतावुक्थ्येन सह (क) विकल्पसमुच्चयाश्रयणं युक्तम्। अस्ति च गतिः—पराक्शब्दो हि कालवचनो दृष्टः 'परुच्चमग्न्याधेयात् पुनराधेयम्' इत्यादिषु। तस्मादुक्थ्यादिति[१] दिग्योगे पञ्चमी, नापादाने। यत्राप्युक्थ्यान्निगृह्णातीति श्रूयते, न पराक्शब्दः, तत्रापि शाखान्तरीयपराक्शब्दयुक्तवाक्यान्तरसामानार्थ्यार्थमाग्रयणस्य[२] विकल्पसमुच्चयपरिहारार्थञ्च दिग्योग एव पञ्चमी व्याख्यातव्या। न चावश्यं प्रयुज्यमान एव दिक्शब्दे तदपेक्षा पञ्चमी भवति, तदर्थयोगमात्रापेक्षित्वात्तस्य। सहयोगतृतीयात्।[३] तथाहि—यथाहि युक्तग्रहणसामर्थ्यात् [४]वृद्धोयूनेत्यादिप्रयोगाच्च[५] सहार्थयोगाच्च सहार्थयोगमात्रापेक्षा[६] तृतीया न सहशब्दयोगमपेक्षते; तथा अन्यारादितरर्त' इत्यत्रापि युक्तग्रहणात्। अन्यथा 'आजाहिभिः' इत्येव वक्तव्यत्वात् वृत्तादनन्तरस्येत्यादि[७] प्रयोगाच्चार्थयोगापेक्षेयं पञ्चमी। तस्मादुक्थ्यस्यानयादानत्वादाग्रयणादेव ग्रहणमिति ॥४२॥

## उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ॥४९॥ पू०

षोडशिप्रसङ्गात् बाधप्रसङ्गाच्च तद्गतस्तोत्रशस्त्रबाधाबाधौ चिन्त्येते।

---

१. दिग्योग इयं. ख.

२. आग्रयणस्य कालयोगमपेक्षते इत्यधिकं पुस्तके.

३. तथाहि नास्ति. ख.

४. वृद्धो यूनेत्यादिवत्. ख.

५. सहार्थयोगाच्च नास्ति. ख.

६. नतीया नास्ति. क.

७. प्रयोगापेक्षेयं. क.

नन्वत्र यद्यपि "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" इति भाष्योक्तं वचनं न ग्रहणं निमित्तीकृत्य स्तोत्रादेर्विधायकम्, गौरवात्। "आज्यैः स्तुवते" इत्यादिभिश्च स्तोत्रशस्त्रयोर्विहितत्वात् कालार्थस्त्वयं संयोगः "ग्रहं वा गृहीत्वा" इति लाघवात्। सति वास्य [1]स्तोत्रविधायित्वे [2]प्रतिग्रहं प्रतिचमसञ्च तत्प्रसङ्गाद्द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः" इत्यादिलिङ्गविरोधाच्च। तथाप्याहत्यैव षोडशिनस्तोत्रशस्त्रमुच्यते—"एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते" "यद्वा षोडशं स्तोत्रं षोडशं च शस्त्रं तेन षोडशी" इति। तत्कथमस्तोत्रशस्त्रता शङ्क्यतेऽत आह—'**अग्निष्टोमे राजन्यस्य गृह्णीयात्**" इति वाक्यात् **सत्यग्निष्टोमे षोडशिग्रहणं** प्रतीयते। स **यदि सस्तोत्रशस्त्रः क्रियेत अग्निष्टोमसंस्था न स्यात्**। ततः किमित्याह—**असत्यां चाग्निष्टोमसंस्थायां** निमित्ताभावात् **षोडशिग्रहणमेव न प्राप्नोति**। **तस्माद्** विहितमपि **स्तोत्रशस्त्रं यत्र निमित्तविघातो नास्ति** "षोडशिना वीर्यकामोऽतिरात्रे ब्राह्मणस्य" इत्यादिषु **तद्विषयमेवाङ्गी-**कर्तव्यम्। **इह** त्वग्निष्टोमोक्थ्ययोः क्रियमाणं **निमित्तविघाताय** स्तोत्रशस्त्रं **स्यादिति**। अत्र भाष्यम्–'अग्निष्टोमविशिष्टे ज्योतिष्टोमे स उच्यते नाग्निष्टोमस्यैवाङ्गमिति'। अस्यार्थमाह—कथं **सस्तोत्रशस्त्रो भवेत्। यद्यग्निष्टोमस्तोत्रस्यैव षोडशियागाभ्यासोऽङ्गत्वेन विधीयते। तथाहि सति प्रधानस्याङ्गेनाव्यवधानात् क्रियेत स्तोत्रशस्त्रम्**। तदा ह्यग्निष्टोमस्तोत्रस्यैव षोडश्यङ्गं तदङ्गञ्च स्तोत्रशस्त्रमित्यग्निष्टोमस्तोत्रमेव साङ्गं समाप्यत इति न तत्संस्थता व्याहन्येत क्रियमाणेऽपि स्तोत्रशस्त्रे। **न चायमग्निष्टोमस्तोत्रस्याङ्गत्वेन** विधीयते। **षोडशियागाभ्यासस्य** फलवज्ज्योतिष्टोमाङ्गत्वेन **फलवत्वात्**। [3]**न च निष्फलस्याङ्गिता स्तोत्रशस्त्रे** प्रति। तस्मादस्तुतशस्त्रः स्यात् ॥ ४६ ॥

---

१. स्तोत्रशस्त्र. ख.

२. प्रतिग्रहं. नास्ति. क.

३. नाङ्गता निष्फले स्तोत्रशस्त्रे. क.

[ १२–षोडशिनः स्तुतशस्त्रत्वाधिकरणम् । ]

## सस्तुतशस्त्रो वा तदङ्गत्वात् ॥५०॥ सि०

कर्तव्ये स्तोत्रशस्त्रे तदङ्गत्वात् "एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते" "यद्वा षोडशं स्तोत्रं षोडशञ्च शस्त्रं तेन षोडशी" इति वचनाभ्यां स्तोत्रशस्त्रयोर्विहितत्वात् । नन्वङ्गमपि न क्रियते को दोषोऽत आह–षोडशियागो हि क्रतूपकारेण स्वफलेन [1]च फलवान् ।[2] फलवत्वाच्च तत्सिद्ध्यर्थमङ्गान्यपेक्षते । तानि चास्य विहितानि । तद्यद्यङ्गानि न क्रियेरन् तथा सति षोडशी स्वकार्यं नैव साधयेत् । तथासति निष्फलत्वादकरणमेव षोडशिनः प्राप्नोति । तस्मात् क्रियेत स्तोत्रशस्त्रम् । चोदयति— क्रियमाणे त्वग्निष्टोमसंस्था न स्यात् । तस्मान्निमित्तविघातात् [3]स्वयमपि न क्रियेतेति । परिहरति–असत्यां चाग्निष्टोमसंस्थायां क्रियेतैवेति शेषः । चशब्दोऽप्यर्थे । यथाविज्ञाताङ्गयुक्ते हि षोडशिनि विधीयमाने पूर्वसंस्थोपमर्देन संस्थान्तरं विहितं भवति । तदेष वाक्यार्थः—यदग्निष्टोमसंस्थमुक्थ्यसंस्थञ्च विहितं यदि तद्राजन्यस्य तदा न तत्संस्थं स्यात् किन्तु षोडशिसंस्थमिति । तस्मात् सस्तोत्रशस्त्रः ॥

[ १३–आङ्गिरसां द्विरात्रे षोडशिनियमाधिकरणम् । ]

## अभावादतिरात्रेषु गृह्यते ॥५३॥ पू०

षोडशिन एवाङ्गिरसातिरिक्तेषु द्विरात्रेषु[4] बाधाबाधचिन्ता । अत्र भाष्यं विहितश्च "उत्तरे ऽहन् द्विरात्रस्य गृह्यते"[5] इत्यनेन वचनेन षोडशी । तस्माच्चोदको न प्रापयतीत्यप्राप्तविधानं षोडश्युत्तर इति वचनमिति । [6]अत्र चोदयति—ननु "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इत्यनेन वचनेन प्राप्नो-

---

१. च. नास्ति क.

२. फलसम्बन्धाच्च क.

३ स्वयमेव क.

४. बाधचिन्ता क.

५. इत्येतेन क.

६. तत्र क.

त्यैव । तस्मात्किमनेन [1]वचनेन षोडश्युत्तर इति । अनारभ्यविधिप्राप्तत्वात् यत्र चोदकप्राप्तिं निरस्य प्राकरणिकं वचनं विधायकमित्युक्तं तच्चेदमयुक्तम्; एवमप्यनारभ्य विधिनैव प्राप्तत्वात् न प्राकरणिकं विधायकं स्याद् इति । उच्यते-द्विरात्रमात्रमनारभ्यविधौ, वर्णोपात्तं, द्विरात्रविशेषस्त्वाङ्गिरसो वर्णेर्नोपात्तः । तस्माद्द्विरात्रशेषोऽपि वर्णैरुच्यते । तस्मादेतद्विधानमेव शीघ्रत्वात् । भाष्यस्य चायमर्थः—न तावत् चोदकात् प्राप्तिरनारभ्यविधिसद्भावात् । नाप्यनारभ्यविधितः प्राप्तिः, तस्य सामान्यविषयत्वेन मन्थरत्वादिति । ननु सामान्यवचनेनाप्यर्थाल्लभ्यत एवैतत् । अतो व्यर्थमेतदिति । सत्यं लभ्यते न ब्रूमो न लभ्यत इति । किं तर्हि ? प्रमाणवेलायां केन शीघ्रं प्रमीयत इति प्रमाणशक्तिं निरूपयामः, न विधीयमानमर्थं निरूपयामः ।[2] किमर्थम् अन्यतः प्राप्त्या नार्थो विधीयत इति चेन्न, वेदस्यापर्यनुयोज्यत्वात् । विधिशक्तिश्च शीघ्रत्वात् प्राकरणिकस्यास्तीत्युक्तम् । तस्मादप्राप्तविधिः । अयञ्च सूत्रार्थः—अङ्गिरसां द्विरात्रे मन्थराभ्यां चोदकानारभ्यविधिभ्यां षोडशिनः प्राप्त्यभावादप्राप्तविधानं प्राकरणिकं वचनं न परिसंख्यार्थम् । अतश्चानारभ्यविधिना निर्विघ्नेन विहितः [3]षोडशीति द्विरात्रान्तरे गृह्यत इति ॥५३॥

## अन्वयो वानारभ्यविधानात् ॥५४॥ सि०

षोडश्युत्तर इत्यत्र प्रकरणादस्मिन् द्विरात्र इति गम्यते । न ह्यत्र[4] द्विरात्रमपि वर्णोपात्तं नतरां तद्विशेषः । तेनेदगतिमन्थरम् । द्विरात्रमात्रे त्वनारभ्यविधिना श्रुत्यैव विधानम् । तस्मादङ्गिरसां द्विरात्रेऽप्यनेनैव वाक्येन प्रथमप्राप्तिः पश्चात्तु प्रकरणात् । अतो नाप्राप्तविधानम् । किमर्थं

---

१. वचनेन नास्ति क.

२. खपुस्तकेऽत्र ग्रन्थपातः ।

३. षोडशी द्विरात्रान्तरोत्तरातिरात्रेषु ख.

४. द्विरात्रमात्रमपि क.

तर्हि प्राप्तस्य षोडशिनः प्रकरणाम्नानम् ?[१] परिसंख्यार्थम्। का पुनरत्र परिसंख्या ? [२]किं द्विरात्र एव[३] षोडश्येव द्विरात्र इति। उत्तरम्—अङ्गिरसां द्विरात्र एव षोडशी नान्येषु द्विरात्रेष्विति। किमिति पुनरितरा न भवत्यत आह—न पदार्थपरिसङ्ख्या षोडश्येवात्र नान्ये पदार्था इति। कुत इत्याह—यदि हि बहवः पदार्था द्विरात्रेष्वनारभ्यविधौ [४]श्रूयेरँस्तथासत्येतत् षोडशिनः पुनर्वचनं पदार्थान्तरपरिसङ्ख्यां कुर्यात्। न च बहवः पदार्थाः श्रूयन्ते। किन्त्वेक एव षोडशी बहुद्विरात्रविषयः[५] श्रूयते। न चेयं चोदकपरिसंख्या, येन पदार्थान्तरपरिसङ्ख्या स्यात्। चोदकेन हि विकल्पेन षोडशी प्राप्नोति, तत्र नियमार्थमिदं वचनं स्यात्, न परिसङ्ख्यार्थम्। तस्मादनारभ्यविधेश्चोदकप्राप्तवैकल्पिक[६]षोडशिनियामकस्येयं परिसङ्ख्या। तत्र च न बहवः पदार्थाः श्रूयन्ते। श्रूयन्ते तु बहवो द्विरात्राः सामान्येन। तस्मात्क्रतुपरिसङ्ख्येयम् अङ्गिरसा द्विरात्र एवानारभ्यविधिविहितः षोडशिनियमो नान्येष्विति। ततश्चान्येषु यथाप्रकृति विकल्प एव भवतीति।[७] इदन्तु व्याख्यानमनुपपन्नमिति मत्वाथवेत्यादिना व्याख्यानान्तरं भाष्यकारेणारब्धम्। तत्र य एव पूर्वव्याख्याने सिद्धान्तः, स एव पूर्वः पक्षः। सूत्रन्त्वेवं व्याख्येयम्—परिसङ्ख्यायां षोडशिनो [८]द्विरात्रान्तरेषु नियमस्याभावात् अङ्गिरसां द्विरात्र एव नियतो गृह्यत इति। सिद्धान्तस्तु—त्रिदोषत्वान्न

---

१. कपुस्तकेऽत्र ग्रन्थपातः।
२. किं वा क.
३. द्विरात्रे क.
४. ततः षोडशिनः क.
५. विषय एव क.
६. वैकल्पिकनियामकस्य क.
७. इदं व्याख्यानं ख.
८. द्विरात्रेषु क.

परिसङ्ख्या युक्ता, नापि सत्यां गतौ (प्रदेशान्तराम्नातस्य विस्पष्टक्रतुसम्बन्धिविधेः) प्रदेशान्तराम्नातेनोपसंहारो युक्तः। अस्ति चास्य वैखानसविधिस्तावकतया गतिः। तदेकवाक्यता ह्यस्य कल्पते। अपि चानारभ्यविधिः शीघ्रत्वान्न मन्थरेण प्राकरणिकेनोपसंहर्तुं शक्यते। यस्मादर्थवादोऽयमिति [१]द्विरात्रान्तरेष्वबाधः षोडशिनः ॥

[ १४–नानाहीनाधिकरणम् । ]

**चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयते भोजनवत् ॥५५॥ पू०**

प्रासङ्गिकमेतत्। तत्राहीनस्येत्येकवचनश्रवणात् एकस्मिन्नेवाहीने चतुर्थे गृहीत्वा पुनस्तत आरभ्य चतुर्थे ग्रहीतव्यः। एवञ्च वीप्साप्यर्थवती भवति। अन्यथा ननाहीने गृह्यमाणे चतुर्थे गृह्यत इत्येतावतैव यावत्प्रधानमनुष्ठानव्याप्तेः सिद्धत्वात् अनर्थिका वीप्सा स्यात्। तस्मादेकस्मिन्निति। नैतदेवम्; अहीनस्य चतुर्थेऽहनि ग्रहणमुच्यते। न चैकस्याहीनस्यानेकं चतुर्थमस्ति। नहीदं ग्रहणापेक्षं चतुर्थत्वम्, अश्रवणात्। तस्मात् पत्नीसन्नाहनादिवदाकृत्यभिप्रायमेकवचनम्। वीप्सा चानुवाद इति नानाहीनेषु ग्रहणम् ॥५५॥

[ १५–जगत्सामाधिकरणम् । ]

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥५८॥ सि०**

अत्र प्रथमं संक्षेपेण व्याख्याय पुनर्विस्तरेण व्याख्यातमिति नार्थभेदे मनः खेदयितव्यम्। यद्वा प्रथमवर्णके नैमित्तिकमाग्रयणाग्रत्वं प्रकृतौ निविशते अथवोत्कृष्यत इति साक्षाद्विचारितम्। तद्धेतुत्वेन तु जगत्सामशब्दः कथञ्चित् प्रकृतौ सम्भवति, न वेति चिन्तितम्। द्वितीये तु वर्णके नैमित्तिकोत्कर्षानुत्कर्षौ फलमङ्गीकृत्य जगत्सामशब्द एव साक्षाद्विचारितः। तत्र प्रकरणाज्ज्योतिष्टोम

( ) कोष्ठान्तर्गतः खण्डितः कपुस्तके

१. द्विरात्रेषु क.

एव रथन्तरसामा वा बृहत्सामा वा जगत्सामाभिधीयते। अस्ति हि तस्यार्भवपमाने। कावमन्त्यं साम जगतीषु विहितम्। तद्योगादसौ सिद्धान्तवत् ऋग्द्वारेण शक्यते जगत्सामेति [1]वदितुम्। नैतद्युक्तम्; एवं हि[2] नित्यत्वाद्यदीति निमित्तावचनं नावकल्पेत। बृहद्रथन्तरसाहचर्याच्च पृष्ठसामैव प्रतीयते नान्यत्। अतो बृहद्रथन्तरोभयसामा जगत्सामेत्युच्यते। अस्ति ह्युभयसामत्वं [3]पक्षे ज्योतिष्टोमस्य[4]। तत्र हि प्रत्यक्षमेव "रथन्तरं पृष्ठं भवति" "बृहत्पृष्ठं भवति" इति सामद्वयं विहितं [5]समुच्चीयते। वचनान्तरेण च विकल्पो विहित इति पाक्षिकस्समुच्चयः। तेनोभयसामा जगत्सामा। कृत्स्नवाची च जगच्छब्द इति। यद्वा रथन्तरसामा जगत्सामा। रथन्तरयोनौ हि[6] जगच्छब्दो विद्यते "ईशानमस्य जगतः" इति। अत्रानन्तरपक्षदूषणार्थं भाष्यम्—'यदि चोभसामा जगत्सामा भवेत् कृतकरो विधिरनर्थकः स्यात्' इति। एतस्य कोऽर्थः? उत्तरम्—रथन्तरसामत्व ऐन्द्रवायवाग्रता विहिता। बृहत्सामत्वे तु शुक्राग्रतोभयसामत्व आग्रयणाग्रतैव विधातव्या। भिन्नक्रम एवशब्दः। उभयसामत्व एवान्यानवरुद्ध आग्रायणाग्रता विधातुं शक्या। सा च जगत्सामशब्देऽनुच्यमानेऽपि सामर्थ्यादेव लभ्यते। तस्मादनर्थको जगत्सामशब्दः स्यात्। अपि च न तयोः प्रकृतौ समुच्चयः। वाचनिकेन विकल्पेन न्यायसिद्धस्य समुच्चयस्य निरस्तत्वात्। तस्माद्रथन्तरसामैव जगत्सामेत्येवं प्राप्ते ब्रूमः—

जगच्छब्दस्य तावत्स्वरूपपरत्वमन्याय्यं, शब्दानामर्थाभिधायित्वात्।[7]

---

१. वदितुं शक्यते क.

२. हि नास्ति क.

३. पक्षे नास्ति क.

४. रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथम यजेत आप. श्रौ. १०.२.६.

५. समुच्चीयते च. ख.

६. हि नास्ति क.

७. अर्थाभिधायकत्वात् क.

तेन चग्लक्षणा । तथा च सामलक्षणेत्यन्तकष्टकल्पना । तस्माज्जगत्यामुत्पन्नं [१]साम यत्र स विषुवान् जगत्सामेत्युच्यते । तस्माच्छ्रुतिबलादाग्रयणाग्रतायाः प्रकरणसम्बन्धो बाध्यते ॥५८॥

अतः परं नवाधिकरणान्यतिक्रम्य [२]त्र्यनीकाधिकरणं व्याख्यायते । वयन्तु तान्यपि व्याख्यास्यामः ।

[ १६–संसवाधिकरणम् ]

## उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥५९॥ पू०

रथन्तरं यस्य साम स रथन्तरसामा । तथा बृहत्सामा । उभयसाम्नि च द्वयसद्भावात् [३]उभयनिमित्तिप्राप्तिः । तत्र [४]समुच्चयासम्भवात् विशेषाग्रहणाच्च विकल्पः । मुख्यत्वाद्वा रथन्तरनिमित्तकमेव कर्तव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु-रथन्तरविशिष्टः बृहद्विशिष्टश्च क्रतुर्निमित्तम् । बृहद्रथन्तरयोश्च परस्परव्यवच्छेदेन विशेषणता । नचोभयसाम्नि व्यवच्छेदोऽस्ति । अथापि नाम विशेषणत्वं, तथापि सापेक्षत्वादुभयसाम्नि नास्य सामर्थ्यं समासस्याग्नेयशब्दस्येवैन्द्राग्नेऽस्ति । तस्मात् निमित्तविघातात् [५]उभयस्यापि नैमित्तिकस्य बाधः ॥५९॥

[ १७–ज्योतिष्टोमे ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ]

## ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥६२॥ पू०

बाधप्रसङ्गाद् ग्रहस्य पाठप्राप्तः क्रमो वचनेन बाध्यते, नेति चिन्त्यते । तत्र "ऐन्द्रवायवं गृह्णाति" इतीत्यादिभिरेव ग्रहणस्य विहितत्वात् अग्रतैवात्र

---

१. साम यत्र नास्ति क.

२. त्र्यनीकालिङ्गदर्शनं क.

३. उभयनिमित्ते प्राप्ते क.

४. समुच्चयाभावान् क.

५. उभयत्रापि क.

विधातव्या। सा च नैन्द्रवायवस्य धर्मा:, येन कस्यचिदपि पुरस्तात् कृते कृतः शास्त्रार्थः स्याद्, ग्रहान्तरणां त्वियमैन्द्रवायवपूर्वकता विधीयते। तत्र य एव ग्रहस्तत्पूर्वको न स्यात्स एव विगुणः स्यात्। तस्मात्सर्वादितः प्रतिकर्ष इति। उच्यते—धाराग्रहाधिकारे वचनमिदम्। तेषाञ्च पाठसिद्धैव तदग्रहता। तेन ग्रहणमेवात्र विधीयते। तथा च श्रुत्यर्थविधानमपि लभ्यते। किमर्थन्तु प्राप्तस्य ग्रहणस्य विधानमिति तदुपरितनाधिकरणे वक्ष्यामः ॥६२॥

[ १८–ऐन्द्रवायवस्य कामसंयुक्तेष्वप्यप्रतिकर्षाधिकरणम् ]

**कामसंयोगे तु वचनात् आदितः प्रतिकर्षः स्यात् ॥६५॥ पू०**

अत्र तु [1]ग्रहणस्य विधावप्रवृत्तिविशेषकरं वाक्यमित्यग्रताविधानम्। सापि च धाराग्रहाणां सिद्धैवेति सर्वग्रहाणां तदग्रहता विधीयते कामाय। तस्मात्सर्वादितः प्रतिकर्ष इति प्राप्त उच्यते—धाराग्रहाधिकारो न सत्यां गतावतिक्रमितुं शक्यते। अस्ति च क्रत्वर्थतया विहितस्य पुरुषार्थत्वप्रतिपादनेनार्थवत्त्वम्। एवं च ग्रहणानां प्राकरणिकक्रत्वर्थत्वबाधेन वाक्यात्पुरुषार्थत्वे प्राप्ते पुनः क्रत्वर्थत्वप्रतिपादनायैन्द्रवायवाग्रा[2] ग्रहा [3]गृह्यन्त इत्येतदपि वचनमर्थवद्भवति। तस्मात्संयोगद्वयेन ग्रहाणामैन्द्रवायवाग्राणां पाठादेव सिद्धानां ग्रहणं क्रत्वर्थेन पुरुषार्थेन प्रतिपाद्यते। क्रत्वर्थवचने [4]ह्यसति केवलं कामार्था ग्रहा भवेयुः। नित्यश्च प्रयोगो यत्र क्वचिदवस्थितेनागृहीतेनैव सोमेन क्रियेत। अतः क्रत्वर्थवचनमर्थवदिति सिद्धम् ॥६५॥

[ १९–शुक्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् ]

**परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥६७॥**

शुक्राग्रादिवाक्येष्वपि तर्हि ग्रहणमेव कामविशेषेभ्यः प्रतिपाद्यत इति पाठ-

---

१. ग्रहणविधौ. क.

२. प्रतिपादनात्. क.

३. विगृह्यन्ते. ख.

४. तु. क.

क्रमो न बाध्येत। नैवम्। नहि प्राकृतानां धाराग्रहाणां शुक्राग्रताः पाठतः प्राप्ताः, यतस्तामविधाय ग्रहणमात्रं विधीयते। तेन सा तावद् विधातव्या। तत्र प्राप्तानां ग्रहाणां फलसम्बन्धः शुक्राग्रता च न विधातुं शक्या, वाक्यभेदप्रसङ्गात्। अथ य एषां मध्ये शुक्रप्रभृतयो ग्रहास्तान् कामाय गृह्णीयादित्युच्यते, तथापि पदद्वयालोचनात् वाक्यभेद एव। तस्मादिन्द्रियकामादिवत् प्रकरणसिद्धेषु शुक्राग्रता कामाय विधीयते। तस्मात्प्रतिकर्षः शुक्रादीनाम् ॥

[ २०—शुक्रादीनामुपांश्वन्तर्यामत ऊर्ध्वं प्रतिकर्षाधिकरणम् ]

## पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥७०॥ सि०

प्रासङ्गिकमिदम्। तत्राविशेषात्सर्वेभ्यः प्रतिकर्ष इति प्राप्तेऽभिधीयते—नात्र ग्रहशब्दः श्रूयते, येन ग्रहमात्रस्य तदग्रता स्यात्। यद्यपि च श्रूयेत, तथापि इन्द्रियकामहोमादिवत् प्रकरणप्राप्तानुवादः स्यात्। न ह्येकेन वाक्येनाग्रत्वस्य गुणस्य गुणसम्बन्धश्च[1] शक्यः कर्तुम्। अतो विपरिवृत्तिलभ्यग्रहसम्बन्धाङ्गीकरणेन फलसम्बन्धमात्रं शुक्राग्रताया विधीयते। विपरिवृत्तिश्च धाराग्रहाणामैन्द्रवाय्वादीनामेवेति तेषामेव [2]तत्तदग्रता। तस्मादैन्द्रवायवात्प्राक् प्रतिकर्षः ॥७०॥

[ २१—शुक्रादिग्रहसादनप्रतिकर्षाधिकरणम् ]

## सादनं [3]चापि शेषत्वात् ॥७१॥ सि०

उभयोरपि ग्रहणसादनयोः क्रत्वर्थत्वेन परस्परशेषत्वाभावात् नान्यतरप्रतिकर्षेऽन्यतरप्रतिकर्ष इति यावदुक्तापकर्षः। ( सादनं तु यथास्थान एव पाठक्रमात् ) उच्यते। ग्रहणाङ्गं सादनम्। तेषामेकप्रयोगवचनपरिगृहीतानां सादनमन्तरेण साहित्यसम्पत्तिर्न भवतीति। तेन तत्साहित्यसम्पत्त्या दृष्टार्थत्वात्

१. फलसम्बन्धश्च. क.

२. तदग्रता. ख.

३. चाविशेषात्. क, ख.

( ) एतदन्तर्गतो भागः खण्डितः क.

तदर्थमासादनं तत्प्रतिकर्षे प्रतिकृष्यते । [1]न ह्यप्रतिकृष्यमाणं ग्रहणं साहित्यायावकल्पत इत्यर्थवशात् पाठक्रमस्य बाधः ॥७३॥

[ २२–शुक्रादीनां प्रदानप्रतिकर्षाभावाधिकरणम् ]

## प्रदानं चापि सादनवत् ॥७५॥ पू०

प्रदानार्थग्रहणसम्बन्धात् प्रदानस्यापि प्रतिकर्षं मन्यते । नात्रावदानादिवत् ग्रहणादिः प्रदानान्तः पदार्थः, मध्ये सादनविधानात् । तच्च ग्रहणं यौगपद्यार्थमित्युक्तम् । तेन गृहीत्वासाद्य ग्रहणान्तरं कर्तव्यम् । न च सादनवत् प्रदानं ग्रहणार्थम् । प्रधानं हि तत् । न चाङ्गप्रतिकर्षे प्रधानप्रतिकर्षः । तस्मान्न प्रदानापकर्षः ॥७५॥

[ २३–त्र्यनीकाधिकरणम् ]

## त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥७७॥ पू०

अनुवादमात्रमनर्थकम् । परिसङ्ख्या च त्रिदोषदुष्टा । तस्मादर्थवादार्थं पुनः श्रवणम् । न त्वेतदपि युक्तं न ह्यत्र काचित्स्तुतिः प्रतीयते । अथापि कथञ्चित् कल्प्येत, यदि विध्यर्थता न सम्भवेत् । सम्भवति तु विध्यर्थता । चोदकेन हि यावदानुमानिकेन प्रकारद्वारेण कथञ्चित्प्राप्तिर्न सम्पद्यते तावदेव[2] प्रत्यक्षेण वचनेन तदग्रता विधीयते । तेन प्रकृतौ विकृतौ चाग्रविधानमेव समानं भवति । न तु क्वचिद् विधिरन्यत्र कार्यतः प्राप्तिरिति । किं पुनः प्रयोजनम् ? सामानविध्यमिति ब्रूमः । ज्योतिष्टोमे हि रथन्तरसामत्वादिकं विधाय पश्चात्तन्निमित्तमग्रत्वं विहितमिति । इहापि चोदकेन नैमित्तिका प्राप्तिः स्यात्[3] । वचनात्वनैमित्तिकं नित्यमेव पृष्ठसाम्ना [4]समानकालत्वं तस्य विधीयते । तस्य च

---

१. न ह्यप्रतिकृष्टानां. क.

२. एव नास्ति. क.

३. स्यात. नास्ति. क.

४. समानकालं विधीयते. ख.

प्रयोजनं तद्विकृतिषु निमित्ताभावेऽपि तदाग्रतासिद्धिः । यथा गर्गत्रिरात्रे मध्यम-महर्वामदेव्यपृष्ठम् । तत्र बृहत्सामत्वाभावेऽपि शुक्राग्रता भवति । परिसंङ्ख्यया-न्येषां पदार्थानां बाध इति पूर्वपक्षे । सिद्धान्ते त्वबाध इति सङ्गतिः ॥

[ २४—व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् ]

## द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानं स्यात् ॥७९॥ पू०

नन्वग्रताविशेषनिमित्तमिदं संज्ञाद्वयम् । न चाग्रताविशिष्टस्य धर्मसम्बन्धः । धर्मान्तराणामग्रतायाश्च तुल्यवद् द्वादशाहसम्बन्धात् । तेन नोभयविधस्य धर्माः, नापि समूढरूपयुक्तस्य । किन्तु द्वादशाहस्वरूपस्य । अतः किमत्र विचार्यत इति ? उच्यते—सत्यं स्वरूपस्यैव धर्माः । तस्य तु[१] किं रूपद्वयमपि नैजं व्रीहियववत् उतैकं नैजमविनष्टोमवदपरतु नैमित्तिकमुक्थ्यादिवत् तद्विकार इति चिन्त्यते । किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा इति [२]भाष्यस्याप्य-यमर्थः—यं द्वादशाहं प्रकृत्य धर्मा आम्नाता स किमुभयरूपः उत समूढरूप एव व्यूढरूपं त्वागन्तुकमिति । तत्र रूपद्वयमपि फलासंयुक्तं विहितं क्रत्वर्थम् । पश्चात्तु वाक्यान्तरेण व्यूढस्य कामसंयोगे कृतेऽपि 'एकस्य तूभयत्वे संयोग-पृथक्त्वम्' इति न्यायात् क्रत्वर्थता न निवर्तेत इति पूर्वः पक्षः । सिद्धान्तस्तु—न व्यूढरूपं दध्यादिवल्लोकप्रसिद्धं, येन वाक्यान्तरमनपेक्ष्य फलाय विधीयेत । उक्थ्यादिवदलौकिकमिदं रूपम् । अत उत्पत्तिफलविध्योरिव व्यूढरूपफल-विध्योः[३] । एकवाक्यत्वात्काम्यमेव व्यूढरूपम् । तेन तस्य प्राकरणिकं क्रत्वर्थत्वं बाध्यते । तस्मात्समूढविकारो व्यूढः ॥

[ २५—संवत्सरसत्रे त्र्यनीकाविवृद्धयधिकरणम् ]

## ऐकादशिनीवत् त्र्यनीकापरिवृत्तिः स्यात् ॥८३॥ पू०

त्र्यनीकाप्रसङ्गादिदमधिकरणम् । अथवाहर्गणस्य विवक्षाबाधः प्रतिपाद्यते ।

---

१. तु. नास्ति. क.
२. भाष्यम् । अस्यायमर्थः
३. वाक्योः. क.

गवामयनेऽह्नामुत्पत्तिं तांण्ड्यकशाखिनः समामनन्ति—"प्रायणीयचतुर्विंशे आद्ये द्वे अहनी। ततश्चत्वारोऽभिप्लवाः षडहाः। एकः पृष्ठ्यः षडहः। स [1]एको मासः। तादृशाः पञ्च मासाः। ततस्त्रयोऽभिप्लवाः षडहाः। एकः पृष्ठ्यः षडहः अभिजिन्नामैकाहः त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि। आद्याभ्यामहोभ्यां सह षण्मासाः। तदिदं पूर्वः पक्षः। ततो विषुवान्। अथोत्तरं पक्षः। त्रयः स्वरसामानः। विश्वजित्, पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः। त्रयोऽभिप्लवाः षडहा इत्यष्टाविंशतिरहनि। पुनः पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः। चत्वारोऽभिप्लवाः षडहाः। स मासः। तादृशाश्चत्वारो मासाः। ततस्त्रियोऽभिप्लवाः षडहाः। आयुर्गौरिति द्वे अहनी। द्वादशाहस्य दशाहानि महाव्रतञ्चातिरात्रश्चेति द्वात्रिंशदहान्याद्यैरष्टाविंशत्यहोभिः सह षण्मासाः। "आवृत्तं पक्ष उपयति" इति उत्तरे पक्षस्यावृत्तिः स्तोमादिगणानां विधीयते। आवृत्तिरिति न पुनः करणमात्रमभिधीयते, यागोत्पत्तिवाक्यैरेव प्रतियागमङ्गभूतस्तोमाभ्यासस्य प्राप्तत्वात्। किन्तु प्रत्यग्गमनम्। प्रातिलोम्येनानुष्ठानमिति यावत्। "षड्भिरितो मासैरध्वानं यन्ति षड्भिः पुनरायन्ति" इति च दर्शनात्। तथा च सूत्रकारः [2]"पृष्ठे रसभोजनमावर्त्तते" इत्यावृत्तिशब्देनैव प्रातिलोम्यमाह। तेन यदेव पूर्वस्मिन् पक्षसि छन्दःस्तोमादिकमनुलोमं तस्य सर्वस्येह प्रतिलोम्यम्। तदिदं गवामयनम्। तत्र त्र्यनीकायां दण्डकलिवदावृत्तिः स्वस्थानविवृद्धिर्वेति चिन्त्यते। तत्राहर्ग्रहणस्य विवक्षां मन्वानो दण्डकलितवदावृत्तिं पूर्वपक्षयति॥

**स्वस्थानविवृद्धिर्वाह्नामप्रत्यक्षसंङ्ख्यत्वात् ॥८४॥ सि०**

तत्र यथाभाष्यं तावत् सिद्धान्तमाह **प्रथमस्य यज्ञभागस्यैन्द्रवाय्वाग्रता विधीयते। कुतः? यज्ञस्य फले चोदितत्वात्।** अहर्ग्रहणं तर्हि कथमित्याह— **अह्नानीत्ययमर्थो लभ्यत एव।** यज्ञभागो ह्यहरात्मक इति तद्ग्रहणमनुवादः। किं पुनः कारणमेवमाश्रयणे? अत आह— **यदि चाह्नीति**[3]

१. एकः नास्ति. क.

२. पृष्ठये. क.

३. अहरिति. ख.

विवक्ष्येत, ततो विशिष्टानुवादात् वाक्यं भिद्येत। निष्फलानि च तान्यहानि। परमापूर्वं हि फलवत्। तदङ्गान्युत्पत्त्यपूर्वाणि। न च प्रधानार्थत्वे [1]सत्यङ्गार्थता युक्ता। तस्मात्परमा[2] पूर्वभागप्रयुक्तोऽयं धर्मः॥

## पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात्॥

यस्य दण्डकालितवदावृत्तिस्तस्य[3] त्रयस्त्रिंशेऽहन्याग्रयणाग्रतादर्शनं नोपपद्यते। कथम्? अस्मिन् हि[4] गवामयनेऽशीतिशतमहानि पूर्वपक्षः। एवमेवोत्तरमपि। तत्र पूर्वपक्षसि प्रथमं तावत् त्र्यनीका निविशते। त्रयाणामनीकानां समाहारस्त्र्यनीका त्रिफलावत्। अजादेराकृतिगणत्वात् द्विगोरपि टाप्प्रत्ययः अग्रवचनोऽनीकशब्दः। सा च तत्र निविशमानाद्ये द्वे अहनी वर्जयित्वा भवति। कुतः? तयोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात्। अत्र कश्चिदाह—किमत्र प्रत्यक्षवचनोपन्यासेन? न्यायादेवाथमर्थो लभ्यते। द्वादशाहे हि प्रायणीयोदयनीययोरन्तराले त्र्यनीका निविष्टा गवामयनेऽपि तयोरन्तराले निविशते इति। प्रलपितमिदं केनापि गवामयनिकाहः क्लृप्तिमजानता। तत्र[5] प्रायणीयानन्तरं हि चतुर्विंशमहः, तदनन्तरमभिप्लवः। तत्र प्रायणीयवर्जमपि निविशमाना चतुर्विंशादारभ्य निविशेत। तत्र तु[6] त्रिवृत आरभ्य[7] सप्ताहानि परिशिष्यन्त [8]इति भाष्यानुपपत्तिः।

---

१. सम्भवति. क.

२. परमापूर्वप्रयुक्तभाग. क.

३. तस्मैतत्. ख.

४. तु. क.

५. तत्र नास्ति. ख.

६. तु. नास्ति. ख.

७. आरभ्येति सत्य. ख.

८. इति च. ख.

चतुर्विंशाहापरिज्ञानात्त्विदं भवतोक्तम्। अपि च प्रायणीयवर्जमपि न्यायतो न लभ्यते। द्वादशाहे द्वितोयादीनामह्नामङ्गं त्र्यनीका पूर्वपक्षिता। सा च तद्विकारेषु प्रवर्तते। तानि चाहानि गवामयने प्रवर्तमानान्यादित आरभ्य प्रवर्तन्ते। तथाच प्रथमं तद्द्वितीयमिति लिङ्गं दर्शितम्। तेन द्वादशाहे द्वितीयादारभ्य प्रवृत्तापि त्र्यनीका गवामयने प्रथमत एवारभ्य प्रवर्तते। न च प्रायणीयोदयनीयमध्यवर्त्तित्वप्रयुक्ता त्र्यनीका। तथाहि सति गवामयने तयोरभावात् अप्राप्तिरेव तस्याः[1] स्यात्। अन्यो हि द्वादशाहिकौ प्रायणीयोदनीयौ। अन्यौ च गावामयनिकौ प्रकरणन्तरत्वात्। न चैष[2] प्रायणायो द्वादशाहप्रायणीयविकारः। प्रायणीयशब्दस्य यौगिकत्वेनानतिदेशित्वात्[3]। तस्मादादितः प्रवृत्तिः। वचनादाद्यमहर्द्वयं वर्जयित्वा निविशत इति। ततः किमित्याह—**शिष्टेषु चाहः सुनिविशमानाया** एकोनविंशतिकृत्व आवृत्तायाः **सप्ताहानि परिशिष्यन्ते। तत्र सप्तम [4]एवैन्द्रवायवाग्रता** भवति। **तस्मिंश्च** सप्तमेऽहनि **पूर्णः पक्षः समाप्तम्।** त्र्यनीकात्वपरिसमाप्ता, द्वयोरवशिष्टत्वात्। **सा चावश्यं परिसमापयितव्या। ततोऽष्टमो विषुवान् शुक्राग्रः।** ( ततो नवमो भवति **प्रथमः स्वरसामा आग्रयणाग्रः द्वितीयः स्वरसामा ऐन्द्रवायवाग्रः, तृतीयः स्वरसामा शुक्राग्रः।**[5] ) **ततो विश्वविदाग्रयणाग्रः ततः पृष्ठ्यः षडहः [6]आवृत्तः प्रयुज्यते, तस्यावृत्तस्य प्रथमं त्रयस्त्रिंशमहर्भवति तदैन्द्रवायवाग्रं प्राप्नोतीत्येवमिदं दर्शनं नोपपद्यते**

---

१. तस्याः. नास्ति. क.

२. चैवं प्रायणीयं. क.

३. अनतिदेशात्. क.

४. एव. नास्ति. ख.

( ) चिह्नान्तर्गतः खण्डितः क. पुस्तके.

५. विश्वजित्। सः. क.

६. आवृत्तः नास्ति. क.

पूर्वपक्षे[1] दण्डकालितवदावृत्तौ। स्वस्थानविवृद्धौ तूपपन्नमिति। [2]यदिह व्याख्यानं भाष्यकारेण कृतं, इदं नोपपद्यते। कथम्? अस्मिन् हि गवायमने त्र्यनीका प्राप्यमाणा चोदकेन[3] प्राप्यते। न नामधेयान्नापि प्रत्यक्षवचनाद् भाष्यकारमते। ततः किमित्याह—विश्वजिति नामधेयेनाग्रयणाग्रता प्राप्नोति। "पृष्ठ्यः षडहः" इत्यत्रापि नामधेयेनैव प्रसिद्धषडहसम्बन्धिन्येव ग्रहाग्रहता प्राप्नोति। तथाभिप्लवे च ज्योतिर्गौरायुरित्येवमादिना नामधेयेनैकाहिको विध्यन्ततः प्राप्नोति। 'ज्योतिर्गौरायुर्ज्योतिः इति ह्ययमभिप्लवः षडहः। तत्र बृहद्रथन्तरे सामनी व्यतिषङ्गेण युग्मेषु बृहत्, अयुग्मेषु रथन्तरम्। तत्र ज्योतिराद्येकाहधर्मः प्रवर्तते। एकाहेषु च ज्योतिष्टोमाद्रथन्तरसामस्वैन्द्रवायवाग्रता बृहत्सामसु च शुक्राग्रता। तेनाभिप्लवे षडहे तयोरेव व्यतिषङ्गेण प्रवृत्तिः, न त्र्यनीकायाः। [4]चोदकप्राप्तेश्च नामधेयप्राप्तिर्बलीयसीत्युक्तम्। सर्वे च मासाः पृष्ठ्यैरभिप्लवैश्च व्याप्ताः स्वरसामाद्यन्त्याहर्वर्जम्। क्व त्र्यनीका दण्डकलितवदावृत्तिं स्वस्थानविवृद्धिं वा लभताम्? तदेवमिह त्र्यनीकाभावादधिकरणमेवेदं नोपपद्यते। अभ्युपेत्याप्यधिकरणोपपत्तिं लिङ्गानुपपत्तिमाह—यद्यपि चोदकेन त्र्यनीकाप्राप्तिः स्यात् तथापि दशरात्रस्य धर्मा विकृतिष्वतिदिश्यन्त इत्युक्तम्। दशरात्रप्रवृत्तौ च पूर्वस्मिन् पक्षसि (वि)भागधर्मपक्षेऽपि दशधा विभागः प्राप्नोति। नवरात्रप्रवृत्तौ हि नवधा विभागः प्राप्नुयात्। [5]न च नवरात्रः प्रवर्तते। दशरात्रप्रवृत्तौ तु[6] दशधा विभवते पूर्वस्मिन् पक्षसि दशमे भाग ऐन्द्रवायवाग्रता प्राप्नोति। द्वादशाहे प्रायणीयोदयनीयावैन्द्रवायवाग्रौ दशमं चाहरिति

---

१. पूर्वपक्षसि. क.

२. यदिदं. ख.

३. प्राप्नोति. मु. पा.

४. चोदकप्राप्तेर्नाम. क.

५. तथा च इत्यशुद्धः खपुस्तकपाठः।

६. हि. क.

दशमस्यैन्द्रवायवाग्रत्वश्रवणात् । ततश्चोत्तरे पक्षसि आवृत्ते क्रियमाणे स एवान्त्यो [1]दशमो भागः प्रथममारभ्यते । तत्रैन्द्रवयवाग्रता प्राप्नोति त्रयस्त्रिंशेऽहनि सिद्धान्तेऽपि । ततश्च पूर्वोत्तरपक्षयोर्लिङ्गानुपपत्तौ न कश्चिद् विशेषः । यद्यपि नवरात्रः प्रवर्तते । तथापि [2]को विशेषो भाष्यकारेण कृतः । एकस्य पूर्वपक्षिण आद्यमहर्द्वयं वर्जयित्वाभिप्लविकादाद्यादह्नः त्रिवृत आरभ्य गणना, अपरस्य सिद्धान्तितः सर्वाद्यात् प्रायणीयादारभ्य । सोऽयं निष्प्रमाणको विशेषः तस्मात्तुल्या गणना कर्तव्या ।[3] तथा च यथा हि पूर्वपक्षे प्रायणीयचतुर्विंशयोरैन्द्रवायवाग्रतायाः प्रत्यक्षवचनविहितत्वात् त्रिवृत आरभ्य गणना, तथा सिद्धान्तेऽपि स्यात् । ततः किमत्याह—तुल्यायां च गणनायां लिङ्गदर्शनानुपपत्तिरेव । [4]तदा हि सिद्धान्तेऽपि त्र्यनीका पूर्वस्मिन् पक्षसि [5]समाप्यते उत्तरस्मिन्नपि, एकमहर्व्याप्नोति [6]भागसाम्यार्थ्यम् । अन्यथा हि पूर्वभागा [7]विंशतिरहानि अन्त्यस्त्वष्टादशाहानि स्यात् । न चैतदुचितम् । तथापि कथं लिङ्गानुपपत्तिरित्याह—अयं चापरो विशेषो भाष्यकारेण लिङ्गं दर्शयता पक्षद्वयस्य दर्शितः । चशब्दो हेतौ । एकस्य पूर्वपक्षिण आवृत्तिवचनमवन्त्रीकृत्य कृत्स्नं [8]गवामयनमधिकृत्य गणना अपरस्य[9] तु सिद्धान्तिनः पूर्वस्मिन्नेव पक्षसि गणना । ( पूर्वमेव पक्षी नवधा विभज्य त्र्यनीकां तत्रैव निवेश्य प्रातिलोम्यमुत्तरस्मिन्नङ्गीकृतम् । सोऽयं विशेषः । यदि सिद्धान्तिनः ) त्र्यनीका पूर्वस्मिन् पक्षसि समाप्ता स्यात् , पूर्वपक्षिणश्चा-

---

१. दशमः नास्तिः क.

२. कोऽयं क.

३. तथा च नास्ति. ख.

४. तथाहि. क.

५. न समाप्यते. ख.

६. भागसामर्थ्यं. ख.

७. विंशतिर्विंशति. ख.

८. गवामयनं तन्त्रीकृत्य. क.

९. परस्य तु. क.

( ) भागोऽयं खपुस्तके खण्डितः ।

समाप्ता,(क) [१]तत उपपद्यते । अयं हि तत्र हेतुः—यत्पूर्वस्मिन् पक्षसि कृतं तस्योत्तरत्र प्रातिलोम्यं, न यत् पूर्वोत्तरपक्षसोर्व्यासक्तमिति । यदा तूभयोरसमाप्ता पूर्वत्र्यनीका तदा यथैव सिद्धान्तिनः पक्षद्वयव्यासक्ताया अपि प्रथमे स्वरसाम्नि ( समाप्ताया द्वितीयस्वरसामप्रभृति प्रातिलोम्यं तथा पूर्वपक्षिणोऽपि सिद्ध्यति । ततश्च तस्यापि द्वितीये ) स्वरसाम्न्याग्रयणाग्रता तृतीये शुक्राग्रता विश्वजित्यैन्द्र-वायवाग्रता पार्ष्ठिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रतेत्युपपन्नं लिङ्गम् । अथ तस्य व्यासक्ता त्र्यनीका न प्रातिलोम्यं लभत इति कृत्स्नं गवामयनमधिकृत्य गणना; ततः सिद्धान्तिनोऽपि तद्वत्स्यादिति सकलस्य गवामयनस्य नवधा विभागान्मध्यम-भागान्तर्गते त्रयस्त्रिंशेऽहनि शुक्राग्रता स्यादित्यनुपपन्नमाग्रयणाग्रतादर्शनं स्यादिति । यद्यपि केनचिदुच्यते—नात्रावृत्तिवचनेन *( प्रातिलोम्यं विधीयते, किन्त्वभ्यासमात्रम् । प्रत्यवरोहवचनेन तु )* प्रातिलोम्यं "जगन्ति वै छन्दांसि प्रत्यवरोहन्त्याग्रयणं ग्रहा बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमा"[२] इति वचनं किलेदं प्रत्यवरोहस्य । प्रत्यवरोहश्चान्त्यादारभ्यानुष्ठानम् । पक्षोऽभिप्रायश्च किलेदं वचनम् । न च पूर्वपक्षिणः पूर्वस्मिन् पक्षसि आग्रयणाग्रतान्त्यभूता, त्रिवृतं आरभ्य गणनात् । ततश्चाग्रयणं ग्रहाः प्रत्यवरोहन्तीति वचनमप्यसम्भवदर्थं न प्रातिलोम्यमीष्टे विधातुम् । असति च प्रातिलोम्ये त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रता स्यात् । सिद्धान्ते त्वाग्रयणाग्रत्व स्यान्त्यत्वात् प्रत्यवरोहवचनमात्मानं लभत इति सिद्ध्यति प्रातिलोम्यमिति । तदपि दशरात्रप्रवृत्त्यैव निरस्तम् । तदाहि सिद्धान्तेऽपि नाग्रयणाग्रतान्त्यभूता ।

---

(क) इत आरभ्य शास्त्रदीपिकायां यदुक्तं—अन्यानि दूषणानि तन्त्ररत्न एव दर्शितानि इति नेह प्रपञ्च्यतेऽन्ते इति तस्योपक्रमो दोषप्रदर्शनस्य ।

१. तदुपपद्यते. क.

( ) क पुस्तकेऽत्र ग्रन्थपातः.

** कपुस्तकेऽत्र ग्रन्थपातः.

२. इति किलेदं. क.

किन्त्वैन्द्रवायवाग्रता। तत्र तुल्यं प्रत्यवरोहवचनस्यानर्थक्यम्। [1]अपि च नानेन वचनेन[2] पक्षोऽन्त्यादारभ्य प्रत्यवरोहो विधीयते। नहि पूर्वस्मिन् पक्षसि अन्त्यो यागो बृहत्सामा, नापि त्रयस्त्रिंशस्तोमकः। स्वरसामा हि स सप्तदशस्तोमश्च। "उक्थ्या एव सप्तदशस्वरसामानः कार्याः" इति वचनात्। तथा भाष्यकारेणापि "स्वरसामैककपालामिक्षम्" इत्यत्र दर्शितम्। तत्र कथं बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमा इत्यनेन [3]वचनेन पक्षोन्त्यादारभ्य प्रत्यवरोहो[4] विधीयते। तस्माद्यद्यपीदं वचनं स्यात्, तथापि न पक्षोऽभिप्रायं बृहदादीनां पक्षोऽन्त्यत्वाभावात् आनर्थक्यापत्तेः। तस्माद् गणाभिप्रायं व्याख्येयम्। ये गणाः पूर्वस्मिन् पक्षसि कयाचित्परिपाट्या व्यवस्थिताः, तेषां स्वीयात् स्वीयादन्त्यादारभ्याऽनुष्ठानमनेन वचनेनोच्यते। छन्दोगणो हि जगत्यन्तः। अनीकगणश्चाग्रयणान्तः। पृष्ठगणश्च बृहदन्तः। स्तोमगणश्च त्रयस्त्रिंशान्तः। तदभिप्रायमिदं वचनं जगती वै छन्दांसीत्यादि[5] न पक्षोऽभिप्रायम्। अपि चैवंवादिना लिङ्गस्वरूपमेव भाष्योक्तमपह्नुतम्। इदमेव हि भाष्यकारेण त्रयस्त्रिंशेऽहनि आग्रयणाग्रतादर्शनत्वेनोदाहृतम्। तद्यदीदं वचनं किमपरं लिङ्गं यत्समर्थनाय व्याख्यातृभिः प्रयस्यते। तस्मात् 'प्रत्यवरोहिणो मासा भवन्ति आवृत्तं पक्ष उपयन्तीति उत्तरे पक्षस्यावृत्ता गणा' इत्यादिभिः प्रातिलोम्यस्य विधानम्, इदं वचनमनुवादमात्रं पृष्ठ्यषडहाभिप्रायञ्च। पृष्ठ्ये हि[6] षडहे प्रतिलोममनुष्ठीयमाने त्रयस्त्रिंशस्य प्रथमानुष्ठानं भवति। तत्र प्राप्तमिदम्, त्रयस्त्रिंशस्तोमाः प्रत्यवरोहन्त्याग्रयणं ग्रहा इत्येवमनुवादोऽयम्। अन्यथा लिङ्गमेव न स्यादित्यलमनेन। प्रकृतमनुसरामः—तदेवमुभयोः पक्षयोस्तुल्यत्वा-

---

१. अपि चानेन ख.

२,३. वचनेन नास्ति क.

४. प्रत्यवरोहणं क.

५. आदि नास्ति क.

६. हि नास्ति क.

दनुपपन्नं लिङ्गम् । अपि च लिङ्गमिदं विपरीतम् । [१]तथा प्रातिलोम्यं तावद्वाचनिकं द्वयोरपि तुल्यम् । दशरात्रस्य च प्रवृत्तिः । तत्र सिद्धान्ते पूर्वस्मिन् पक्षसि अन्त्यभाग ऐन्द्रवायवाग्रत्वमुत्तरस्मिंस्तु[२] पक्षसि प्रातिलोम्यात्तदेवाद्ये भागे । [३]अतस्तदन्तर्गते त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रता स्यात् । पूर्वपक्षे तु दशमस्याह्न ऐन्द्रवायवाग्रत्वादुत्तरस्मिन्पक्षसि प्रातिलोम्यादाद्यमहरैन्द्रवायवाग्रं द्वितीयमाग्रयणाग्रं तृतीयं शुक्राग्रं चतुर्थमैन्द्रवायवाग्रं पञ्चमं त्रयस्त्रिंशमहराग्रयणाग्रं भवतीति वैपरीत्यम् । इतश्च वैपरीत्यं पूर्वपक्षे हि पूर्वस्मिन्पक्षसि नवसु नवस्वहःसु [४]समाप्य समाप्य प्रवर्तमाना त्र्यनीका युक्तं यदुत्तरत्र प्रातिलोम्यं लभते । सिद्धान्ते तु यज्ञभागधर्मोऽयमिति यज्ञ एव नवधा विभजनीयः, न केवलं पूर्वः पक्षः । नचावृत्तिवचनबलादेव[५] पूर्वस्मिन् पक्षसि समाप्य पुनः करणं युक्तम् । आवृत्तिवचनं ( हि यत् पूर्वस्मिन् पक्षसि समाप्तं कृतं ) तस्योत्तरत्र [६]प्रातिलोम्यं विधत्ते, ( प्रातिलोम्यविधिपरमभ्यासविधिपरमपि यत् पूर्वत्र कृतं तस्योत्तरत्र पुनः करणं विधत्ते ) न तु यत् [७]सर्वयज्ञविषयतया सकृत् [८]समाप्तं तस्याप्राप्तमेव [९]पूर्वत्र समापनं पुनः कारणञ्चोत्तरत्र विधातुमुत्सहते । इयन्तु सर्वयज्ञविषयेति,

---

१. तथाहि ख.

२. उत्तरस्मिंस्तदेवाद्ये भागे क.

३. अतः नास्ति क.

४. समाप्य नास्ति क.

५. वचन नास्ति क.

६. प्रातिलोम्यं विधत्ते इति कपुस्तकपाठः

७. पूर्वयज्ञ क.

८. प्राप्तं ख.

९. पूर्वत्र नास्ति क.

( ) अयं भागः कपुस्तके खण्डितः

( ) कपुस्तकेऽयं भागो नास्ति

नास्याः प्रातिलोम्यं, न पुनः करणञ्च[१]। अपि च पूर्वपक्षे [२]यज्ञदेशविशेषमतन्त्री-कृत्याहरपूर्वाङ्गं ,त्र्यनीका। तेन यस्मिन् द्वादशाहिकेऽह्नि त्र्यनीका कृता तद्वि-कारेण गावामायनिके यत्किञ्चित्प्रदेशावस्थितेऽपि सैव स्यात्। ततश्च पार्ष्ठिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रता द्वादशाहे कृतेतीहापि त्रयस्त्रिंशेऽहनि यत्र क्वचिदवस्थिते सैव स्यादिति।

एवं भाष्यमाक्षिप्य स्वयमिदानीमधिकरणं लिङ्गञ्च समर्थयते। **अत्रोच्य-ते—यदि चोदकेनेह त्र्यनीका प्राप्येत तथासत्येते दोषा भवेयुः। एषा तु गवामयने प्रत्यक्षेणैव वाक्येन विधीयते** "ऐन्द्रवायवाग्रं प्रथम-महरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथशुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्र-मथशुक्राग्रमथाग्रयणा ( ग्रम्" इति। तत्राहर्गणस्य विवक्षितत्वं मत्वा पूर्वः पक्षः। सिद्धान्तस्तु यत्प्रथममहरिति विशिष्टानुवादे वाक्यभेदः। तेनाहर्ग्रहणं ) प्रथमग्रहणं वात्रोद्देशकम्। तत्र यदहरित्युद्देशे प्रथमग्रहणमत्यन्तानर्थकम्। अथेत्यादिचानर्थकं स्यात्, अहर्मात्रोद्देशात्। तस्मादव्यवहितसम्बन्धबला-द्यत्प्रथमं तदैन्द्रवायवाग्रमिति विधीयते। अहर्ग्रहणन्तु तत्समुदायानुवादतया वर्तते। फलवत्त्वाच्च परमापूर्वस्य तद्भागप्रयुक्तोऽयं धर्मः। [३]न ह्यपूर्वप्रयुक्तः नवानां चाग्रतानां विधानान्नवधाविभागो भवति। तेन दशधा विभागो नामधेयातिदेशाच्चाग्रतान्तरसम्बन्धप्रसङ्गश्च[४] परिहृतः। यत्तु कृत्स्नं गवाम-यनमधिकृत्य[५] गणना स्यादित्युक्तं तत्राह—**गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्नेव पक्षसि निविशन्ते, न कृत्स्ने [६]गवामयने।**

---

१. च नास्ति ख.

२. विशेषणं क.

( ) अयं कपुस्तके खण्डितः

३. न ह्यपूर्वप्रयुक्तः नास्ति ख.

४. प्रसङ्गश्च नास्ति क.

५. गणनेत्युक्तम् क.

६. गवामयने नास्ति क.

यत्तु पूर्वपक्षवादिनोऽप्येवमेव स्यादित्युक्तं तत्राह—**असम्भवाच्च कृत्स्ने गवामयने भवेयुः** स्थाल्यामिव सक्तू ( नि न्? ) समाप्येरन्। तेन कृत्स्ने गवामयनेऽवान्तरप्रकरणं बाधित्वा प्राप्नुयुः। संभवति चात्र मत्पक्षे पूर्वस्मिन्नेव पक्षसि अवान्तरप्रकरणेन त्र्यनीकाया निवेशः। पूर्वपक्ष-वादिनस्तु दण्डकलितवदावृत्तिः पूर्वस्मिन्पक्षसि न समाप्यते। तस्य ह्याद्यमहर्द्वयं वर्जयित्वा त्रिवृत्त आरभ्य गणना प्रवर्तते। कस्मात्? आद्ययोः प्रायणीयचतुर्विंशयोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात्। आदौ चारभमाणस्य द्वितीयेऽहनि शुक्राग्रता स्यात्। तस्याश्च प्रत्यक्षेण त्वैन्द्रवायवाग्रत्वेन विरोधः स्यात्।

ननु शुक्राग्रतापि प्रत्यक्षैव, त्र्यनीकाया [१]अत्रैवोपदिष्टत्वात्। उच्यते—सामान्येन शुक्राग्रता विहिता। अथ शुक्राग्रमित्यस्य द्वितीयायामप्यवृत्तौ सावकाशत्वात्। विशेषेण[२] स्वशब्देनैवैन्द्रवायवाग्रता विहिता। सामा-न्याच्च विशेषो बलवान्। तस्मात्तृतीयादारभ्य तस्य गणना। तेन पूर्वस्मिन् पक्षसि न समाप्यते, किन्तु विषुवन्तमुत्तरे त्र पक्षस्याद्यमहर्व्याप्नोति। तेन पूर्वेण पक्षसावरोद्धुमशक्या त्र्यनीका लिङ्गेनावान्तरप्रकरणं बाधित्वा महाप्रकरणेन कृत्स्ने गवामयने निविशेत। यच्च पूर्वस्मिन् पक्षसि विहितं तस्य [३]प्रातिलोम्यात्पर्यावृत्तिरुत्तरे पक्षसि विधीयते। उत्तरे पक्षस्येत एव गणा अवर्तेरन्निति। न चैवं त्र्यनीकेति नास्याः पर्यावृत्तिः यथास्थितैवासावाद्य-महर्द्वयं वर्जयित्वान्तं यावत्प्रवर्तते। पर्यावृत्तिवचनन्तु स्तोमादिविषयमेव स्यात्। किञ्च यत्पूर्वपक्षो विषयं तस्योत्तरत्रावृत्तिः। त्र्यनीका तु पूर्वोत्तरपक्षसोर्व्यासक्ता, न पूर्वपक्षो विषयतया शक्या वक्तुम्। अतो नास्याः प्रातिलोम्यम्। आनुलोम्ये च सति त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रता प्रसज्यत इत्युक्तम्। सिद्धान्ते त्वबि-रोधात् प्रथमादेवाह्नः प्रायणीयादारभ्य गणना घटते। अतश्च पूर्वस्मिन्

---

१. तत्रैव क.

२. विशेषेणैव क.

३. प्रातिलोम्याख्यावृत्तिः ख.

पक्षसि सम्भवन्ती त्र्यनीका तत्रैवावान्तरप्रकरणेन निविशते, उत्तरस्मिन् पक्षसि पर्यावृत्तिं लभते। ततश्चाद्येषु विंशत्यहःस्वाग्रयणता भवति। तदन्तर्गश्च त्रयस्त्रिंशमहरिति तत्राप्याग्रयणाग्रता भवतीत्युपपन्नं लिङ्गम्। इदञ्चोत्तरं विभवादुक्तम्, यद्यपि सिद्धान्तेऽप्याद्यमहर्द्वयं [१]वर्जयित्वेयं निविशते, तथापि पूर्वपक्षस्येवावान्तरप्रकरणेन सम्भवति निवेशः। न ह्यवश्यं भागसाम्येन भवितव्यम्, अन्तिमो भागोऽष्टादशाहानि भविष्यन्ति। तस्मादनवद्यम्। ननु त्र्यनीकाया भागधर्मत्वादाद्ययोरप्यह्नोरैन्द्रवायवाग्रता सिद्धेति विशेषविधानमनर्थकम्। उच्यते—इयं परमापूर्वप्रयुक्तेत्युक्तम्। तेनावान्तरापूर्वाङ्गत्वसिद्ध्यर्थं पुनर्विधानम्। तेन तद्विकारेष्वैन्द्रवायवाग्रता सिद्धा भवति। विनापि गवामयनधर्मातिदेशेनेति नानर्थक्यम्। अत्र चोद्यते—ज्योतिराद्य उत्पद्यमाना एव विशेषनामधेयेन धर्मान् गृह्णन्त एवोत्पद्यन्ते। यथा कुण्डपायिनामयनाग्निहोत्रम्। त्र्यनीका त्वत्र[२] सञ्जातधर्मत्वेन प्राप्नोति। सा च पश्चात्कालीनत्वात्[३] दुर्बलोत्पन्नसंयोगित्वेन। उत्पन्नसंयोगित्वेन पश्चात्कालीनत्वादित्यन्वयः। तेन नामधेयात्त्रयस्त्रिंशेऽहनि पूर्वपक्षवादिनोऽप्याग्रयणाग्रता लभ्यत इति। उच्यते—अत्र पौर्वापर्यबाधो भवति। यथा विकृतौ दक्षिणाम्नानं चोदकेन प्राप्तं प्रकृतं बाधित्वा निविशते। कस्माद्विरोधात्। प्राप्ते हि कस्मिंश्चिदर्थे विधीयमानं सञ्जातविरोधित्वात्तद्बाधेनैव निविशते, एवमिहापि त्र्यनीका नामधेयप्राप्तं बाधित्वैव निविशते, यथाच्छेदे पूर्वं नैमित्तिकमुत्तरेण नैमित्तिकेन विरोधे सति बाध्यते तथेहापि। अथवा नास्याः पश्चात्कालीनत्वम्। यदा हि यागः फले चोदितो भवति। तदैव धर्मानाकांक्षति नोत्पत्तिसमये। नन्वेवं चोदकान्नामधेयस्य[४] बलीयस्त्वं न स्यात् अत आह—एतस्यामेव लब्धफलत्वेन धर्माकाङ्क्षावस्थायां किं चोदकेन धर्मा उत नामधेयेनेति चिन्तायां प्रत्यक्षत्वेन

---

१. वर्जयित्वा निविशते ख.

२. अत्र नास्ति सञ्जातधर्मत्वेन पश्चात्कालीनत्वात् क.

३. दुर्बलोत्पन्नसंयोगित्वेन प्राप्नोति क.

४. नामधेयबलीयस्त्वं क.

नामधेयेन धर्मप्राप्तिर्भवति। कथं तर्हि त्र्यनीकायास्ततः प्राबल्यमित्याह—तच्च नामधेयं लक्षणया धर्मप्राप्तिं करोति त्र्यनीकान्तु गृह्णन् न लक्षणया-ग्रयणाग्रताख्यधर्मप्राप्तिं करोति। किन्तु उपदेशेनैव गृह्णाति। अतिदेशा-च्चोपदेशो बलवान्, श्रौतत्वात्। एतच्चोत्तरं विभवादुक्तम्। उत्पद्यमानाना-मेव ज्योतिरादीनां धर्माकाङ्क्षासद्भावः सप्तमान्त्ये वर्णितः। तेन प्राप्तबाध एवासौ। सर्वत्र हि सामान्यशास्त्रस्येव विशेषशास्त्रेणातिदिशस्याप्युपदेशेन प्राप्तस्यैव बाधः। प्राप्तिश्च तन्मात्रालोचनया, न तु पारमार्थिकीति नानुपपन्नो बाधः। तस्मात्पूर्व एव परिहार इति॥

[ २६—व्यूढात्मकद्वादशाहे मन्त्रणामेव छन्दोव्यतिक्रमाधिकरणम्। ]

**व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचन-मूहवत्स्यात् ॥८८॥ सि०**

छन्दोव्यतिक्रमात्।

गायत्रादित्वमर्थानामपि श्रूयत इति तेषामपि व्यतिक्रमं मन्यन्ते। सिद्धान्तस्तु अर्थानां छन्दः सम्बन्धो न पारमर्थिकः, किन्त्वर्थवादमात्रं गुणवृत्त्या, न चेह गौणग्रहणे प्रमाणमस्ति मुख्यानामेव छन्दसां व्यतिक्रमविधा-नोपपत्तेः। कः पुनर्व्यतिक्रमः? परस्पर [१]प्रदेशापत्तिः। गायत्रं हि छन्दः प्रातस्सवनिकैर्मन्त्रैर्वहिष्पवमानसम्बन्धित्वेन प्रकाशितः 'श्येनोऽसि गायत्रछन्दाः' इति। तत्तत उद्धृत्य त्रिष्टुप्स्थाने माध्यन्दिने सवने "सुपर्णोऽसि त्रिष्टुप्छन्दा" इत्यनेन मन्त्रेण सुपर्णोऽसि गायत्रछन्दा इत्येवमूहितेन प्रकाश्यते। एवं सर्वत्र। तस्माद्गायत्रछन्दा इत्येवमादीनां यथा प्राप्तं स्थानं बाध्यते।

अच्छन्दस्त्वेन भक्षादेः प्राप्तं स्थानं न बाध्यते।
गायत्रत्रैष्टुभादीनां शब्दानां स्थानबाधनम्॥

इति पार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमाध्यायस्य पञ्चमः पादः।

---

१. देशापत्तिः क.

[ अथ पार्थसारथिमिश्रविरचिते तन्त्ररत्ने दशमाध्यायस्य षष्ठः पादः । ]

[ १—यज्ञे रथन्तरादिसाम्नां तृचे गानाधिकरणम् । ]

**एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ पू०**

तृचोत्पत्तीन्यपि सामानि सन्त्येवेति तदभिप्रायेणानुवादोऽयम्—"एकं साम तृचे क्रियते" इति । वर्तमानापदेशसारूप्यात्—"अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति" इति लिङ्गम् । प्राप्त्यभावादसाधकमेवेत्येकस्यामेव रथन्तरादि गेयं स्वाध्यायप्राप्त्यबाधाय । उच्यते—प्रथमादिव्यपदेशस्या[न ?] न्यथासिद्धत्वेन- र्गन्तराक्षेपसामर्थ्यात् । 'तृचे क्रियत' इत्यस्यापि 'ऋक् सामो वा च' इत्यर्थवादा- विर्भावितविधिशक्तेरानर्थक्यानुषङ्गानुवादमात्रत्वानङ्गीकरणात् सर्वमेव स्तो- त्रीयं साम तृचे गेयम् । अतः स्वाध्यायप्राप्तमेकत्वं बाध्यते ॥१॥

[ २—वीक्षणे स्वर्दृक्पाठकालविधानाधिकरणम् । ]

**स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥२॥ सि०**

स्वर्दृक्शब्दः पक्षद्वयेऽपि नार्थपरः, किन्तु स्वरूपपरः । तेन तु[१] काललक्षणा न नाय्या । तस्मात्स्वरूपस्यैवेक्षतिनासम्बन्धः, वाक्यात् । स चाङ्गाङ्गिभावः । तत्र यदि वा स्वर्दृक्छब्दाङ्गत्वेन वीक्षणं विधीयते, स्वर्दृक्छब्दं प्रति वीक्षणं कुर्यात्, वीक्षमाणः स्वर्दृक्छब्दं[२] समुच्चारयेदिति । यदि वा स्वर्दृक्छब्दो वीक्षणस्याङ्गं स्वर्दृशं प्रति वीक्षेत—तेन प्रकाशितं वीक्षणं कुर्यादित्यर्थः । शक्नोति ह्यसौ वीक्षणं प्रकाशयितुम्, भावे ह्ययं क्विप्प्रत्ययः सम्पदादिवद्भ- विष्यति[३] तेन लिङ्गादप्यङ्गाङ्गिभाव इति । अत्रोच्यते—रथन्तरे प्रस्तूयमाने सम्मीलयेत्" इत्यनेनावधिप्रतिपादकतयैकवाक्यत्वे सम्भवति । न वाक्यभेदो युक्तः ।[४] सम्भवति हि संमीलयेदास्वर्दृक् शब्दादित्येवमेकवाक्यता । तस्मिंश्चावधौ सति रागप्राप्तमेवेक्षणमनूद्यते, न विधीयते । प्रतिशब्दश्च श्रुत्यै-

---

१. काललक्षणाख्याख्या क. २. शब्दमुच्चारयेत् क.

३. भविष्यतीति क. ४. सम्भवति हि नास्ति क.

वेक्षणस्य लक्षणतामाचष्टे[1]। सा च लिङ्गवाक्याभ्यां बलीयसीति न लक्षणादोषः। न चाङ्गाङ्गिभावो युक्तः। तथाहि—न तावत् स्वर्दृक्छब्दस्य वीक्षणमङ्गम्, अदृष्टार्थत्वापत्तेः। नापि स्वर्दृक्छब्दो वीक्षणाङ्गम्, अदृष्टार्थत्वादेव। न च कर्तृवचनः स्वर्दृक्शब्द ईक्षणं शक्नोति प्रकाशयितुम्। न च सम्पदादिवद् भवितुमर्हति, तेषां प्रयोगस्य [3]रूढत्वात्। अस्य च तदसिद्धेः। प्रत्युतेशानसामानाधिकरण्यात् कर्तृवचनतैव निश्चीयते। न च स्तुत्यर्थतया कृतार्थस्यान्यत्र शेषभावो युक्तः। कथमस्य स्तुत्यर्थता? सामविनियोगेनार्थादृचोपि विनियोगात् तदन्तर्गतत्वाच्च स्वर्दृक्छब्दस्य। किमर्थं पुनर्भाष्यकारेण क्रमप्रकरणाभ्यामृच एव विनियोगोऽस्तीति उत्तरमनुक्त्वा सामविनियोगो वर्ण्यते। उच्यते—भवति च[4] केषाञ्चिन्मन्दधियामियमाशङ्का— 'रथन्तरं पृष्ठं भवति।" इत्युत्पत्तिसमय एव वाक्येन साम्नः स्तुत्यर्थतया विनियोगान्न क्रमप्रकरणाभ्यामृचां पश्चाद्विनियोगः सम्भवतीति। तन्निवृत्त्यर्थमिदमुक्तं—सामविधिरेवर्चामपि विनियोगमनुमन्यत इति। तस्मात्कालार्थः संयोग इति वाक्यलिङ्गप्राप्ताङ्गाङ्गिभावबाधात्सङ्गतिः ॥ ३ ॥

[३—गावामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोः प्रत्यहमेकैकस्यैवानुष्ठानाधिकरणम्।]

**पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥४॥ पू०**

किं द्वन्द्वगर्भो बहुव्रीहिरयमथवानेकपदविशिष्टो बहुव्रीहिरिति संशयः। तत्र द्वन्द्वगर्भे प्रथमं तावद् बृहच्च रथन्तरञ्चेति द्वन्द्वः पश्चात्त्वन्यपदार्थसम्बन्धः परस्परसंयुक्तयोः, बृहद्रथन्तरे सामनी अस्येति। अनेकपदविशिष्टे तु बहुव्रीहौ सति बृहदस्य रथन्तरमस्य सामेति सर्वाण्येव पदानि अस्य शब्देन सम्बध्यन्ते परस्परनिरपेक्षाणि। तत्र पूर्वः पक्षः—बृहच्छब्द उच्चरितः सम्बन्धिनमपेक्षते सर्वपदानामुच्चारण-

---

१. इति इत्यधिकं क.
२. न हि ख.
३. रुढ़त्वात् ख.
४. च नास्ति क.

मर्थान्तरान्वयलिलक्षयिषया यतः। तथा[१] रथन्तरशब्दोऽपि। [२]तयोश्चानन्तर्येणोच्चरितत्वात् प्रथमं तावदानन्तर्येण द्वन्द्वलक्षणः सम्बन्धो भवति पश्चात्त्वस्यशब्देन सम्बन्धः।[३] वृत्तिपक्षस्याश्रितत्वादिति भाष्ये वृत्तिशब्देन समासं ब्रवीति। बृहद्रथन्तरयोर्हि[४] समासस्तावदुभयवादिसिद्ध इति। ततः किमित्याह—स च प्रागन्यपदार्थसम्बन्धाद्बहिरङ्गाद्भवन् द्वन्द्वसमास एव भवति पश्चादन्यपदार्थसम्बन्धः। ननु कथमुभयवादिसिद्धः समासो यावता विभाषेत्यनेनाधिकारेण वैकल्पिकः समासः स्यात्, न नित्यः। तत्र यदा वाक्यमेवाश्रितं (तदाऽन्यपदार्थसम्बन्ध एव भवति, न तु द्वन्द्वनिमित्तोऽवान्तरसम्बन्ध इतरेतरयोगाख्यः। यदा समास आश्रितस्तदा अवान्तरसम्बन्धो [५]लक्ष्यते।) तत्र वाक्यं समाश्रीयतां समासो वेत्यस्मिन् द्वैते प्रत्येकसाधनत्वप्रापि चोदकसामर्थ्यात् [६]वाक्यमेवाश्रयामो न समासमितीमामाशङ्कां[७] निराकर्तुं वृत्तिपक्षे च समासस्य नित्यत्वादित्यनेन ग्रन्थेन नित्यं समासं प्रतिपादयति भाष्यकारः ईदृशेषु वाक्येषु। कथं नित्यत्वम्? उत्तरम्—एवं ह्याह कात्यायनः "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्" इति। ननु निर्मूलमिदं वचनं नहि केनचिदपि प्रमाणेनावान्तरसमासः शक्योऽवगन्तुम्। सत्यसति च तस्मिन् महासमासान्तर्भूतानां विभक्तिलोपेन रूपसाम्यादित्याशङ्क्योदाहरणमाह—द्वन्द्वे वाक्त्वचप्रियः। तत्पुरुषे पञ्चगवधनो दशगवधन इति। तदिह

---

१. तथा च क.

२. द्वयोः—मु. या, क.

३. वृत्तिपक्षस्य च क.

४. शब्दयोर्हि क.

( ). अयं भागः खण्डितः क.

५. लभ्यते मु. पा.

६. वाक्यमाश्रयामः क.

७. शङ्कां क.

यदि पूर्वं समासो न क्रियेत तथा सत्यप्रयोगः समासान्तस्य प्राप्नोति। अप्रयोगोऽपि कदाचित्स्यादित्यर्थः। ततश्च वाक्त्वक् प्रियः इत्यपि स्यात्। तस्मात्समासस्य नित्यत्वाद् द्वन्द्वभाविनोर्ययोर्द्वन्द्वः सम्भवतीति, तयोर्महावृत्तौ पूर्वपदयोः सतोरवान्तरसमासो द्वन्द्वाख्यो नित्य इति। महावृत्तिपक्षे चावान्तरसमासस्य नित्यत्वादिति भाष्यार्थः। द्वन्द्वे च स्वार्थाभिधानाच्छ्रुत्यनुग्रह इत्यनेन भाष्येण युगपदधिकरणवचनतापहस्तितेति मन्तव्यम्, तस्माच्चोदकप्राप्तप्रत्येकसाधनत्वबाध[१] इति। सिद्धन्तस्तु—उभयथा शब्दोपपत्तौ चोदकानुग्रहात् विधिलाघवाच्चानेकपदबहुव्रीहिरेव युक्तः। अन्यथा तयोः षडहसम्बन्धो मिथश्च साहित्यं विधीयते। नह्यत्र संसवादिवच्चोदकप्राप्तयोर्बृहद्रथन्तरयोः साहित्यमात्रविधानं शक्यम्। नामातिदेशेन रथन्तरबृहद्वैरूपवैराजशाक्वररैवतनां षण्णां यथाक्रमं षट्स्वहःसु प्राप्तेः। तस्माद् बृहद्रथन्तरे एवास्य षडहस्य सामनी, ते च समस्ते, इति अनेकार्थविधानाद् वाक्यभेदः स्यात्। चोदकप्राप्तं च प्रत्येकपृष्ठसाधनत्वं तन्निमित्तं च प्रतिपदादि बाध्येत। तस्मादनेकपदबहुव्रीहिः। न चोत्तरपदे नित्यो द्वन्द्वः, विभाषास्मरणात्पाणिनेः। कात्यायनीयन्तु वचनं प्रसिद्धद्वन्द्वाभिप्रायमिति केचित्। तदयुक्तम्, एवमिह सुतरां द्वन्द्वापत्तिः बृहद्रथन्तरयोः [२]प्रसिद्धतरद्वन्द्वत्वात्। तस्मादिदं वचनं शब्दानुशासनपरत्वात्समासकार्यसमासान्तादिप्राप्त्यर्थम्। न समासार्थम् इतरेतरयोगादिकं नियन्तुमलम्। अर्थस्तु प्रयुक्ताच्छब्दात् यथासामर्थ्यं गम्यते। सत्यपि च द्वन्द्वे षडहाभिप्राय एवेतरेतरयोगो न प्रत्यहम्। यथा देवदत्तो मासं तैलघृताभ्यां भोजयितव्य इति। यद्यपि च केषुचिदहःसु तैलं केषुचिच्च घृतं तथापि न शब्दबाधः। एवमिहापि। तस्माद्विभक्ते सामनी इति ॥४॥

[ ४—प्रायणीयादयनीययोरैकादशिनानां विभज्याधिकरणम्। ]

## समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ पू०

प्रायणीयोदयनीययोः प्रधानत्वेनोद्देश्यत्वादविवक्षितं द्वन्द्वावगतं साहित्यमिति प्रत्येकं कृत्स्नावृत्तिरिति पूर्वः पक्षः ॥६॥

---

१. इति नास्ति क.

२. प्रसिद्धद्वन्द्वत्वात् क.

सिद्धान्तमाह—

**श्रुतितो वा लोकवद्विभागः स्यात् ॥८॥ सि०**

एकादशिनी विहिता वाक्यान्तरेण। तस्मिन्नेकादशिनीप्रकरणे इदं द्वितीयं[१] वाक्यं 'एकादशिनान् प्रायणीयोदयनीयोरालभेरन्' इति। तत्रैकादशिनी प्रकरणादेव लब्धफला केवलमिति कर्तव्यतां कालं[२] देशं चापेक्षते। अपेक्षमाणायाश्च देशविशेषत्वेन प्रायणीयोदयनीयौ विधीयेते, न तूद्दिश्येते। तत्र द्विवचनमितरेयरयोगश्च[३] सर्वं विवक्षितम्, उपादीयमानत्वात्। कथं पुनरुपादेयता नोद्देश्यतेत्याशङ्क्योत्तरभूतोऽत्र भाष्यग्रन्थः। तत्र द्वन्द्वभाविनोः प्राधान्यात्सत्यामप्यपेक्षायां[४] भवति समासः। समासे चेतरेतरयोगात्सहितयोरेवालम्भ इति, तदयुक्तमिव प्रतिभाति; उद्देश्ययोरेव प्राधान्यं न विधीयमानयोः, गुणत्वादितीमामाशङ्कामपनुदन्नाह— प्रायणीयोदयनीयौ विधीयमानौ शब्दवृत्तेन प्रधानभूतौ विधेये, शब्दस्य[५] तात्पर्यात्। शब्दवृत्त्या च प्रधानभूतस्य पदान्तरमपेक्षमाणस्यापि[६] भवति समासः। यथा राजपुरुषो दर्शनीय इत्यत्र। वस्तुतो गुणभूतस्यापि शब्दतः प्राधान्यात् [७]पुरुषशब्दस्य दर्शनीयत्वमपेक्षमाणस्यापि राज्ञा सह समासो भवति। एवं प्रायणीयोदयनीययोरैकादशिनानपेक्षमाणयोरिति[८] भवति विधेयत्वे समासः। यदि तु न विधीयेयातां तथा सति

---

१. वाक्यं नास्ति क.

२. कालञ्च देशञ्चे क, ख.

३. सर्वविवक्षितः ख.

४. सत्यामपेक्षायां क.

५. शब्दस्यातात्पर्यात् क.

६. भवति नास्ति क.

७. पुरुषस्य मु. पु, ख.

८. माणयोरपि विधेयत्वेन क.

[1]शब्दतो गुणभूतौ । शब्दतश्च गुणभूतयोर्वस्तुतश्च प्रधानभूतयोरप्यैकाद-शिनानपेक्षमाणयोः समासो न प्राप्नुयात् यथा ऋद्धस्य राज्ञः पुरुष इत्यत्र वस्तुवृत्त्या प्रधानस्यापि राज्ञः शब्दवृत्त्योपसर्जनत्वाद्वृद्धिमपेक्षमाणस्य न समासः । तस्मात्समासस्याविवक्षितत्वदोषो माभूदिति विधीयेते देशत्वेन प्रायणीयोदयनीयौ । तस्मात्प्रत्येकं कृत्स्नालम्भलाभश्चोदकप्राप्तो बाध्यत इति ॥ ८॥

[ ५—विश्वजिति षाडहिकरथन्तरादिसाम्नां मध्ये वैरूप्यस्यैव होतुः पृष्ठ-स्तोत्रे निवेशाधिकरम् । ]

## सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥ पू०

पृष्ठस्तुतेर्बहुत्वाभावात् तत्साधनभूतानि षाडहिकानि रथन्तरादीनि पृष्ठशब्देन लक्षयित्वा विश्वजिति विहतानि निर्ज्ञातमेव कार्यं पृष्ठस्तुतिं कर्तुमर्हन्तीति सर्वेषा-मेकदेशतेति मन्यते । वचनेनैव तु [2]कार्यान्तरे विनियोगादेकस्यैव वैरूपस्य पृष्ठ-देशता, अन्येषान्तु देशान्तरे निवेशः । ननु कृत्वापि पृष्ठं पुनरन्यत्र वचनतः लाभात् प्रवर्ततां को दोषः ? उच्यते—एकेनैव कार्येण कृतार्थानां न कार्यान्तरं युक्तम् । वचनान्तराण्यपि सर्वपृष्ठविधिविहितानां साम्नां कार्यान्तरं प्रतिपाद-यन्ति अपेक्षितार्थानि भवन्ति । तस्मात् पृष्ठदेशतेतरेषां बाध्यत इति ॥१३॥

[ ६—उक्थ्यादिक्रतौ बहुव्रीहिपदनिविष्टानां वैरूपादिसाम्नां होतुः पृष्ठ एव निवेशाधिकरणम् । ]

## वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥१५॥ पू०

अविशेषात्सर्वाणि सामानि विकृत्य निविशते वैरूपमिति पूर्वः पक्षः । सिद्धान्तस्तु-क्रत्वङ्गतया विहितं साम विशेषाग्रहणे[3] सर्वत्र स्यात् । गृह्यते तु

---

१. शब्दतः नास्ति क.

२. कार्ये नियोगात् क.

३. विशेषाग्रहणेन क.

विशेषः। ईदृशो हि निर्देशः प्रकृतौ रथन्तरसामादेः पृष्ठाभिप्रायो दृष्ट इति। तदेवेह प्रत्यभिज्ञायते, तस्मात्पृष्ठमात्रविकारः, अन्येषु तु चोदको न बाध्यत इति ॥

[ ७—अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगत-स्तोमसात्रबाधकत्वाधिकरणम्। ]

## त्रिवृति [१]सङ्ख्यात्वात्सर्वसंख्याविकारः स्यात् ॥२२॥ पू०

यद्यपि "त्रिवृद्बहिःपवमानम् इत्यत्र वाक्यशेषावगतस्तोत्रियानवक-वचनता" "शास्त्रस्था वा तन्निमित्तत्वात्" इत्यत्र स्थापिता, तथापि "त्रिवृद्ब-वति दर्भमयी भवति" इति वेदे "त्रिवृता ग्रन्थिनैकेन" इति धर्मशास्त्रेषु त्रिवृन्मणिरिति च लोके त्रैगुण्येऽपि प्रयोगात्तस्यापि वाचक एव त्रिवृच्छब्दः। तत्र "त्रिवृदग्निष्टुदग्निष्टोमः" इत्यत्र शास्त्रस्य महाविषयत्वलिप्सया त्रैगुण्य-वाचितामङ्गीकृत्य सर्वसङ्ख्याधिकारं मन्यते। सिद्धान्तस्त्ववयवप्रसिद्ध्यासौ त्रैगुण्ये वर्तते। स्तोत्रियानवकेषु रूढः। रूढिश्च बलीयसी। तस्मात् स्तोमविकार इति ॥२३॥

[ ८—उभयसामके संसवादिक्रतौ बृहद्रथन्तरयोः पृष्ठस्तोत्र एव समुच्चित्य निवेशाधिकरणम्। ]

## उभयसाम्नि विश्वजिद्वद् विभागः स्यात् ॥२४॥ पू०

चोदकाबाधायेहाप्येकेन पृष्ठमितरेण [२]अपरसामकार्यं(क) परिसामकार्याणि सन्ति सामानि द्विविधानि परिसाम स्तोत्रसाम इति। परिच्छिन्नैककर्तृकं परिसाम स्तोत्राङ्गत्वेन विभक्तैरुद्गातृपुरुषैरुच्चार्यमाणं स्तोत्रसाम परिसामय-दीक्षणीयादिषु दृष्टम्। न स्तोत्रे। अत्र च स्तोत्रे विहितत्वात्साम्नः यथा विश्वजिति माध्यन्दिनानां तस्मादनादिषु सामकार्ये इतरेषां विधानं तद्वदेवात्रापि

---

१. संख्यात्वेनेति पाठः

२. परिसाम क, ख.

भाव्यम्। कर्तव्यमिति मन्यते। नात्रान्यतरस्य परिसामकार्ये विनियोगः सम्भवति, प्रमाणाभावात्। विश्वजिति तु प्रत्यक्षं वचनम्। अपि च पृष्ठसाधत्वेन विकल्पेन प्राप्तयोः साहित्यमात्रमिह विधीयते, न स्वरूपम्। येन कार्यान्तराशङ्का स्यात्। तस्मादिह सामस्त्यमिति चोदकबाध इति ॥२४॥

[ ९—वैकल्पिकमध्वशनघृताशनयोर्गवामयने षडाहन्तेऽनुष्ठानाधिकरणम्। ]

**पृष्ठे रसभोजनमावृत्ते संस्थिते। त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥२७॥ पू०**

अनुष्ठानसादेश्यलक्षणात्क्रमात्त्रयस्त्रिंशाङ्गतां मन्यते। अथवा तद्वदिदं[१] कर्तव्यमित्यतिदेशशास्त्राद्यस्तत्रार्थिकः शास्त्रीयश्च प्रकारस्तस्य सर्वस्याविशेषादतिदेशं मन्वानस्त्रयस्त्रिंशानन्तर्यं प्रकृतौ कृतं विकृतावपि कर्तव्यमिति पूर्वपक्षयति। आवृत्त इति प्रातिलोम्यमनुष्ठीयमान इत्यर्थः। सिद्धन्तस्तु चोदनासामान्यात् [२]प्राकृती चोदना विकृतावुपतिष्ठते। सा च स्वविधेयमेवेत्थम्भावमुपस्थापयति, नार्थिकम्। अतः शाब्द एवेत्थम्भावः शास्त्रान्तरे तद्वच्छब्देन विधीयते, न त्वार्थिकः। भाष्ये क्रमेषु पुनः प्रयोगादिकर्मणः स्थाने क्रमेणेति मुद्रितम्। भाष्ये कर्मण इति प्रतीकं ग्रहीतं दृश्यते। क्रमेण इत्यस्य व्याख्यापि न कृता। अतः मुद्रणदोषः प्रतिभाति। कर्मण इत्येव पाठः। न च वाक्येन षडहाङ्गं गम्यमानं क्रमेण त्रयस्त्रिंशाङ्गं [३]भवितुमर्हति। तस्मात् त्रयस्त्रिंशानन्तर्यं बाधित्वा शास्त्रीयं षडहानन्तर्यमेवाङ्गीक्रियत इति ॥२७॥

[ १०—षडहावृत्तौ सर्वषडहान्ते मध्वशनादेः सकृदेवानुष्ठानाधिकरणम्। ]

**अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥२९॥ पू०**

प्रकृतस्यावृत्तशब्दस्य प्रातिलोम्यवचनत्वादिहाभ्यासे विवक्षितेऽनुवृत्त्ययोगा-

---

१. इह क.

२. प्रकृतिचोदना क.

३. भवति ख.

दभ्यासग्रहणं कृतम्। तत्र प्रकरणं बाधित्वा वाक्यसंयोगात् षडहाङ्गमशनम्। न च संस्थासंयोगात् अनंगता शङ्कितव्या, वैमृधस्येव तद्व्यतिरिक्तांगापेक्षयापि संस्थाशब्दोपपत्तेः। इतरथा वैमृधस्यापि प्रकरणेन दर्शपूर्णमासाङ्गता स्यात्। सा च चतुर्थे निरस्ता। किञ्च यद्यपि प्रकरणाद् द्वादशाहङ्गमिदं, तथापि प्रयाजादय इवाग्नेयादीनां प्रत्येकमेव द्वादशानामपि कर्मणामङ्गं स्यात्। ततश्च षडहस्याप्यङ्गमेवेति तदा वृत्तावितराङ्गवदावर्तेत इति। नैतदेवम्। यद्यपि षडहाङ्गमिदं तथापि संस्थानिमित्तम्[1]। न च पुनः क्रियायां संस्थास्ति। पुरुषस्य हि तद्विषयमौदासीन्यं व्यापारान्तरकरणं वा संस्था। न च तदुभयमप्यत्रास्ति। तस्मान्निमित्ताभावादस्यानावृत्तिः[2]। यत्तु भाष्यकारेणाङ्गत्वनिराकरणं कृतं, तदतिशयार्थं, न परमार्थिकमिति नातीव तत्राभिनिवेष्टव्यम्। [3]एतावानत्र समाधिः—मध्वशनं हि यथा च यावत्या च मात्रया भाविन्याः क्रतुप्रयोगसमाप्तेरुपकरोति[4] न त्वतिवृत्तस्य। अतो लिङ्गादसौ प्रयोगाङ्गम्, न तु केवलस्य षडहस्य। वैमृधस्तु वाक्यात्पौर्णमास्यङ्गं समानकर्तृकता च तत्र गम्यते क्त्वाश्रुत्या, न त्विह तथेति वैषम्यमिति ॥२६॥

[ ११—गवामयनेऽहरन्तरव्यवधानेन पृष्ठ्यषडहावृत्त्या मध्वशनादेरप्यावृत्त्यधिकरणम्। ]

## आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥३१॥ सि०

सत्यप्यभिप्लवैर्व्यवधाने पश्चादपि तावत्करिष्यत्येव पृष्ठ्यम्, अतो नोपरमः शक्यते वक्तुमित्युत्तमपृष्ठ्यान्ते मध्वशनं मन्यते। सिद्धान्तस्तु—तदुपरमः कर्मान्तरकरणञ्च प्रत्यक्षम्। कालान्तरप्रयोगस्तु संवत्सरान्तरप्रयोगवन्न पूर्वस्य संस्थां वारयति। तस्मात् कर्मान्तरव्यवाये मध्वशनं निमित्तसद्भावान्न बाधितव्यमिति ॥३१॥

---

१. निमित्तमिदं क.

२. अस्य नावृत्तिः क.

३. एतावान्वा समाधिः क.

४. न त्वावृत्तस्य षडहस्य क.

[ १२—सत्रात्मकद्वादशाहेऽपि सत्रिभिर्मधुभक्षणकर्तव्यताधिकरणम् । ]

## मधु न दीक्षिता ब्रह्मचारित्वात् ॥३२॥ पू०

प्रतिषेधाविरोधायाहीने मध्वशनं, न सत्र इत्याशङ्क्य क्रत्वर्थपुरुषार्थत्वेन भिन्नविषययोरविरोधात्सत्रे मध्वशनं भवत्येवेति सिद्धान्तितम् । तत्र चोदयति ब्रह्मचर्यं दीक्षितस्य क्रत्वर्थतया ज्योतिष्टोमे विहितमित्यतिदिष्टं क्रत्वर्थमेव । ब्रह्मचर्यशब्दश्च मधुमांशवर्जनादिव्रतसमुदायवचनः । तेन [१]प्रतिषेधोऽपि क्रत्वर्थ एवेति कथं विषयभेद इति । अत्रोच्यते—अयमभिप्रायो भाष्यकारस्य विविधोऽयं ब्रह्मचर्यशब्दः, कश्चिद्वेदाध्ययनस्य वाचकः ब्रह्मचर्यं ब्रह्मचरणमिति, कश्चित्तु मैथुनसंयमवाची । [२]आद्दतो ब्रह्मचारीत्यादिषु सांविज्ञापिकः । तत्र दीक्षितस्य क्रत्वर्थतया ( मैथुनवर्जनमेव विहितम् । ब्रह्मचारिणान्तु मधुमांसवर्जनादि पुरुषार्थतया विहितं सत्रिणामपि प्राप्नोति । मध्वशनं क्रत्वर्थतया ) विहितमिति युक्तो विषयभेदः । यद्यपि क्रत्वर्थतया मधुवर्जनमतिदिश्येत तथाप्यतिदेशस्य विषयान्तरेऽपि सावकाशस्यानुमानिकस्य च प्रत्यक्षेणाशनविधानाद्युक्तो बाध इति ।

[ १३—मानमसंज्ञकस्य ग्रहस्य दशमाहाङ्गत्वाधिकरणम् । ]

## मानमहरन्तरं स्याद् भेदव्यपदेशात् ॥ ३४ ॥

विकृतिषु दशरात्रे प्रवतमानेऽहरन्तरत्वे मानसस्या प्रवृत्तिः दशमाहाङ्गत्वे तु प्रवृत्तिरिति सङ्गतिः । व्यपदेशभेदादिजनितभ्रान्तिनिवृत्त्यर्थमधिकरणम सुगममिति ॥ ३४ ॥

[ १४—सत्रस्य बहुकर्तृकत्वाधिकरणम् । ]

## सत्रमेकः प्रकृतिवत् ॥ ४५ ॥

फलाय विहितं कर्म बहवोऽपि तदर्थिनः कुर्वन्तीति प्रचयशिष्टबहुत्वानु-

---

१. प्रतीयते एषोऽपि क. २. आद्यतो ख.

() कपुस्तकेऽयं भागः खण्डितः

वादो[1] बहुवचनम्। कर्ममात्रन्तु फलार्थं विधीयते, लाघवात्। अथवैकस्मिन्नपि प्रयोगे चोदकप्राप्तर्त्विग् बहुत्वाभिप्रायमाख्यातस्थं बहुवचनम्, कामपदस्थं तु बहुवचनमविवक्षितमेवोद्देश्यगतत्वादिति पूर्वः पक्षः। सिद्धान्तस्तु—सत्यं कामपदस्थं बहुत्वमविवक्षितम्। आख्यातगतन्तु विवक्षितमेवेत्युक्तम्। न च तदृत्विगभिप्रायं सम्भवति, व्यापारभेदादृत्विग्यजमानानाम्। प्रयोगवाक्ये हि फलार्थो यजमानव्यापारो विधिविषयभूतः शब्देनोच्यते नर्त्विजः। तस्यैव बहुकर्तृताङ्गम्। अतः स्वामिनामेव बहुत्वेन भवितव्यम्। न च प्रचयशिष्टानुवादता युक्ताङ्गीकर्तुम्, अविवक्षितत्वस्य विना कारणेनाङ्गीकरणात्। तस्मात्सत्रं बहवः प्रयुञ्जीरन्संहत्येति प्राकृतैकत्वबाध इति ॥ ४५ ॥

[ १५—सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम्। ]

## अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ पू०

ऋत्विक् शब्दस्यर्तुयजनकर्तृवचनत्वात् यजनमानेष्वपि मुख्यैव प्रवृत्तिरुपपद्यते। तेन 'ये यजमानास्त ऋत्विजः' इति तावन्न लक्षणया ऋत्विक्-कार्ये यजमानान् विधातुमर्हति, मुख्यरूपेणैव तु स्वार्थमनुवदति। येऽप्येते 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिवाक्येऽध्वर्य्वादिशब्दास्तेऽपि कथञ्चिद् यजमानानामेव गृहपतिशब्दवद् विनापि तत्कार्यकरत्वेन वाचकाः। ऋत्विजामेव वा दीक्षासंस्कारोऽप्राकृतो विधीयत इति न चोदकप्राप्तमन्यकर्तृकत्वं वरणादि च बाधितुं युक्तम्। उच्यते—न तावदध्वर्य्वादिशब्दाः कथञ्चिदपि तत्कार्यकारितामन्तरेण वर्तितुमर्हन्ति। आध्वर्यवादिकरणयोग्यतानिमित्ता ह्येते। गृहपतिशब्दस्त्ववयवप्रसिद्ध्या स्वामिन्येव शक्नोति वर्तितुम्। न च प्राकृतानामेवाध्वर्य्वादीनां दीक्षासंस्कारविधिरप्राकृतकार्यदीक्षाविधानत्य[2] क्रममात्रपरत्वे सम्भवत्यनाश्रयणात्। न च 'ये यजमानास्त ऋत्विजः' इत्यस्यानर्थक्यमङ्गीकर्तव्यं सम्भवत्यर्थवत्त्वे। तस्मात्प्राकृताध्वर्य्वाद्यृत्विक्कार्ये यजमानविधानात् प्राकृतर्त्विङ्निवृत्तिरिति ॥ ५१ ॥

---

१. अनुवादोऽयं, ख. २. विधानकार्यस्य. क.

[ १६—सत्राहीनयोर्लक्षणाधिकरणम् । ]

**द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ६० ॥**

**यजति चोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥ ६१ ॥**

द्वादशाहप्रसङ्गात्तद्गतसत्राहीनविधाद्वयलक्षणार्थं सूत्रद्वयम् ॥ ६१ ॥

[ १७—पौण्डरीकेऽयुताश्वसहस्रयोः सकृद्दानाधिकरणम् । ]

**अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदः स्यात् ॥ ६२ ॥ पू०**

प्रतिकर्मावसायिभिश्चोदकैः [१]द्वादशाहे प्रत्यहं द्वादशशतं प्राप्तम्, तथैव चानुष्ठितम् । इहापि प्रत्यहं प्राप्तस्य द्वादशशतस्य स्थाने सङ्ख्यासामान्यादश्वसहस्रैकादशसहस्रदशकं निवेष्टुमर्हति । प्रधानाङ्गञ्च दक्षिणा, प्रधानभेदेऽङ्गान्तरवत् प्रतिप्रधानमावर्तते । सुत्याकालत्वाच्च सवनीयादिवत् गृह्यमाणविशेषत्वात् न तन्त्रता सम्भवति । तस्मात् प्रत्यहमयुतमश्वसहस्रञ्च दातव्यमिति । नैतदेवम्, सहायोपादानस्यायमुपायनियमो यद्दक्षिणादानम् । चिकीर्षितार्थञ्च सहायोपादानम् । फलवच्च चिकीर्षितम् । समस्ते चानुष्ठिते फलसिद्धिर्नावयवे । तस्मादङ्गभूतापि दक्षिणा तन्त्रेणैकप्रयोगान्तःपातिनां सर्वेषामर्थेनैका । यद्यपि प्रतिकर्मावसायिभिश्चोदकैः प्रत्येकं द्वादशाहे दक्षिणा प्राप्ता, तथापि प्रकृतित एवासौ प्रयोगाङ्गतया प्राप्तेति प्रयोगस्यैकत्वात्तन्त्रेणैकमेव द्वादशशतं दातव्यं प्राप्तम् । एवं प्राप्ते 'अन्वहं द्वादशशतं ददाति' इति वचनान्तरं भवति । तेनापि न दक्षिणाभेदः, किन्तु प्रत्यहं द्वादशशते दीयमाने यावती भवति दक्षिणा तावत्येकैव द्वादशाहङ्गम् । प्रत्यहन्तु विभज्य दानमात्रम् वचनात् दक्षिणासंस्कार्थम् । तस्मादिहाप्ययुतमश्वसहस्रं च तत्कार्ये विधीयमानं तस्याः सर्वस्या निवर्तकमित्येकमेवायुतमश्वसहस्रं च सर्वेषां प्रत्येकमङ्गमपि तन्त्रेण दातव्यम् । (सुत्याकालमपि दक्षिणादानं सर्वप्रयोगसाधारणानतिकार्यत्वात्साधारणमेव युक्तमिति ) ॥ ६२ ॥

---

१. द्वादशाहे. नास्ति. क. ( ) कपुस्तके भागोऽयं खण्डितः ।

[ १८—पौण्डरीके प्रत्यहं विभज्य दक्षिणानयनाधिकरणम् । ]

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत्त्वासां सर्वविशेषत्वात् ॥ ६९ ॥**

दक्षिणायाः संस्कारार्थत्वात् सकृदेव यत्र क्वचन माध्यन्दिने नयनं कर्तव्यम् । अथवा प्रकृतौ स्वीये स्वीये माध्यन्दिने नीयमाना दक्षिणा यागस्योपकृतवती इह चैतावती दक्षिणा सर्वेषां शेषभूता [१]सा सर्वेषामुपकर्तुं सर्वेषु माध्यन्दिनेषु नेतव्येति प्राप्ते ब्रूमः—द्वादशाहे वचनाद् विभज्य नयनं कृतम् इति[२] । इहापि चोदकेन तथैव प्राप्नोति, तस्माद् विभज्य नयनमिति ।

[ १९—विकृतिविशेषे सामिधेनीकार्येऽपेक्षितामेव मनुलिङ्गानाम् ऋचामेकादशानां दाशतयीभ्यः समानयनाधिकरणम् । ]

**लिङ्गेन द्रव्यनिर्देशे सर्वप्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥७३॥ पू०**

वचनेन सर्वासामविशेषेण प्रतीतेः प्राकृतं परिमाणं बाधित्वा यावल्लिङ्गमुपादेया इत्येतावती[३] आशङ्का । गुणभूतत्वादृचां न यावल्लिङ्गोपादाने कश्चिद्धेतुरस्ति । न हि गुणोऽस्तीति कृत्वा प्रधानमावर्तनीयम् । तेन यदि तावदयम् पूर्वविधिः स्यात्, ततः कपिञ्जलवत्त्रिष्वेव चरितार्थः स्यात् । प्रकृतिवत्तु पञ्चदशानां प्राप्तेस्तावतीनामुपादानम् ॥ ७३ ॥

[ २०—ज्योतिष्टोमे वाससि सोममानोपावहरणयोरनुष्ठानाधिकरणम् । ]

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥७६॥ सि०**

एकस्यवाससोऽहर्गणेषु बाधं वक्तुं प्राप्तिसूत्रमेतत् ॥ ७६ ॥

---

१. सा. नास्ति. क.

२. इति नास्ति. क.

३. शङ्का. क.

[ २१—अहर्गणे, उपावहरणार्थं वासोन्तरोत्पादनाधिकरणम् । ]

## तत्राहर्गणेऽर्थाद्वासः प्रक्लृप्तिः स्यात् ॥७८॥ सि०

प्रकृतिवदहर्गणेऽपि एकैकस्यैवातिदेशतः प्राप्तेः वचनस्य चाभावात् एकमेव वासः । ननु यद्यपि मानमेकस्मिन्नपि शक्यते[1] तथाप्युपावहरणं न सम्भवति । उपावहरणवाससोहि[2] माध्यन्दिनीयमहाभिप्रवकाले ग्रावस्तुते दानं श्रूयते । सत्यं प्रतिपत्तिरसौ वाससः, सा च सर्वान्तेऽपि क्रीयमाणा न दुष्यति । स्यादेतदेवं यदि वाससः प्रतिपत्तिरियं स्यात् । चतुर्थ्यन्तप्रयोगात्[3] ग्रावस्तुदर्थं (वासोदानं मैत्रावरुणार्थमिव दण्डदानम् । तस्य च ग्रावस्तोत्रिया अनुब्रुवाणस्योत्साहजननेन दृष्टार्थं तत् । अत उपावहरणार्थतया) वासोभेदः स्यादिति ॥७७॥

[ २२—अहर्गणे तत्तदहःसम्बन्धिसोमोपाहरणकाल एव वासोन्तरोत्पादनाधिकरणम् । ]

## मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनात् उपावहरणस्य ॥७९॥ पू०

यदेतदुपावहरणार्थं वासोन्तरोपादानं तन्मानकाल एव स्यात् । प्रकृतौ मानोपावहरणयोरेकवासः सम्बन्धदर्शनात् इति । नैवम् । अर्थाद्धि वाससः तत्र जातमैक्यं न शास्त्रतः । आर्थिकस्यातिदेशश्च नास्तीति एतदवस्थितम् । यत्रैवापेक्षितं वासस्तत्रैवातः प्रकल्प्यते । उपावहरणे चैतदतस्तत्र भवेदिति ॥७८॥

इति तन्त्ररत्ने दशमस्याध्यायस्य षष्ठः पादः ।

---

१. शक्यं. क.

२. हि नास्ति. ख.

३. संयोगोगात्. क.

( ) कपुस्तके ग्रन्थपातः ।

अथ तन्त्ररत्ने दशमस्याध्यायस्य सप्तमः पादः ।

[ १—अग्नीषोमीये पशौ हृदयाद्यङ्गानामेव हविष्ट्वाधिकरणम् । ]

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥१॥ पू०**

ननु द्वितीयाध्यायाधिकरणेन विरुद्धमिदम् । तत्र हि हृदयादिवाक्यानि न यागस्य चोदकानीत्युक्तम् । अतः कथं हृदयादीनां हविष्ट्वमुच्यते ? तत्राह—**द्वितीयेऽध्याये हृदयस्याग्रेवद्यतीत्येवमादीनि न यागं चोदयन्तीति स्थितम् । इयं तु यागचोदनाऽग्नीषोमीयं पशुमालभेतेति** । स्थितेप्यस्य यागचोदनात्वे च विचारः—किं हृदयादीनि हवींष्युत पश्वाकृत्यालक्षिता व्यक्तिर्हविरिति । तत्र पूर्वः पक्षः । इयमेव तावद्यागचोदनेति अविवादम् । इह च **पशोरेवाग्निषोमसम्बन्धः श्रूयते, न हृदयादीनाम् । तेषां त्वग्नीषोमसम्बन्धे लक्षितलक्षणा स्यात्** । आकृत्या व्यक्तिस्तया च हृदयादीनि लक्षयित्वा तेषां देवतासम्बन्धः क्रियते । न चैतद्युक्तम् । तस्मात्पशोरेव हविष्ट्वम् । ननु चैन्द्रवायवादिवाक्यैरिव रसस्य हृदयादिवाक्यैस्तेषामेव हविष्ट्वं गम्यतेऽत आह—**तस्य** पशोः **सान्नायाद्विध्यन्तः । तेन मध्यात्पूर्वार्द्धाच्चावदाने प्राप्ते** तदपवादतयावद्यत्यनुवादेन **हृदयादिदेशा विधीयन्ते,** हृदयादिप्रदेशात् जिह्वाप्रदेशादिति । यद्येतानि वाक्यानि ऐन्द्रवायवादिवाक्यवदुत्पत्त्यवगतलताबाधेन पशुबाधेन विना न निविशेरन् ततो बाधेरन् । एतानि तु प्रदेशविधानेनाप्युपपन्नानि न बाधितुमर्हन्तीति । नन्वादानद्वयस्य किं बहुभिर्देशैरत आह—**तेषां च देशानां विकल्प इति** ॥१॥

**प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक् प्रकल्पनत्वात् ॥२॥ सि०**

**एकस्तावदस्मिन्पक्षेऽयमेव दोषो यदुत लक्षणाया हृदयादिदेशादिति ।** तथा **विकल्पदोषश्चापरः । किं च । यस्य पशुव्यक्तिर्हविरिति** पक्षः, **तस्य ते तस्या एव व्यक्तेः सकाशादवदानं** यथा प्रकृत्यैव **प्राप्नोति । न तु हृदयादिभ्यः** हृदयादिप्रदेशेभ्यः । यच्चोक्त**मवद्यतिरनुवादः**, तेन प्राकृतदेशबाधेन हृदयादिदेशविधिरिति । **तन्न ।** कुतः **यदि ह्यवद्यतिमनूद्य हृदयादीनि देशतया विधीयेरन् । ततोऽथशब्दाग्रशब्दावनर्थकौ स्याताम्** । तथाहि

विधातुं तावन्न शक्यते । प्राप्तावदानोद्देशेन देशस्य च क्रमस्य च विधाने वाक्यभेदभयात् । न चानूद्येते । कस्मात् ? अप्राप्तत्वात् । न हि विकल्पमानानां देशानां क्रमः प्राप्तः, येनानूद्येत । भवन्मते वा कथमित्याह— यदि च हृदयादवद्यतिविशिष्टः पदार्थो भावनाख्यो विधीयते । तथा जिह्वाया अवद्यतीत्येवमादयश्च । तथा सति बहूनामवदानानां विधीयमानानां पाठप्राप्तः क्रम इत्यथशब्दोऽनुवादः स्यात् । कथं पुनस्तथाप्यनुवादः विधिरेव कस्मान्न भवति, उत्तरम्--अयमथशब्द आनन्तर्ये वर्तते । ततः किमित्याह । यदा च पूर्वोत्तरौ पदार्थाववगतौ तदा तयोरानन्तर्यमवगमयितुं शक्यते, यदा तु तौ न स्तः, तदा कस्यानन्तर्यं ब्रूयात् । अवगतौ चेत्पाठादेवावगतः क्रमः, तत्रार्थशब्दोऽनुवाद एव भवति । ममाप्येवमेव स्यादिति । अत आह—न च भवता पदार्थविधानमिष्यते । येन पाठप्राप्त्या अथशब्दाग्रशब्दौ अनुवादौ स्याताम् । तेनावद्यतेरनुवादेन गुणविधानेऽथशब्दाग्रशब्दावनर्थकौ स्याताम् । तस्माद् हृदयादिविशिष्टोऽवद्यतिर्विधीयते । एवं जिह्वादिष्वपि । ततः किमित्याह, एवं च यस्मात् द्रव्यादवदीयते तदेव हृदयादिः हविर्न पशुरिति—हृदयदिभ्योऽवद्यतीत्याह । अतोऽवश्य विशसितव्यः पशुः । तेन विनिष्टत्वात् पशोर्न स्वरूपेण हविष्ट्वमिति । यथैन्द्रवायवं गृह्णातीत्यादिभिर्वाक्यैरौत्पत्तिकं सोमद्रव्यं रसावस्थां नीतं पृथक् कल्प्यते । तदेव च मुख्यं हविर्भवति, न लता । सा तु तद्वारेण भवति साधनमेवमिहापि हृदयाद्येव हविरिति । न चैवं वाच्यं भवतु हृदयादिष्ववदानविधानम् । तत्तु न यागाय । किन्तु एत एकादशावद्यतयोऽदृष्टार्थाः संस्काराः कृतकरस्य द्रव्यस्य विधीयन्ते । पशोरेव तु सकाशाद्यथा प्रकृतौ द्व्यवदानाद्यागः क्रियत इति । कस्मात् ? अस्मिंस्तु पक्षेऽदृष्टार्थत्वमेव दोषः । एतेषु तु यागार्थेषु न किञ्चिददृष्टत्वं कल्प्यम् । चतुरवत्तं जुहोतीति प्रकृतितः प्राप्तम् । न चावदानादृतेऽवत्तं सम्भवति । तेनावत्तनिष्पादकतयास्यावदानस्य प्राकृतावदानकार्यं होमनिर्वृतिर्दृष्टमेव प्रयोजनम् । यत्तु भृत्या पशोरेवाग्नीषोमाभिसम्बन्ध इत्युक्तम् । तत्राह—

**पशुचोदनापि लक्षितलक्षणया हृदयादीनि** लक्षयन्ती **अग्नीषोमाभ्यां सह सम्बन्ध्यते।** विशसनविनाशितस्य पशोः साक्षात्साधनत्वासम्भवात्। न च विशसनस्यादृष्टार्थता युक्ता। वरं चादृष्टकल्पनातोऽथशब्दाद्यानर्थक्याश्रयणाच्च लक्षितलक्षणाश्रयणम्। इदं चाभ्युपेत्य वादमात्रम्। परमार्थतस्तु पशुशब्दस्य नास्त्येव लक्षणा। पशोरेवाग्नीषोमीयत्वं तद्वारं भविष्यति सोमस्येव रसद्वारेण। नन्वेवं अष्टाकपालस्यापि ह्यवदानद्वारमाग्नेयत्वं स्यात्। नेति ब्रूमः। नहि तत्र ह्यवदानस्य यागसाधनत्वे प्रमाणमस्ति, येन प्रणाड्या पुरोडाशस्य यागसाधनत्वं च स्यात्। चतुरवत्तं जुहोतीत्यत्र होमस्यान्यतोऽप्राप्तेर्न तदनुवादेन चतुरवत्तं विधीयते। किं तु अवत्तस्य प्रक्षेपः संस्कारो विधीयते। तस्मात्तत्र पुरोडाशस्यैव प्रदेयत्वम्। इह तु हृदयादीनाम्। अथवा विनष्टत्वात्पशोर्न हविष्ट्वं पुरोडाशस्त्वविनष्ट इति वैषम्यम् ॥२॥

[ २ — हृदयादीनामेवावदानसम्बन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वपरिसंख्याधिकरणम्। ]

**हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥३॥**

अवयवद्वारेण पशोः साधनता। सा, चैकेनापि निर्वर्तते। तेन विकल्पेन यतः कुतश्चिदवदेयमित्येकः पक्षः। पश्वाकृत्या यागसाधनं परिच्छेत्तव्यं प्रणाड्या। सा च व्यक्तिं साक्षात्परिच्छिनत्ति। तया त्ववयवाः। सा चावयवेषु व्यासंगिनी न प्रत्येकं परिच्छेत्तुमर्हति। तस्मात्सर्वेभ्योऽवयवेभ्योऽवदानम्। हृदयादिग्रहणं तु प्रदर्शनार्थं भविष्यतीत्यपरः। सिद्धान्तमाह। एवं च पूर्वोक्ते न्यायेऽवस्थिते **येषामेव ह्याद्यंगानामवद्यतिः श्रूयते, तान्येव यागसाधनानि, नाङ्गान्तराणि। कुतः।** पुनः पूर्वन्यायादस्य सिद्धिः। उत्तरम्, **पशुशब्दो ह्ययं हृदयादीनि वाक्यानि दृष्ट्वा ततो लक्षणावृत्त्याः कल्पितः। यानि च दृष्ट्वा कल्पितः तान्येव लक्षयति, अन्येषां त्वङ्गानामश्रूयमाणानां कः प्रसंगः, येन तान्यपि हविष्ट्वेन लक्षयेत्।** यद्यपि विशसनादेव लक्षणाश्रयणं शक्यम्। तथापि हृदयादिष्वेव **यागार्थावदानदर्शनात्तेष्वेवोप**संह्रियते ॥

[ ३—त्र्यङ्गाधिकरणम् ]

**इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥१०॥**

नैकहविष्ट्वं पशोः अङ्गानि हवींषि। तेष्वपि निर्दिष्टान्येव नान्यानीत्यधिकरणद्वयेनोपोद्धातं साधयित्वेदानीं बाधश्चिन्त्यते। तत्रेज्याशेषाणामेव मध्ये 'स्विष्टकृतं यजति' इत्येवंवचनार्थसम्भवात् नेज्यशेषसम्बन्धः प्राकृतः स्विष्टकृतो बाधितव्य इति पूर्वः पक्षः। सिद्धान्तमाह—

**त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥११॥ सि०**

**एकादशानां तावन्मध्ये त्रित्वं नास्ति यद्विधीयेत। संख्या हि केनचिदेकेनावान्तरधर्मसंयोगेन** क्रियासंयोगेन गुणयोगेन वा **प्रवर्तते। न** चैकादशानां मध्ये **केषांचिदेकधर्मयोगोऽस्ति, येनैकादशेभ्योऽवछिद्येत त्रित्वम्।** तेन त्रित्वेनाङ्गानां विशेषणविशेष्यभावो न स्यात्। अपि च **समासानुपपत्तिश्च स्यात्।** त्वन्मते हि प्राप्तत्वादङ्गैरिति न विधीयते। किन्तु त्रिभिरिति। तत्र त्रिशब्दो यजिना सम्बध्यमानो यागशब्देनासमर्थः स्यात्। अपि **चाङ्गशब्दो यदि त्रित्वेन सम्बध्यते ततो न स्विष्टकृता** सम्बद्धः स्यात्। **यदि स्विष्टकृता** सम्बद्धेत **न त्रित्वेन** स्यात्। एतदुक्तं भवति—त्वन्मते ह्यङ्गार्थस्याविधेयत्वात् यदंगैः स्विष्टकृतं यजतीति अङ्गशब्दः स्विष्टकृद् विशेषणार्थः स्यात्। न च विशेषणं कार्ययोगि भवतीति न। त्रित्वान्वयस्तस्य स्यात्। अतो यद्यङ्गशब्दस्य त्रित्वेन सम्बन्ध इष्यते ततो न स्विष्टकृता विशेषणतया सम्बन्धो भवति। अथ तेन विशेषणतया सम्बध्येत ततस्त्रित्वान्वयो न स्यात्तत्र। त्रित्वस्य विशेष्यभूतेन स्विष्टकृता सम्बन्धात्तस्यैव त्रिरभ्यासः स्यादिति अनिष्टापत्तिरिति। मत्पक्षे तु **दोषादीन्यङ्गानन्येकया समवद्यतिक्रियया युक्तानि भवन्ति। एकेन** चाग्निसंयोगेन गुणेन 'दोष्णः पूर्वार्द्धादग्नये समवद्यति गुदस्य मध्यतः श्रोण्योर्जघनतः' इत्युक्त्वानन्तरं 'त्र्यङ्गैः स्विष्टकृतं यजति' इति वचनम्। **तत्र समासार्थो विशेषणविशेष्यभावश्च घटते तेषु गृह्यमाणेषु।** तस्मात्तै-

रिज्याशेषाणां बाधः । **अत्र चोद्यते प्रकृतौ यागद्रव्यसंस्कारको दृष्टः स्विष्टकृद्यागः । न च तैर्दोषा(रा)दिभिर्यागः कृतः, येन प्रतिपाद्येरन् । तस्मात् स्विष्टकृत्प्रतिरूपकं यागान्तरमेतदप्राकृतकार्यं विधीयते, हृदयादिभिश्चोदकप्राप्तः स्विष्टकृत् केन निवार्यते ।** तस्माद्विकाराभिधानमयुक्तमिति । **अत्रोच्यते—यदि स्विष्टकृदनुवादेन** त्र्यङ्गानि द्रव्यत्वेन विधीयेरन् तत्र च प्राकृतस्य कार्यस्याबाधितत्वात् तत्सिद्ध्यर्थः प्राकृत एव स्विष्टकृद् द्विरभ्यस्येते त्र्यङ्गविशिष्टो वान्यः स्विष्टकृद्यागः । ततः अप्राकृतकार्य एव प्राकृतः स्विष्टकृत् स्यात् । **इह तु त्र्यङ्गानि प्रति स्विष्टकृद् विधीयते ।** एतदुक्तं भवति—प्रकृतावयवं स्विष्टकृद् यागो यागद्रव्यशेषप्रतिपादनद्वारेणोपकुर्वन् दृष्टः । इह तु तादृश एव चोदकेन प्राप्नुवन् अन्यत्र गुणसिद्ध्यर्थः । प्राकृत एवंभावेन विहितोऽनिज्याशेषेषु प्रत्यक्षेण वचनेनेज्याशेषेभ्योऽवच्छिच्छद्यते । नत्वनिज्याशेषान् प्रतिपादयति । अत आह-**तान्यपि प्रतिपादनयोग्यानि तुषकणवत् ।** यथा तुषकणं स्वयमनिज्याङ्गमपि इज्याशेषातुप्रकणमाकीर्णकरं प्रतिपत्यर्हं तथा दोरादीन्यपीति । ननु तृतीयायुक्तानां कथं प्रतिपाद्यतात आह—**या तु तृतीया विभक्तिः सा** प्रतिपाद्यानामपि **साधनत्वादर्थप्राप्तैवानूद्यते** प्रकृताविवोत्तरार्द्धादिति पञ्चमी । नन्वेवं न हृदयादेः कार्यप्रतिपत्तिरत आह—**हृदयादीनि तु येन केनचिदुपायेन प्रतिपाद्यन्ते । न स्विष्टकृद्यागेन ।** तस्याछिद्यान्यत्र नीतत्वादिति । इममेव सिद्धान्तं पुनः संक्षेपेण दर्शयितुमारभते—**यद्येवं** वचनव्यक्तिः **यदङ्गैःस्विष्टकृतं यजति तत्त्रिभिरिति** तस्यैवं वादिनोऽङ्गशब्दः **स्विष्टकृद् विशेषणार्थमुच्चार्यते विशेषणं च न कार्ययोगीति** नाङ्गशब्दस्य त्रित्वान्वयः सिद्ध्येत् । **विशेष्यश्च स्विष्टकृत् । तस्य त्रिरभ्यासः प्राप्नोति । न चैकादशानां मध्ये** प्राप्ता **त्रिसंख्या विद्यते, क्रियायोगस्य गुणयोगस्य** वाऽभावात् । त्र्यङ्गैरित्येवं निर्दिश्येत । **किं च यश्चैकादशानां** समाहृतानां **मध्ये त्रीणि गृह्णीयात् तेनास्मिन्नेव** वचनेऽ **पोद्धारप्रयत्नः कर्तव्यः । योऽप्यधिकृतानां** पञ्चाङ्गानां सर्वेषां मध्ये **त्रयाणां ग्रहणं करोति, तेन न** केवलमपोद्धारप्रयत्नः

कर्तव्यः, अपि तु समाहारप्रयत्नश्च कर्तव्यः। यस्तु दोरादीनि गृह्णाति तस्योभयदोषाभावः प्रमाणान्तरेण समाहारापोद्धारयोर्द्वयोरपि कृतत्वात्, दोरादीनि ह्यपोद्धृत्य समवद्यति क्रियायोगेन समाहृतानि। तस्मात्तैरिज्याशेषाणां विकारः। ननु यागद्रव्यशेषस्याप्रतिपादनात् अप्राकृतकार्यः स्विष्टकृतापद्येत तस्माद् दोषादिभिः कृतेऽपि पुनरिज्याशेषप्रतिपत्त्यर्थं द्विरभ्यासः स्विष्टकृतः प्राप्नोत्येवं वर्ण्यमाने। उच्यते—न प्राप्नोत्यभ्यासः। वचनेन हि स्विष्टकृदयमन्यत्र विधीयते, प्राकृतात् कार्यादाछिद्येति ॥ ११ ॥

[ ४—अध्यूघ्न्या होतुः प्राकृतकृत्स्नेडाभक्षनिवृत्त्यधिकरणम्। ]

**अध्यूधुघ्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥१२॥ सि०**

अनस्थिभिरिडां वर्द्धयन्तीति वचनं मन्वानः सर्वेषामनघ्नां ईडायामंतर्भाविनर्त्विग्भिरनियमेन सम्बन्धे प्राप्ते नियमार्थमिदं अद्ध्युघ्नीं होत्रे हरन्तीति वचनं यजुर्युक्तन्यायेन। अतो नास्य प्राकृतस्य निवृत्तिः। यदि चापूर्वाद्ध्यूघ्नी स्यात् तत इह भक्षाश्रवणात् हरणमात्रश्रवणाच्च प्रकृतितश्चाप्राप्तेर्भक्षणमेवास्य न स्यात्, इति पूर्वः पक्षः। सिद्धान्तस्तु। प्राशनवचनेनैकवाक्यत्वात् अनुवादोऽयम्। अतो प्राप्ताद्ध्यूघ्नी विधीयमाना त्र्यंगवत् प्राकृतभक्षविकारः। असत्यपि भक्षश्रवणे भक्षार्थप्राकृतहोतृसम्प्रदानकहरणानुवादेन विधानात् सिध्यति भक्ष इति ॥१२॥

[ ५—वनिष्टोर्भक्षविकाराधिकरणम्। ]

**अग्नीधश्च वनिष्टुरद्ध्यूघ्नीवत् ॥१७॥ सि०**

वनिष्टोस्तु प्राशनवचने कीर्तनादिडात्वेन भक्षप्राप्तिं मन्यते। अन्यथा चतुर्थ्यभावात् नात्र भक्ष इति विशेषाशङ्का। सिद्धान्तस्तु-इडासंस्कारार्थं प्राशनमात्रं श्रूयते, नेडात्वम्। अतः प्राप्तत्वात् षष्ठ्यापि चतुर्थ्यर्थलाभात् इहापि भक्षविकार इति ॥१७॥

[ ६—पशौ मैत्रावरुणस्यापि शेषभक्षप्रतिपादनाधिकरणम् । ]

## अप्राकृतत्वान्मैत्रावरुणस्याभक्षकत्वम् ॥१८॥ पू०

अप्राकृतत्वादभक्षो मैत्रावरुणः । प्रकृतावध्वर्य्वादीनामेव भक्षेनिर्देशात् । ननु प्राकृतहोत्रादिकार्यापत्त्या तद्धर्मं भक्षं लभते । सत्यं यदि होत्रादिधर्मो भक्षः स्यात् । स तु द्वितीयासंयोगात् कृत्स्नसंयोगाच्च द्रव्यप्रतिप्रत्यर्थ इत्युक्तम् । उभयार्थ इति चेत्, न, निराकाङ्क्षत्वात् । न चागृह्यमाणविशेषत्वं, द्वितीया-संयोगात् द्रव्यस्य विशेषग्रहणात् । कर्तृसंस्कारार्थश्च भक्षो यजमानस्यापि प्राप्नुयात् । तत्र च यजमानपञ्चमा इडां भक्षयन्तीति वचनं यजमानप्राप्त्यर्थ-मिति यत्षष्ठे वर्णितं तद्विरुध्यते । तस्मादभक्षो मैत्रावरुणः । उच्यते—भवत्ये-वास्य भक्षः, प्राकृतकार्यकरणात् । प्रकृतौ हि द्रव्यार्थतया श्रुतस्य भक्षस्याध्वर्य्वा-दयः प्रकृताः कर्तृत्वेन सम्बध्यन्ते कर्मकराः । तत्रैवं शास्त्रार्थः-प्रकृतैः कर्तृभि-र्भक्षणेन द्रव्यं प्रतिपादनीयमिति; तत्र प्राकृतकर्तृनियमप्रयोजनापेक्षायां कर्तृप्रतीतिरेव प्रयोजनं भवतीति । तेन नियमांशे पुरुषसंस्कारार्थताप्यस्त्येव । तस्य चालोपार्थं सर्वे प्रकृता भक्षयन्ति । इतरथा हि प्रकृतावपि न सर्वे भक्षयेयुः । तेन मैत्रावरुणोऽपि तत्कर्मकरत्वात् तत्संस्कारसिद्ध्यर्थं भक्षयेदिति ॥१८॥

[ ७—पशौ मैत्रावरुणस्यैकभागत्वाधिकरणम् । ]

## विभागः स्याद् द्विकर्मत्वात् ॥२०॥ पू०

द्वयोः कार्यापन्नो द्वौ भागौ लभेतेति मन्यते । एकेनैव तु भागेनास्य प्रकृततृप्तिसिद्धेर्न भागद्वयं प्रमाणवत् । अतः पुरुषान्तरतुल्यत्वात् अस्याप्येक-एव भागः ॥२०॥

[ ८—पशौ प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् । ]

## प्रतिप्रस्थातुश्च वपाश्रपणात् ॥२२॥ पू०

कर्मकरत्वाविशेषात् प्रतिप्रस्थातुरप्यस्त्येव भक्षः । नेत्युच्यते, भक्षणं हि द्रव्यद्वारेण, तद्द्रव्यसाध्यस्यापूर्वस्याङ्गम् । कर्तृनियमोऽपि तद्गतः, तस्यैवापूर्व-

स्याङ्गम् तदनुगुणमेव द्वारमाश्रयति। तदपूर्वकर्तृगता च प्रीतिस्तस्य द्वारता-मुपगन्तुमलं न कर्तृमात्रगता। न च हृदयादिसाध्येष्वपूर्वेषु प्रतिप्रस्थातुः कर्तृत्वमस्ति। यत्र च वपापूर्वकर्तृकता तत्र निःशेषहोमाद् भक्षासम्भवः। तस्माद् अभक्षः प्रतिप्रस्थाता। यत्तु भाष्यकारेणाङ्गयागादिष्वपि प्रतिप्रस्थातुः कर्तृत्वमस्त्येव शाखान्तरे प्रतिप्रस्थातावद्यदीति वचनादित्याशंक्य यस्यां शाखायामित्यादिना परिहारत्रयमुक्तम्। तत्राद्यावेव परिहारौ पारमार्थिकौ नेतरः। नह्यार्थिकं प्रकृतावध्वर्योरवदातृत्वम्, अवत्तहोमविधिनार्थाद् विधीयमा-नस्यावदानस्य प्रदानेनैककर्तृत्वात्समाख्यानाच्चाध्वर्युकर्तृत्वं शास्त्रीयमेव। तच्च कुर्वन् प्रतिप्रस्थाता लभेतैव भक्षम्। तस्मात्कृत्वा चिन्तेत्येव तथ्यम्। अवदानान्तरमिति वा। अन्यत्त्वतिशयोक्तमिति ॥२२॥

[ ६ —गृहमेधीयस्याऽऽज्यभागपुनःश्रवणेनापूर्वत्वप्रतिपादनाधिकरणम्। ]

**विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनःश्रुतिरनर्थिका स्यात् ॥२४॥ पू०**

चोदकप्राप्तानुवादमात्रमिति अनर्थकमेवैतत्। अर्थान्तरानवगमात् ॥२४॥

**अपि वाग्नेयवत् द्विशब्दत्वं स्यात् ॥२५॥**

अगत्यानुवादाश्रयणं कल्प्येत। अस्ति चात्र गतिः। का पुनरसावि-त्याह—यथा निर्वपतिशब्दः श्रूयमाणो दर्शपूर्णमासविध्यन्तं नियमयति, पुनःश्रवणात्। एवमाज्यभागौ श्रूयमाणौ ऐष्टिकविध्यन्तं नियमयतः। तथाहि—सादृश्येन विध्यन्तो नियम्यते, नचाज्यभागाभ्यामन्यन्निर्वपत्या-दिकं लिङ्गं गृहमेधीयस्य सादृश्यकरणमस्ति। तस्माच्चोदकनियम आज्य-भागश्रवणात्। तेन यथाग्निमग्न आवहेत्येक एवाग्निः कर्मकर्तृत्वभेदेन प्रति-पाद्यते। तथात्रापि दार्शपौर्णमासिक एव विध्यन्तश्चोदकेन साक्षात्प्रति-पाद्यते। प्रत्यक्षवचनेनापि स एव चोदकनिमित्तसादृश्यापादकेन प्रतिपाद्यत इति ॥ २५ ॥

## न वा शब्दपृथक्त्वात् ॥२६॥

अग्न आहवहेत्यावाहनक्रियां प्रत्यग्निः कर्ता। तस्यां चावाहनक्रियायां न ज्ञायते क आवोढव्यः इति। तत्राग्निमिति निर्दिश्यते किंचिदावोढव्यम्। तत्रैतौ भिन्नार्थौ शब्दौ—एकः कर्ता अपरः कर्म। इह तु चोदकेनाज्यभागौ प्राप्येते प्रत्यक्षेणप्याज्यभागावेव, तत्रैकार्थौ द्वावपि शब्दौ पुनरुक्तौ स्याताम्। यदप्युच्यते पौनरुक्त्यपरिहारार्थं चोदकनियमं करिष्यति। आज्यभागश्रवणं निर्वपतिवदिति। तदपि न युक्तम्। ओदनशब्दस्योत्पत्तिवाक्ये श्रुतत्वात् स एव औषधद्रव्यकत्वं सादृश्यमापादयन् विध्यन्तनियमं करिष्यति। निर्वपतिशब्दे तु युक्तं विध्यन्तनियमार्थत्वं। तत्र हि न्यायशब्दो विद्यते यो विध्यान्तनियमं कुर्यात्। यद्यपि सौर्यादौ चरुशब्देनैव विध्यन्तनियमः सिध्यति। तथापि विधिप्रत्ययार्थक निर्वपत्युच्चारणं नानर्थकम्। तस्मादिहानर्थंक्यात् न द्वाभ्यामेकोऽर्थो गम्यात इति युक्तम्। किं तर्हि? युक्तं चोदकप्राप्तस्य प्राकृतस्य विधेर्विधायाः प्रकारस्येति यावत् स्तुत्यर्थोऽयं ईदृशोऽयं दार्शपौर्णमासिको विध्यन्तः शोभनः यदत्राज्यभागावपि स्तः तौ यज्ञतासम्पत्त्या इति अनेन द्वारेण स्तुतिः॥२६॥

## अधिकं वार्थवादत्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥२७॥

अर्थवादोऽपि न घटते। कथम्? भिन्नवाक्यत्वात्। विधीयमानस्य हि वाक्यशेषत्वेन स्तावकोऽर्थवादो भवति। न चैषगृहमेधीयस्य वाक्यशेषत्वेन घटते भिन्नवाक्यत्वात्। अतो न तदीयप्रकृतिवच्छब्दप्रापितविध्यन्तस्तावकता युक्ता। कथं तर्हीति आह—तस्मात्कर्मान्तरमाज्यभागधर्मकम्। किं पुनरस्य शब्दन्तरादिषु भेदकारणमित्याशंक्याभ्यासस्य भेदकत्वं भाष्यकारेणोक्तम्। तत्तावद् दर्शयति, चोदकेनाज्यभागौ प्रत्यक्षेणाप्याज्यभागौ। अत 'एकस्यैव पुनः श्रुतिः' इत्यनेन न्यायेन कर्मान्तरम्। अथ कस्मात्

भाष्यकारेण प्रकरणान्तरं भेदकं नोच्यते । अत आह, यदि गृहमेधीये चोदकेन दार्शपौर्णमासिको निध्यन्तो न स्यात् तथा सति विपरिवृत्त्यभावात्, प्रकरणान्तरे प्रयोजनान्यत्वमिति अनेन न्यायेन कर्मान्तरं स्यात् । विपरिवृत्तिसद्भावे तु अभ्यास एव भेदक इति ॥२७॥

## प्रतिषेधः स्यादिति चेत् ॥२८॥

कर्मान्तरत्वे सत्याज्यभागशब्दो लक्षणार्थो भवेत् । अप्राकृतश्चादृष्टार्थः सन्नधिको भवेत् इति गौरवम् । तस्मात्पुनर्वचनं परिसंख्यार्थम् । अन्येषामङ्गानां निवर्तकम् ! चोदकप्राप्तानामित्यर्थः । ननु नात्र निवर्तकः शब्दो नञादिरस्ति । नापि निवर्त्याङ्गान्तरशब्दस्तयोरुभयोरभावात् भ्रान्तिरेषा यन्निवृत्तिर्वाक्यार्थ इति । नहि प्रतिषेध्यप्रतिषेधकशब्दावान्तरेण प्रतिषेधस्य वाक्यार्थत्वसम्भवः । पदार्थपूर्वको हि वाक्यार्थः । न प्रत्यस्तमितपदविभागेन वाक्येनोच्यत इत्युक्तमिति । उच्यते । आज्यभागविधानं तावत् एतन्न भवति चोदकेन प्राप्तत्वात्तयोः । किं तर्हि ? एतस्माद्वाक्यादुच्चरितादन्यनिवृत्तिरवगम्यते लक्षणया । सा चाप्राप्ता । अतः सैव विधीयते । यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्त्वा पुनर्यदा श्रूयते पञ्चम्यां (देवदत्तो) विष्णुमित्रो भोजयितव्य इति । तत्र न भोजनं विधीयते, प्राप्तत्वात् त्रयाणामपि भोजनस्य । किन्त्वन्येषां भोक्तृणां निवृत्तिर्विधीयते एवमत्रापीति ॥२८॥

पक्षान्तरमाह—

## अग्रहणादिति चेत् ॥३०॥

प्रत्यक्षेणाज्यभागौ गृहमेधीये प्राप्येते। अन्यानि त्वङ्गानि चोदकेन। नन्वाज्यभागावपि चोदकेनैव प्राप्नुतः । किं तयोः पृथक् विधिना । सत्यं प्रत्यक्षेण तु शीघ्रं प्राप्तिः, विलम्बिता चोदकेन । तस्मादाज्यभागवर्जमन्यच्चोदकः प्रापयति, तयोः प्रत्यक्षेण, प्रथममेव विहितत्वात् । किमेवं-

भविष्यतीत्याशंक्याह **एवं च कर्मान्तरमपि**। अपि शब्दात्परिसंख्या च त्रिदोषा न कल्पिता भविष्यति ॥ ३० ॥

## न तुल्यत्वात् ॥३१॥

**यदि विकृतिः** शास्त्राणि **अपेक्षेत पदार्थान्वा** ततस्तेष्विदमिदं कुर्यादित्येवं पृथगाकृष्यमाणेष्वाज्यभागौ **न प्रापयेत्**। प्रत्यक्षाम्नानात् न त्वेवमस्ति। किं तर्हि **विकृतिः प्रकारं** यागगतव्यापारविशेषाख्यमपेक्षते—कथमनेन स्वफलं कर्तव्यं केन व्यापारेण यागगतेन कृतेन यागात्फलं कृतं भवतीति। ततः किमित्याह। **स चैकः** प्रकारस्तयापेक्ष्यते। न बहवः। तत्र चाज्यभागावन्तर्गताविति कथं तयोरप्राप्तिः, कथं प्रकारापेक्षितेत्याह-**प्रकारापेक्षायां प्रमाणमस्ति** सन्निध्यपेक्षायोग्यत्वा-(त्वैः)दिभिः **न शास्त्रपदार्थापेक्षायां**। तत्र सन्निधिं तावदाह—**सौर्येण साधयेत् कथमित्यपेक्षायां सादृश्येन** प्रथमं तावदाग्नेय एव **बुद्धिर्भवति**, न पदार्थेषु। **आग्नेयेनापि** च स्वसमवेताः **प्रकारा** एव प्रथममुपस्थाप्यन्ते। न पदार्थाः शास्त्राणि वा। एकोऽपि प्रकारश्चित्ररूपवन्नानारूप इति बहुवचनं नानाविधदृष्टादृष्टोपकारसम्पादनात्मा ह्यसौ व्यापारः, स चाग्नेयगतव्यापारत्वेनैकः प्रतिसन्धिभिस्त्वग्न्यन्वाधानादिभिर्निरूप्यमाणो नाना भवतीति चित्रवदेकनानाव्यवहारयोर्द्वयोरप्युपत्तिरिति। तेन संनिधेस्तान् **गृह्णाति विकृतिः प्रकारान्**। अपेक्षामाह। **ते च प्रकारा अपेक्षिताः**—कथं कर्तव्यमित्यपेक्षाप्रकारे एव भवति। योग्यत्वमप्यसंदिग्धम्, तस्मात्सन्निध्यपेक्षायोग्यत्वैः प्रकारस्यैव ग्रहणम्। **शास्त्राणि पदार्थाश्चानपेक्षितानि व्यवहितानि च**, चशब्दादयोग्यानि प्राकृतेन हि प्रधानेन स्वीये प्रकार उपस्थाप्यमाने तद्विशेषणतया पदार्थानां तिरस्कृतरूपाणां प्रतीतिर्नस्वात्मना। अपेक्षापि न पदार्थस्वरूपेऽस्ति नह्यनेनेदं कुर्यादित्युक्ते किं कर्तव्यमित्यपेक्षा किं तु कथं कर्तव्यमिति। अत एव योग्यतापि तदाकाङ्क्षापूरणे पदार्थानां नास्ति। **तस्मात्सर्वपदार्थविशिष्टस्य प्रकारस्यातिदेशात्तद्द्वारेण कृत्स्नमङ्गजातं चोदकः प्रापयति** नत्वाज्यभागवर्जम्। तत्र साधारणव्यापाराच्चोदकादेव सिद्धेरनुवादमात्रमिदमापद्यते ॥३१॥

अत्रापरं सूत्रम्—

**तथा तद्ग्रहणे स्यादिति ॥३२॥**

तत्रेयमाशंका मा भूत् आज्यभागविध्यर्थं पुनर्वचनं चोदकादेव सिद्धत्वात्। उदुपसंहारार्थं तु भविष्यतीति। अत्रोत्तरं कृत्स्नप्रापित्वात् नोपसंहारो युक्त इति। ननु सामान्यस्य विशेषेणोपसंहारः सम्भवत्येव। एवं तर्ह्यनर्थकश्चोदकः प्रत्यक्षेणैवाज्यभागसिद्धेः तदङ्गीकारे वा नोपसंहार इति भावः ॥३२॥

**अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्वात् ॥३३॥ सि०**

भावयेत्फलम् केन गृहमेधीयेन कथमित्यपेक्षायां प्रकरणेनाज्यभागौ गृह्णाति। कथमित्याह। तौ क्लृप्ताववान्तरोपकारौ प्रकृतौ दृष्टौ। चशब्दो हेतौ। तस्मात्तौ गृह्णाति। ततश्च नैराकाङ्क्ष्यात् चोदकलोपः। तदाह—उपमितयाप्र(?)प्राकृत्या लक्षणद्वारं विध्यन्तप्रापणं यावद्गृहमेधीयकथंभावो नैव गच्छति तावत्प्रत्यक्षाभ्यामाज्यभागाभ्यां गृहमेधीयएकवाक्यतां गतः। तस्मादानुमानिकेन प्रकृतिवच्छब्देन न सम्बध्यते गृहमेधीयः। तेनापूर्व इति। नन्वेवं प्रत्यक्षैरुपहोमादिभिर्नैराकाङ्क्ष्यात् नक्षत्रेष्टयादीनामपूर्वत्वं स्यादत आह भाष्यकारः—यस्यां तु विकृतावित्यादि। तस्यार्थमाह-यत्त्वपूर्वमङ्गं तत्क्लृप्तोपकारं न भवति अक्लृप्तोपकारत्वाच्च कथंभावाकाङ्क्षा न शक्नोति पूरयितुम्। तत्रावश्यं या काचित्प्रकृतिः पूरणसमर्थापेक्षितव्या। तस्यामपेक्षितायां चोदकेन प्रकृतिविशेषसम्बन्धप्रकारदानेन निराकाङ्क्षीक्रियते। इदमाकूतं कथमिति प्रकाराख्यो यागगतो व्यापारविशेषोऽपेक्षितः। तेन यः प्रकारविशेषसमर्थकः शब्दः, स एव तदाकाङ्क्षापूरणेनैकवाक्यतामुपगन्तुमलम्। नान्यत्। नच क्रियान्तरं स्वरूपेणैव क्रियान्तरगतव्यापारो भवति। उपकारसम्पादनं तु तद्गतव्यापारः स्यात्, नहि क्रिययोः क्षणिकयोः स्वरूपेण सम्भवति सम्बन्धः। किन्तु द्वारविशेषमाश्रित्य। नचोपहोमादिषु क्लृप्तं आज्यभागायां ? इव द्वारमस्ति। येन यागगतव्यापारता-

मश्नुवीरन् । प्रकृतिवच्छब्दस्तु प्राकृतमङ्गावान्तरकार्यसम्पादनाख्यं प्रकारं प्रतिपादयन् एकवाक्यतां सुखेन याति। पश्चात्तु सन्निहिताङ्गाम्नानात् आनर्थक्यात् द्वारकल्पनया तैरपि एकवाक्यता भवति। यत्त्वाज्यभागादिकं प्राकृतमङ्गं तत्प्रकृतावेव लब्धावान्तरोपकारम्, तत एव लब्धप्रधानसम्बन्धं विकृतौ श्रूयमाणं लक्षणया स्वीयावान्तरकार्यसम्पादनाख्यं प्रकृतं प्रकारमुपस्थापयति। तल्लक्षणार्थं चेदमाज्यभागौ यजतीति वचनं स्वरूपपरत्वे आनर्थक्यापत्तेः, तल्लक्षणया तु शक्नोति प्रधानकथंभावपूरणेन तदेकवाक्यतां गन्तुम्। तेन च पूर्णे कथंभावनैराकाङ्क्ष्यादाकाङ्क्षाधीनात्मलाभश्चोदको लुप्यते इत्यपूर्वत्वम्। यस्तु प्राकृतानामप्येकवाक्यतामुपगतानामेव निरपेक्षासाधनत्वेन विहिताभ्यां प्रत्याम्नानेन बाधमिच्छति। स यथोक्तेन न्यायेन चोदकलोपान्न प्रयाजादिभिः सहैकवाक्यतां यास्यतीति। चोदक एव नास्तीति च भाव्यविरोधादुपेक्षणीयः। किं च चोदकेऽङ्गीकृते तत एवाज्यभागयोरप्युपकारसिद्धेरनुवादमात्राज्यभागाभ्यामुपकुर्यादितिवचनम्। अथाज्यभागाभ्यामेवोपकुर्यादित्युच्यते, ततः परिसंख्या स्यात्। न चातोऽन्यत्र वचनव्यक्तिः सम्भवति। किंच प्रथममुपकारे प्राप्ते पुनरपि पदार्थानामाकाङ्क्षावशात् पृथगतिदेशं भवानिच्छति। सत्यां चोपकारजनकाकाङ्क्षायां क्लृप्ततत्साधनभावं प्राकृतमङ्गं वचनेनैव तत्साधनत्वेनैव विधीयमानं गृहीत्वा संतुष्टो विधिराकाङ्क्षाभावन्न प्राकृतं गृह्णीयात्, तस्मान्नास्ति चोदकः ॥३३॥

[ १०—गृहमेधीये प्रत्यक्षश्रुतस्विष्टकृदादेरप्यनुष्ठानाधिकरणम्। ]

## ततोऽपि यावदुक्तं स्यात् ॥३४॥ सि०

बहुषु प्राकृतेषु श्रुतेषु एकैकस्यैव क्लृप्तोपकारत्वेन प्रधानाकाङ्क्षापूरणे सामर्थ्यात् विकल्पं मन्यते। सिद्धान्तस्तु प्रकरणस्यापर्य्यायव्यापारत्वात् प्रकृतिवदेव यावच्छ्रुताङ्गजन्योपकारसम्पादनमेव यागगतव्यापारत्वेनाष्टदोषदुष्टविकल्पपरिजिहीर्षया प्रयोगवचनः स्वीकरोति सर्वेषां संग्रह इति ॥३४॥

[ ११—गृहमेधीय आज्यभागपुनःश्रवणस्य परिसंख्यार्थमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां शेष-कार्याणां निवर्तकमिति प्रयोजनप्रतिपादनाधिकरणम्। ]

**स्विष्टकृति भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात् ॥३९॥ सि०**

अपूर्ववान् गृहमेधीयः । परिसंख्यार्थं प्राकृतांगपुनःश्रवणमिति कृत्वा चिन्त्यते। तदा ह्याज्यभागाभ्यां सजातीययागान्तरस्योपस्थापनात्तन्निवृत्तिरेव विधेया। शेषकार्याणां त्वनिवृत्तौ सत्यां चिन्त्यते—किं स्विष्टकृच्छ्रवणं शेषकार्यान्तराणां परिसंख्यार्थं, नवेति तत्रेडामुपहूय भक्षयन्तीति भक्षस्यापि दर्शनाद-परिसंख्यां मन्यते। विध्यन्तरविहितस्य त्विदं दर्शनम्। अतः स्विष्टकृच्छ्रवणं शेषकार्यान्तराणि परिसंचष्ट एवेति सिद्धान्तः ॥३५॥

[ १२–प्रायणीयाथित्ययोः शंय्विडान्ताधिकरणम् ]

**शंय्विडान्तत्वे विकल्पः स्यात् परेषु पन्यनुयाज-प्रतिषेधोऽनर्थको हि स्यात् ॥३८॥ पू०**

शंय्विडान्तादिवचनप्राप्तोत्तरांगाःकर्तव्याःपरिसंख्यानार्थं न पत्नीः संयाजन्ती-तिवचनम् पत्नीसंयाजा एव न कर्तव्याः, शेषं तु सर्वं कर्तव्यमिति। इतरथानुवाद-मात्रमनर्थकं स्यात्। तस्माद्वचनाद् द्वयविहितयोः शय्वंन्तसर्वसंस्थयो-र्विकल्पः। मैवं। न हि सम्भवत्येकवाक्यत्वेऽष्टदोषविषमशिष्टविकल्पप्रसंजक-मनेकवाक्यत्वं युक्तम्। लक्षणया हि परिसंख्यया सर्वसंस्था विधीयेत। श्रुत्या तु शंय्वन्तता तयोर्वैषम्यादयुक्तो विकल्पः। तस्माच्छंयोः परेषां बाधः एवेति ॥३८॥

[ १३–प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां शंय्विडान्तत्वाधिकरणम्। ]

**प्रतिशेषेधार्थत्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥४०॥ पू०**

नसिद्धे पूर्वशंयुग्रहणे पूर्वाधिकरणचिन्तावकाशः, पूर्वपक्षासंभवादितीदमर्थ-तोऽधिकरणं पूर्वं द्रष्टव्यं, तत्र अनियम इति पूर्वः पक्षः। द्वितीयमाह। **शंय्वन्ताङ्ग-रीतिरत्र विधीयते**, पर्यग्नि कृतानुत्सृजन्तीतिवत्। **सा च** क्लृप्तोपकारा **विधीय-**

**मानाज्यभागवन्निराकांक्षी करोतिप्रायणीयाम्**। तस्यां च विधीयमानायां **द्वे शंय्वंतते** अविशेषेण **परिप्लवेते, तत्र पूर्वस्यां शय्वंततायां गृह्यमाणायां** ततः परे **उत्तरस्य शंयोः प्राक् ये पदार्थाः कर्तव्या अवगताः, ते बाध्येरन्**, शंय्वन्ततायां ह्यङ्गरीतौ विहितायां ये शंयोः प्राञ्चः पदार्थाः। ते सर्वे कर्तव्या **गम्यन्ते**। उत्तरोऽपि च शंयुः शंयुरेवेति, ततः प्राञ्चः सर्वे पदार्थाः कर्तव्यतयाव**गम्यन्ते**। तद्यदि पूर्वां शंय्वन्ततामङ्गीकृत्य तेष्वेव केचिन्न क्रियेरन् गतबाधः स्यात्। **ननूत्तरस्यामपि गृह्यमाणायां** शंयोः पश्चाद्भाविनाम कर्तव्यतावगता बाध्येत अत आह। **उत्तरस्यां तु गृह्यमाणायां न किंचिद्बाधितं भवति**। नहि ये शंयोः पश्चात्तनास्ते न कर्तव्या इति अस्ति वचनम्। तस्मान्न किञ्चित् बाधितम्। ननु शंय्वन्तांगरीतिः शब्दार्थः, तत्कथं परेषामनुष्ठानमत आह— **शब्दार्थश्च सम्पादितः। एवं उत्तरस्यापि शंयुत्वाविशेषादिति। पत्न्यनुयाजप्रतिषेधार्थवत्वं** चैवं सति भविष्यति। **इतरथानुवादमात्रमनर्थकं स्यात्**। ननु यदि शंय्वन्तशब्दोऽत्र विधीयते कथं तर्हि संतिष्ठतिरत आह। **संतिष्ठतिश्चानुवादः**। तदन्ताङ्गरीतौ हि विहितायां तयैव निराकाङ्क्ष्यात् उत्तरेषामननुष्ठानात् प्राप्तेऽसंस्थेति संस्थावचनमनुवादः ॥४०॥

## प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥४१॥

**नात्राङ्गरीतिर्विधीयते। किं तर्हि सति पूर्णस्तिष्ठतिः**। एवं धात्वर्थविधानात्प्राप्तैव संस्थितिश्रुत्यत्यर्थोनुग्रहीतो **भविष्यति। इतरथा शंय्वन्ततायाः प्रायणीयायाश्च सम्बन्धं कर्तुं संतिष्ठतिरुच्चार्येत**। तत्रास्य तं **वाक्यं स्यात्**। कथं **त्रिविधापि श्रुतिरुत्सृज्येत** न हि तदा धात्वर्थस्य विधानम्। न च तस्यान्यत्र। नापि तत्रान्यस्य। तेन संतिष्ठतिरेवोपरमात्मको विधीयते। **संतिष्ठतिविधाने** च **चोदकोऽङ्गानि प्रापयत्येव। तस्मादाज्यभागन्यायोऽत्र नास्ति, तत्रैवं** सति **पूर्वां शंय्वंततामतिलंघ्य योगच्छेत्तेनागमो बाधितः स्यात**। पूर्वोऽपि हि शंयुः शंयुरेव। शंय्वन्ते च कृते कर्तव्य उपरमः। तत्प्राप्ते निमित्ते यो न कुर्यात्तस्य विध्यतिक्रमः स्यात्। तस्मात्पूर्वेणैव शंयुना शंय्वन्तता स्यादिति ततः परेषां बाधः ॥४१॥

[ १४—उपसदामपूर्वत्वाधिकरणम् । ]

## उपसत्सु यावदुक्तमकर्म स्यात् ।।४३।।

'नान्यामाहुतिं पुरस्ताज्जुहुयात् यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात्स्रुवेणाघारमाघारयति' इति वचनं केनापि कारणेन प्राकृतीनामभाव माशंक्य प्रतिप्रसवं कुर्यादिव प्रतिभाति । नान्यां प्रकृतीभ्यो वैकृतीमौपसदीं कुर्यादाघारादयो हि प्राकृत्यः सर्वेष्टीनां मुखम् । तस्मादाघारादिकाः कुर्यादिति । आघारग्रहणं सर्वप्राकृतहोमप्रदर्शनार्थम् । अतः प्रतिप्रसवार्थमिदं नापूर्वतां कर्तुमलमिति आशंका । एवं चाप्रयाजास्ता इत्यादिप्रतिषेधोऽर्थवान् भवति । उच्यते । पूर्ववाक्यस्याग्निमनीकमित्यादेः शेषोऽयं ''नाग्नेय्या अन्यामाहुतिं पुरस्ताज्जुहुयात् अग्निर्हि सर्वेषां मुखम्। अतोऽग्निमनीकं सोमं शल्यं विष्णुं तेजन'' मित्यनेन क्रमेण होतव्यमित्येवं समाप्ते वाक्ये स्रुवेणाघारमाघारयतीति अनन्यार्थं वचनमपूर्वतां दर्शयति । यद्यपि चास्यैव शेषः स्यात् । तथाप्यत्यन्ताप्रसक्तप्रतिषेध प्रतिप्रसवविधावसंबद्धता स्यात् इत्येवं व्याख्यातव्यम् । न काञ्चित् प्राकृतीमाहुतिं स्रौवाघारादन्यामिह कुर्यात् केवलं स्रुवेणाघारयतीति अप्रयाजास्ता इति चानुवादः, तस्मादपूर्वा उपसदः ।।४३।।

[ १५—अवभृतस्यापूर्वत्वाधिकरणम् । ]

## अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ।।४७।। पू०

अप्सुमत्ता विधानार्थं वचनम् । असति च प्राकृते विध्यन्तेऽपबर्हिषः प्रयाजानिति वचनं बर्हिषः प्रतिषेधात्, इतरेषां च विधानाद्भिद्येत । मत्पक्षे तु बर्हिषः प्रतिषेधमात्रं क्रियत इति लाघवं मन्यते । लिङ्गक्रमाभ्यामेव त्वप्सुमतोः मन्त्रयोः प्राप्तत्वात् । आज्यभागविधानार्थमेव वचनमित्यपूर्वता । परिसंख्यापक्षस्तु निरस्तोऽपि सम्भवमात्रेणोपन्यस्तः । तथा पूर्वाधिकरणेऽपि । अपबर्हिषः प्रयाजानित्यपि बर्हिर्व्यतिरिक्तप्रयाजविधानान्न भिद्यत इति ।। ४७ ।।

[ १६—वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानामन्यतमपुनःश्रुतौ नियमविधित्वाधिकरणम् । ]

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्वा-च्छरवच्च श्रुतितो विशिष्टत्वात् ॥५१॥ सि०**

वैकल्पिकेषु प्राकृतेष्वेकस्मिन्विकृतौ श्रूयमाणे न विधानार्थता युक्ता, प्राप्तत्वात् । न परिसंख्या, त्रिदोषत्वात् । न चात्रापूर्वता सम्भवति । यदि हि खादिरयूपातिरिक्तं सर्वं प्राकृतं न प्रवर्तेत, ततो नियोजनस्याप्यभावात् यूपस्यानर्थक्यं स्यात् तस्मादनुवादमात्रं वचनमिति मन्यते । सिद्धातस्तु । नियमार्थमिदं वचनम् । तेन च कृते कार्येऽर्थाभावात्पलाशादीनामप्रवृत्तिः ॥५१॥

[ १७—विकृतावुपदिष्टैर्द्रव्यदेवतादिभिः प्राकृतद्रव्यदेवतादीनां बाधाधिकरणम् । ]

**सर्वासां च[१] गुणानामर्थवत्वाद् ग्रहणमप्रवृत्ते स्यात् ॥५८॥ सि०**

प्रत्याम्नानस्य बाधकत्वं सिद्धवत् सर्वत्र व्यवहृतम् । किमिदानीं तदेवास्ति नास्तीति चिन्त्यते । तत्र तद्वर्जप्राप्तिनिराकरणात्सर्वप्राप्तौ च सत्यां शास्त्रस्य बाधासम्भवाद् विकल्पः समुच्चयो वा द्वयोरनुग्रहात् । न ह्युपदेशस्तस्य निवर्तकः । परिसंख्यापत्तेः । नाचातिदेशस्यानुमानिकत्वेन निवृत्तिः । न हि प्रवृत्तस्य शास्त्रस्य केनचिदपि निवर्तनं शक्यते । तत्प्रवृत्तिरेव तु यथान्याय्यं विषयान्तरे व्यवस्थाप्यते यथा हवनीयशास्त्रं पदानवष्टब्धे विषये । इहापि तद्वदेव चोदको विषयान्तरे व्यवस्थाप्यत इति चेत् । तथा सति तद्वर्जप्राप्तिरङ्गीकृता स्यात् । सा च निरस्ता । तेन यथा 'नार्षेयं वृणीते' इत्यस्य प्रतिषेधत्वाङ्गीकरणे चोदकेनानुमानिकेन सामान्यविषयेण च प्राप्तस्य वरणस्य शास्त्रीयत्वाविशेषात् तुल्यबलतया विकल्प एव स्यात् । न बाधः । उपपदेशातिदेशयोः प्राप्तमपि प्रयोजनाभावात् नानुष्ठीयत इति चेत् न । यागनिर्वृत्तेःप्रयोजनत्वात् । उपदिष्टेनै×व यागनिर्वृत्तेऽतिदिष्टस्य भवति बाधः । तद्वदिहापि विकल्प एव ×वतन्निर्वर्तितमिति चेत् न । अतिदिष्टस्यापि तुल्यं तन्निर्वर्तक (त्वं) प्राकृतं

१. च शब्दो पनापाठे नास्ति ।

प्रति विधेः प्रयोजकत्वं निवर्तते वैकृते सतीति चेत्-न। निवर्तकस्याभावात्। वैकृतं साधनं तत्कार्यकरं विधेः प्राकृतं प्रति प्रयोजकं बाधत इति चेत्। न। अशब्दार्थत्वात्। न तावद्वैकृतोपदेशे प्राकृतप्रयुक्तिनिवृत्तिः शब्देनोच्यते। नाप्यर्थात्सिद्ध्यति। तादर्थ्यं हि तेन बोध्यते। तादर्थ्यं चोदकेन प्राकृतस्यापि बोधितमबाधितं च। सर्वैश्च प्रबलदुर्बलप्रमाणैः सर्वेषु पदार्थेषु तादर्थ्येन प्रतिपादितेषु पश्चात्प्रयोगविधिव्यापारः। स चार्थमनुसरति, न प्रमाणविशेषम्। प्रयोजनाभावात्। अर्थेन हि नः प्रयोजनं, न प्रमाणेन। प्रमाणस्यार्थोपदर्शनेनोपयोगः न स्वतः। तेन प्रबलेन दुर्बलेन वा प्रमितं कार्यार्थत्वं यस्याबाधितमास्ते, तत्सर्वमविशेषेणैव प्रयुज्यते। अतएव प्रतिषेधपक्षे वरणतद्वर्जनयोस्तुल्यतया विकल्पः। अन्यथा वर्जनमेव प्रतिषेधविधेः प्रयोजकत्वाद् विकल्पाभिधानमयुक्तं स्यात्। तस्मादुपदेशातिदेशयोस्तुल्यबलत्वान्न क्वचित्प्रत्याम्नानस्य बाधकत्वमिति पूर्वः पक्षः। सत्यं। चोदकः प्रकारद्वारतः पदार्थान् प्रापयन् स्वरसतः सर्वविषयः। सत्यं चोपदेशो न परिसंख्यार्थम्। किन्तुकार्यार्थम्। द्रव्यदेवतं कार्यं चोपदिष्टेन निर्वृत्तमिति कृतकरस्य प्राकृतस्य नानुष्ठानं सम्भवति। इतरथा हि नित्यवच्छ्रुतं द्रव्यदेवतं पक्षे बाध्येत। न चानुमानिकेन सामान्यविषयेण विषयान्तरेऽपि सावकाशेन प्रत्यक्षं विशेषश्रुतमनवकाशं बाधितुं विकल्पयितुं वा युक्तम्। अनपेक्षश्रुतत्वाच्च न समुच्चयः। असम्भवदनुष्ठानस्य च प्रापणं व्यर्थमिति नातिदेशः। तस्मात्सामान्यशास्त्रमिव स्वरसतः सर्वविषयोऽपि चोदकः प्रबलविरोधात् विषयान्तरपरतया व्याख्यायते। तद्वर्जप्राप्तिनिराकरणं तर्हि न युक्तम्। युक्तमिति ब्रूमः। तस्य ह्ययमभिप्रायः—न चोदकः पृथक् पृथक् पदार्थेषु व्याप्रियते, येनैकस्मिन् व्यापृते परो वर्जेत। किन्तु सर्वसाधारणेनासौ व्याप्रियते। न तु तस्य व्यापार एक विषय इति। इह त्वेतदुच्यते—साधारणोऽपि व्यापारः प्रबलेन क्वचिन्निरुध्यते 'नार्षेयं वृणीय' इतिवत्। क्वचित् पर्युदासेनेति। तस्मात्कारणान्तरवशेनात्र वद्वर्जप्रापिता। तदुक्तं भाष्यकारेण—यदुक्तमग्रहणात् ग्रहणमिति तदिह सिद्धमिति स्थापितमित्यर्थः। तस्माद्-विरोधात्॥ [ प्रत्यक्षश्रुतं द्रव्यदेवतं चोदकप्राप्तं बाधते ]

[ १८—विकृतौ श्रूयमाणेनौदुम्बरत्वेन प्राकृतखादिरत्वादेर्निवृत्त्यधिकरणम् । ]

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् ॥६१॥ सि०**

समुच्चयसम्भवादयुक्तो बाध इति पूर्वः पक्षः। निरपेक्षत्वावगमात् न समुच्चयः। तस्माद्बाध एवेति सिद्धान्तः। किं च चोदकप्राप्तस्य यूपस्य प्रकृतिद्रव्यविधानमेतत्। न यूपान्तरविधानम्। तेन समुच्चयशंकैव नास्ति। ये चैकदेशिनः प्राप्तानामबाधिततादर्थ्यानामेव प्राकृतानामनुष्ठानबाधमात्रमिच्छन्तः आद्यात्प्रभृति नास्ति—लुप्तार्थस्य चोदकवचनं चोदकेन पाको न प्राप्यत इत्यादि भाष्यसहस्रदर्शनादवाङ्मुखा दीनाः सन्तः पूर्वाधिकरणे श्रुतमपि सिद्धत्वात् प्रयोजनस्य न करिष्यत इति भाष्यं दुर्लभाभं लब्ध्वा वलितुमुपक्रमन्ते तेऽत्रत्येन पूर्वद्रव्यं न प्राप्यत इत्यनेन, उत्तराधिकरणे यवा नैव प्राप्नुवन्तीत्यनेन भाष्येण विरोधिनां च तच्छ्रुतावशब्दत्वादिति सूत्रेण पुनरवाङ्मुखाः कृता इति वेदितव्यम् ॥६१॥

[ १९—सौमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयावानां निवृत्त्यधिकरणम् । ]

**विकृतौ त्वनियमः स्यात् पृषदाज्यवद्ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् ॥६४॥ पू०**

नात्र व्रीहयो विधीयन्ते गुणसम्बन्धार्थं, तेषां श्रवणमित्याशङ्का। नैकेन वाक्येन यागः, चोदकप्राप्तेषु च व्रीहिषु गुणो विधातुं शक्यते। तस्माद् द्रव्यगुणविशिष्टकर्मविधानाद्यवानामनतिदेशः ॥

[ २०—अग्नीषोमीये पशौ हृदयाद्यङ्गेष्वपि पञ्चावदानाधिकरणम् । ]

**यथाश्रुतीति चेत् न, चोदकेनैकत्वात् ॥७२॥ पू०**

पूर्वपक्षमाह। पञ्चावत्तैव वपा कार्येति। किमत्र विधीयते त्वत्पक्षे सिद्धान्तिना। येनाङ्गेष्वपि पञ्चावदानं मन्यसे[1]। नह्यत्रावदानोद्देशेन

---

१. मन्यते इति लिखितपाठः

संख्या विधीयते, यतः सर्वत्र स्यात्। किन्तु वपोद्देशेन पञ्चावदानम्। उद्देश्यविशेषणस्य चाविवक्षोक्ता नोद्देश्यस्यापि। इतरथा ग्रहस्याप्यविवक्षितत्वात् चमसेष्वपि संमार्गः स्यात्। तस्माद् वपायागापूर्वप्रयुक्तमिदं, नाङ्गयागेषु कर्तव्यमिति। उच्यते। इदमत्र विधेयं अवत्तेत्यनेन निष्ठान्तेन द्रव्यमवदानसंयुक्तं स्त्रीलिङ्गमेकसंख्यायुक्तं चोच्यते। तच्चानूद्य पञ्चसंख्या विधीयते। नावदानम्। तस्य चोदकप्राप्तत्वात्। तस्य चावत्तस्य द्रव्यस्योद्दिश्यमानस्य यदि लिङ्गसंख्यं विवक्ष्येत वपया च विशेष्येत वाक्यभेदः स्याद् ग्रहणाधिकरणन्यायेन। तस्मादवदानप्रातिपदिकस्य पञ्चसंख्या विधीयते। सा च विधीयमाना प्रकरणाद्यागेन गृह्यते। तच्च प्रकरणादिविशेषात्सर्वावदानेषु निविशते। यत्वङ्गेषु द्विर्द्विरवद्यतीति वचनं न तत्पञ्चावत्तस्य बाधकं वपायामिव हिरण्यशकलेन पंचावत्तसम्पादनसम्भवात्। नन्ववत्तैवेत्यत्रैवकारश्रवणात् अन्यनिवृत्तिर्विधेया गम्यते। न पञ्चसंख्यविधानम्। यथा षड्विंशतिरित्येव ब्रूयात् इति। चतुस्त्रिंशद्व्यावृत्त्यर्थं वचनम्। न षड्विंशतिविधानार्थम्। एवमिहापि चतुरवदाननिवर्तकमिदं वचनम्। न पञ्चावत्तताविधायकम्। तस्मात्पञ्चावदानमपि न प्राप्नोति। अन्यपरत्वाद्वाक्यस्य। उच्यते। पञ्चसंख्यैवात्र विधीयते। अन्यथा तद्ग्रहणं प्रमादपाठः स्यात्। अनुवादासम्भवात्। एवकारस्तु न प्रमादपाठ इत्याह। तस्यां च विधीयमानायां चोदकप्राप्तौ नैव भवतीत्यर्थादेवैवकारार्थो लभ्यते। सोऽनुवादः। कथं तर्हि षड्विंशतावेवकारार्थविधानम्। अत आह। यत्र तु द्वे संख्ये प्राप्नुतः यथा चोदकेन समस्य वचनमाम्नानाच्चाश्वस्य शेषिकं चतुस्त्रिंशद्वचनं तत्रैवकारः श्रूयमाणोऽन्यतरन्निवर्तयेत्। तेन तत्रैवकारस्य यः श्रुत्यर्थः, स एव विधेयत्वेन परिगृह्यते। स हि तत्राप्राप्तः तद्विधाने च षड्विंशतिशब्दार्थश्चोदकप्राप्तोऽनुवदितुं शक्यते। इह तु तन्नास्ति।

तस्मादाम्नानसामर्थ्यात्संख्यैवात्र विधीयते। तद्विधावर्थसिद्धत्वादेवकारस्त्वनूद्यते ॥७२॥

इति तन्त्ररत्ने दशमाध्यायस्य सप्तमः पादः।

अथ दशमाध्यायस्याष्टमः पादः

[ १—अनुयाजमहापितृयज्ञयोर्ये यजामहहोतृवरणपर्युदासाधिकरणम् । ]

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥१॥ पू०**

न होतारं वृणीते, नानूयाजेषु ये यजामहं करोतीत्यत्र पूर्वः पक्षः । अयं नञ्श्रुत्या कर्तव्यतां प्रतिषेधति । ये धातुनामनी वृणातिरार्षेयशब्दश्च । ते अपि तामेव विशेषयतः । एवं कर्तव्यतया विध्यर्थेन सम्बध्यमानानि सर्वाणि पदानि स्वार्थवृत्तानि भवन्ति प्रतिषेधे । आर्षेयवरण कर्तव्यं नेति । पर्युदासे तु लक्षणावृत्तानि । यथाऽब्राह्मणमानयेत्यत्र नञ् ब्राह्मणपदं चान्यस्य लक्षणार्थं समुच्चार्येते क्षत्रियादेर्न स्वार्थम् । एवमिहापि नञ्शब्दोऽनुयाजशब्दश्चान्यस्य यजतेर्लक्षणार्थमुच्चार्येताम् । तस्मात्पर्युदासो न ग्रहीतव्यः प्रतिषेध एव । अतश्च विकल्पः । ननु प्रतिषेधेऽपि पर्युदासफलविकल्पो न भवत्येव, यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । अत्र हि दधिशास्त्रे ब्राह्मणजातिरेव वर्णैरुपात्ता । तदुपलक्षिता तु व्यक्तिः । नतु सा वर्णोपात्ता । कौण्डिन्ये तु वर्णोपात्तैव व्यक्तिः । तत्र यद् दधिदानमवर्णमशब्दं कौण्डिन्ये प्राप्नोति । तद्वर्णेन वर्णोपात्तेन तक्रदानेन विरोधाद् बाध्यते । एवमत्रापि यज्ञे ये यजामहं करोतीत्यत्र यजसामान्यं वर्णोपात्तम् । यज्ञविशेषस्तु लक्षणया । नानुयाजेष्वित्यत्र तु वर्णोपात्त एव यज्ञविशेषः । तत्र विशेषे श्रूयमाणो यः प्रतिषेधः । स शाब्दत्वेन शीघ्रत्वात्सामान्यलक्षणावशात् प्रवर्तमानं मन्थरत्वात्तद्विषये बाधते । एवं तावच्छ्रूयमाणेऽपि सामान्यशास्त्रे दौर्बल्यादविकारः कल्पः । चोदकस्त्वश्रूयमाण एव कल्पनीयः कल्पितोऽप्यसावङ्गानि सामान्येन ब्रवीति । सर्वाङ्गसाधारणं हि प्रकारं सामान्यस्थानीयमसौ श्रुत्या वदति । तद्द्वारेण त्वङ्गानां व्यक्तिस्थानीयानामर्थात्प्राप्तिः । तेन न होतारं वृणीत इत्येतद्विशेषेण श्रूयमाणमुपमितकल्पितसामान्यप्राप्तिं बाधते । द्वेधा ह्यत्र प्रतिषेधप्राबल्यं

श्रुतत्वाद्विशेषविषयत्वाच्च। चोदकस्यापि द्वेधैव कल्पितत्वात् सामान्यविषयत्वाच्च दौर्बल्यमिति दूरोत्सारितो विकल्प इति। उच्यते—नकारोऽयं निवृत्तिं ब्रवीति। सा च निवृत्तिः प्रवृत्तिमन्तरेण न सम्भवति। सा तु सामान्यशास्त्रेण वा भवेद् विशेषशास्त्रेण वा भवेत्। ततः किमित्याह। यदि चानुयाजेषु येयजामहो विहितो न स्यात्। तथा सति प्रवृत्तिरेवात्र न स्यात्। नह्यत्र विना शास्त्रेण रागतः प्रवृत्तिः सम्भवति। एवं च प्रवृत्तिपूर्वकत्वात् प्रतिषेधस्याप्यानर्थक्यमेव स्यात्। तस्मादनूयाजहोतृवरणयोरवश्यं शास्त्रप्रवृत्त्या भवितव्यम्। अन्यथा प्रतिषेधस्यैवात्मलाभाभावात्। पुनश्चोदयति—यथा तर्हि ब्राह्मणो न हन्तव्य इति प्रवृत्त्यधीनोऽपि प्रतिषेधः, तामेकान्तेन बाधते। एवमत्रापि प्राप्ताया अपि प्रवृत्तेः प्रतिषेधेन बाधो भविष्यति। प्रवृत्तिपूर्वकत्वाद्धि प्रतिषेधस्य सुतरां बाधकत्वं भविष्यति। पूर्वाबाधेन चोत्पत्तिरुत्तरस्येति न्यायात्। परिहरति—न। कुतः? तत्रार्थाद्धननं प्राप्तं येथच्छं कुर्यां हननं न वा कुर्यामिति। तत्र यदा करोति तदा प्रतिषिध्यते न हन्तव्य इति। नहि तत्र पाक्षिकः प्रतिषेधशास्त्रस्य प्रमेयः। रागत एव वर्जनस्यापि पक्षे प्राप्तत्वात्। तेन न तत्र वर्जनस्वरूपं विधीयते। किन्तु वर्जननियम एव विधीयत इति युक्तो नित्यबाधः। किञ्च तत्रार्थात्प्राप्तस्य भ्रान्तित्वख्यापनेन शास्त्रेण नित्यबाधो युक्तः। इह तु द्वे अपि शास्त्रे नैकस्यापि भ्रान्तिसम्भावना। न चात्रोत्तरबलीयस्त्वमुभयोरपि नित्यप्राप्तत्वेनैकस्मिन् विषये तुल्यवदुन्मज्जननिमज्जनात्। तदुक्तं भाष्यकारेण—प्राप्तिरपि प्रतिषेधे प्राप्ते प्रतिषेधोऽपि प्राप्तौ प्राप्तायामिति। तेन द्वे अपि ग्रहीतव्ये। तयोश्च विरोधाद्विकल्पः। चोदकोप्येवमेव। सोऽपि हि यद्यपि कल्पितः सामान्यरूपश्च तथाप्यावश्यं होतृवरणेपि लब्धात्मेत्यङ्गीकर्तव्यम्। अन्यथा प्रतिषेधासम्भवात्। लब्धात्मा चेच्छास्त्रत्वाविशेषात् न बाधमर्हति। न चे(न्वे)वं शरमयं बर्हिरिति अत्रापि चोदकस्य लब्धात्मकत्वात् न बाधः स्यात्। सत्यमसौ लब्धात्मकः। नतु कुशांशे। तस्मिन् ह्यंशेऽसौ बलवद् विरोधान्न प्रवर्तते। यावदेव बर्हिःकार्यं प्राप्तं तावदेव तत्साधनं तथा शरा विहिताः कुशप्राप्तिं निरुन्धति। इह तु वरणस्यैव प्राप्तिरङ्गी-

कर्तव्या। अन्यथा प्रतिषेधानुपपत्तेरिति। **अपि चैकस्य शास्त्रस्य कर्तव्यता प्रमेया, अपरस्य तु निवृत्तिः। तस्माद् भिन्नविषयत्वात् न बाध्यबाधकभावो** घटपटबुद्धिवत्। नन्वेवमिदं रजतमित्यस्य रजतं प्रमेयं नेदं रजतमित्यस्य तदभाव इति विषयभेदाद्बाध्यबाधकभावो न स्यात्। यथा तु तत्रैकस्यैव द्रव्यस्य रजतता तदनात्मकता च बोध्यत इति धर्मैक्याद् विषयैक्यम्। एवमिहापि होतृवरणस्यैव कार्याकार्यत्वे प्रतिपाद्येते इति युक्तो बाधः। अन्यथा हि सर्वत्रैव लोके वेदे चेदृशविषये भेदसम्भवात् न किञ्चित् कस्यचिद् बाध्यबाधकं वा स्यात्। सत्यमेतत्। ये तु नास्तिकाः।

भावाभावधियोरेकमेयत्वे भावधीर्दृढा।
तथैव भिन्नमेयत्वेनातो बाध्यास्ति धीर्द्वियेति ॥

कुतर्कोक्तिमाश्रित्य सर्वत्रैव बाध्यबाधकभावमपलपन्ति। तन्मतमिह पूर्वपक्षान्वाचयत्वेनोपन्यस्तं न स्वमतमिति। **तस्माद्विकल्पः। न चेदं** प्रतिषेधपक्षे विकल्पाभिधानं **पूर्वपक्षोक्तिमात्रम्**। किन्तु **पारमार्थिकमेव**। तथा च सूत्रकारभाष्यकारावाहतुः—**सर्वप्रतिषेधो वा संयोगात् पदेन स्यादिति**। तत्र हि **प्रत्यक्षवचनेनैवर्क् प्रतिषिध्यते**। न चतुस्त्रिंशदिति ब्रूयादिति। **आनुमानिकी तृचः प्राप्तिः, प्रकरणाम्नानात्**। तथापि **तत्र विकल्प एव सिद्धान्तत्वेनाभ्युपगतः** दुर्बलापि प्राप्तिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलेति। तत्र ह्यन्ते भाष्यकारेणोक्तं ऋचोपि प्राप्तत्वात्पक्षे वैशेषिकं वचनमिति। सूत्रकारोऽप्यृग्वा स्यादनाम्नातत्वादविकल्पश्च न्याय्य इति पूर्वपक्षं वदन् सिद्धान्ते विकल्पाङ्गीकारं दर्शितवान्। ननु तत्रानर्थक्यात्, पाठस्य युक्तो मंत्राङ्गीकारः। इह तु सामान्यचोदकयोर्विषयान्तरेऽपि अवकाशसम्भवात् नानर्थकम्। अत आह—**नानर्थक्येन प्रमाणेन** तत्रचाङ्गीकारः। कुतः? **आनर्थक्यं हि परित्यागे कारणं, नोपादाने**। न ह्यर्थशून्यमुपादेयं भवतीति बलेनोत्तरम्। न हि प्रयोजनानुसारिणी प्रमेयस्थितिरिति भावः। **तस्मात्** प्रमाणबलादेव तत्र विकल्पः इति, इहापि **युक्तो विकल्पः** ॥१॥

**अपितु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥४॥ सि०**

प्रतिषेधे सति शास्त्रस्य पक्षे भ्रान्तिः कल्पयितव्या, विकल्पापत्तः द्विरदृष्टकल्पना च स्यात्। तथा हि प्रतिषेधात् तावत्कल्प्यमक्रियायां कोप्युपकारी भवतीति तथा विधौ कल्प्यं क्रियायामुपकारोऽस्तीति। तस्मात्पर्युदासः श्रेयान्। तत्र हि लक्षणा केवला स्यात्। न त्वदृष्टकल्पना। विरोधो वा अदृष्टकल्पनायाश्च चशब्दाद्विकल्पाच्च शास्त्रस्यापि भ्रान्तित्वापादकत्वात्पदमात्रस्य लक्षणा ज्यायसी, तस्मात्पर्युदासः, ये यजामह विधेश्चोदकस्य च वाक्यशेषोऽयमिति। नन्वर्थैकत्वादितिन्यायोऽत्र नास्ति। येनैकवाक्यता स्यात्, विभागे साकाङ्क्षत्वाभावात्। तथाहि—नानूयाजेषु येयजामहं करोतीति निराकाङ्क्षं वाक्यं पूर्वमपि यज्ञेषु यजतिषु येयजामहं करोतीति निराकाङ्क्षम्। तत्कथमेकवाक्यता? उच्यते-सत्यमयं न्यायोऽत्र नास्ति। तदभावाच्च परमार्थिकमेकवाक्यत्वमपि नास्त्येव। किन्तु यथा दध्ना जुहोतीति अत्र होमः पूर्वेणाग्निहोत्रं जुहोतीति वाक्येन प्राप्तो विपरिवर्तते। तत्र दधि विधीयते। भवति नैतावतैकवाक्यत्वं पुनः संहृत्य जायत इति न्यायात्। संबद्धार्थतयैकत्वमेवमिहापि येयजामहं विपरिवर्तमानमनन्तरवाक्यविहितमनूद्य तदङ्गत्वेन पर्युदासार्थोनूयाजव्यतिरिक्तविषमता विधीयते। तथा चोदकेऽपि यत्प्रकृतिवत् पितृयज्ञेन यजेते तद्वरणवर्जमिति वरणपर्युदासः। प्राकृतप्रकारानुवादेन विधीयते। अथवा ये यजामहः सामान्येन प्राप्यमाण एव यज्ञसामान्येन द्वारेण विशेषेषु लक्षणया प्राप्तुमुपक्रम्यमाण एवानूयाजवाक्येन श्रुत्यैवानूयाजातिरिक्तयज्ञविशेषात् समर्थयता विशेष्यते। अनुयाजवर्जं येयजामहं करोतीति पितृयज्ञेऽप्येवमेव चोदकः प्रकारद्वारेण पदार्थेषु अवतरन् विशेष्यते। तस्मात्पर्युदासः। अत्र ग्रन्थः नन्वनुयाजसम्बन्धेन शब्दस्य समासः प्राप्नोतीति तस्यार्थः। पर्युदासपक्षे समासः स्यात्। नचात्र समासः। येन पर्युदासः स्यात्। तस्मात्प्रतिषेध एवायमिति प्रमाणबलाद् विकल्प एवाश्रीयते।

नित्यो ह्यस्येति भाष्यमाशंक्योत्तरं। तत्राशंकामाह। उच्यते। विभाषेत्यनेन समासो वाक्यं वा भवति। न समास एव। तथा प्रयोगादपि। यदि हि समासलक्षणमेवाश्रीयेत राज्ञः पुरुष इत्ययमप्रयोगः स्यात्। तस्माद्राज्ञः पुरुष इति एतद्वाक्यमपि साध्वेव राजपुरुषः इति समासोऽपि। कस्माद्? उभयोरनुगमात्। यत्र त्वनुगमो नास्ति। तत्रासाधुः प्रयोगः। यथा गावीति। तेनोभयोर्वैकल्पिकत्वादसत्यपि समासे स एवार्थो गम्यते। समासोऽपि स एव एकार्थानां हि विकल्पो न नानार्थानाम्। तेनैकार्थ्यात्समासलभ्यः पर्युदासो सत्यपि तस्मिन् लभ्यत एव तेनासमासत्वमदोष इति शंकां निराकर्तुं भाष्यम्। नित्यो ह्यस्यनञः सुबन्तसम्बन्धे समास इति वार्तिककारो मन्यते स्म। वावचनानर्थक्यं च स्वभावसिद्धत्वादिति। तस्य कोभिप्रायः यावतार्थैकत्वादुभयोरसति वावचने समासेन वाक्यं निवर्तत एव। गोशब्देनेव गावीशब्दः अर्थभेदे हि सत्यन्यार्थस्यान्यार्थेनानिवृत्तेः स्वभावसिद्धत्वाद्वा वचनमनर्थकं स्यात्। एकार्थत्वे तु कथं स्वभावसिद्धिरिति। उत्तरम्। भिन्नार्थावेतौ वाक्यसमासौ। तथाहि वाक्ये राज्ञः पुरुष इति पुल्लिङ्गैकत्वविशिष्टः पुंलिङ्गैकत्वविशिष्टः पुंलिङ्गैकसंख्येन च राज्ञा विशिष्टः पुरुषः प्रतीयते। समासे तु न ज्ञायते किं द्वयोः पुंसोः उत बहूनामिति। तथोत स्त्रिया उत नपुंसकस्येति। तस्माद्वाक्यसमासौ नैकार्थौ। गोशब्देन त्वेक एवार्थः प्रतीयते। तत्र यस्यानुगमः साधुः। इतरेऽपभ्रंशाः। यथैको गोणीशब्द आवपने सास्नादिमति च प्रयुज्यमानोऽनुगमादावपने साधुर्न सास्नादिमति। तथैकस्मिन्नर्थे प्रयुज्यमानयोर्गोगावीशब्दयोरेकानुगमात् इतरासामसाधुत्वम्। तदेवमर्थस्य वा शब्दस्य वा ऐक्ये सति अनुगतेनानुगतं निवर्तते। तथाविधे च विषये शब्दान्तरस्याप्यनुज्ञानार्थं वावचनं क्रियते। अत्र तु राजपुरुष इति लिङ्गसंख्यावियुक्तो वाक्ये नित्यं समास एव साधुः। तद्युक्तो तु राज्ञः पुरुष इति वाक्यमेव। नत्वेकत्र द्वयोः समावेशः। येन वावचनमर्थवत्स्यात्। अत आह कात्यायनः वावचनानर्थक्यं च स्वभावसिद्धत्वा-

दिति। तेन वाक्यसमासयोरर्थभेदात् नानूयाजेष्विति वाक्ये **पर्युदासो नास्ति, समासाभावात्**। तदर्थत्वाच्च पर्युदासस्य। नेति भगवान् पाणिनिरित्यादि भाष्यार्थमाह। **अत्रोच्यते-"समर्थः पदविधिः" इति समर्थयोः समासः।** **सामर्थ्यञ्च** यदि लिङ्गसंख्यादिकं **नापेक्षते राजशब्दस्ततः स्यान्नान्यथा।** **ततः** सामर्थ्यात् **पुरुषेण सह समस्यते। तस्मात्सा**मर्थ्यलिप्सया **लिङ्गसंख्यावियुक्तः श्रूयमाणः समासेऽवयवार्थो** राजा**गम्यते।** भवत्त्वेवं लिङ्गसंख्यावियोगः। तत एव त्वर्थभेदः स्यादत आह। **प्रतीतेस्तुल्यत्वात् एवं सत्यप्येकोर्थः** वाक्ये समासे च राजविशिष्टपुरुषप्रतीते-रैकार्थ्यम्। यथा गोशब्दे लिङ्गसंख्यावियुक्तोऽर्थः। गावीशब्दे तु लिङ्गयुक्त इति एवं। सत्यपि प्रकारभेदे प्रधानार्थस्यैक्यात् एकार्थत्वमेवमिहापि। तस्मा**दुभयोरनुगमः कर्तव्यः।** न वा वचनमनर्थकं **उभयोश्चानुगमात्समासो लभ्यः पर्युदासो वाक्येऽपि** नानूयाजेष्विति **सिद्ध** इत्येकांतेन वरणादेः पितृयज्ञादिषु बाधः ॥ ४ ॥

[ २—सोमे आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशावाज्यभागप्रतिषेधाथ-वादार्थत्वाधिकरणम्। ]

## अपूर्वे चार्थवादः स्यात् ॥५॥ सि०

भाष्यकारेण न सोम इत्यत्र पर्युदासस्तावन्न घटते इत्युक्तम्। तन्न। पशावित्यत्रापि तुल्यमिति दर्शयन्नुपपादयाति—**'तौ न पशौ करोति, न सोमे' इत्याज्यभागयोः पर्युदासो न घटते।** आज्यभागसम्बन्धेन वा पर्युदासः स्यात् पशुशब्दसम्बन्धेन वा आज्यभागसम्बन्धेऽपि पाशुकप्रकृतिवच्छब्दस्यायं शेषः स्याद्, दर्शपूर्णमासविधेर्वा। न तावत्पशुप्रकृतिवच्छब्दशेषतेत्याह—**यदि पशुप्रकरण इदं श्रूयेत तथा सति चोदके न? प्राप्तौ पर्युदासस्येयातां आर्षेयवरणवत् आज्यभागवर्जं प्रकृतिवत्कुर्यादिति। इह तु दर्शपूर्णमास प्रकरणे इदं वर्तते। तत्र यदीयं वचनव्यक्तिः आज्यभागवर्जं दर्शपूर्णमासौ कुर्यादिति दर्शपौर्णमासविधिशेषः स्यात्। ततो**

विधानमाज्यभागयोरनर्थकं स्यात् । पशावित्ययं च प्रमादपाठः स्यात् । अथोच्येत नाज्यभागाभ्यां नञः सम्बन्धः अनाज्यभागौ दर्शपूर्णमासाविति । किं तर्हि ! पशुशब्देन यद्दर्शपौर्णमासयोराज्यभागौ कुर्यात् तदपशौ पशुवर्जितयोरिति । एवमाज्यविभागविधेरयं विशेष इति । एतदपि न युक्तम् । अपशुत्वाद्दर्शपूर्णमासयोः । आज्यभागविधिर्हि दर्शपौर्णमासयोराज्यभागौ विधत्ते । तत्र कः प्रसंग पशोः । तस्मादाज्यभागयोः पशौ चोदकप्राप्तयोः प्रतिषेधः । ततश्च पशावाज्यभागयोर्विकल्प इति स्थितम् । पूर्वपक्षस्तु सोमेऽपि प्रतिषेधः स्यात् । दीक्षणीयादिगतावाज्यभागौ सोमस्यापि सम्बन्धिनावेव वाजपेयस्येव सप्तदशारत्निता । तेन तादृशसमम्बद्धप्रतिषेधोयमिति । सिद्धान्तमाह—आनर्थक्यात्तदंगेष्वित्ययं न्यायोत्र नास्ति सोमे, येन प्रतिषेधः स्यात् । तत्र हि वाजपेयस्येति षष्ठ्या सामान्येन सम्बन्ध्युपात्तः । तस्य च सप्तदशारत्निता विधीयते । सम्बन्धमात्रं चांगांगस्याप्यस्त्येवेति युक्तो यूपे निवेशः । इह तु आधारत्वेन सोमः श्रूयते । न सम्बन्धिमात्रतया । न च परम्परासम्बन्धेऽस्त्याधारत्वमिति साक्षादेवायं सोमसम्बन्धः प्रतीयते । स चाप्राप्त इति प्रतिषेधासम्भवः । तस्मादर्थवादार्थं सोमग्रहणम् ॥५॥

[ ३—अतिरात्रे षोडशिग्रहणप्रतिषेधाधिकरणम् । ]

## शिष्टा तु प्रतिषेधः स्यात् ॥६॥

प्रथमेऽधिकरणे पर्युदासः, द्वितीयेऽर्थवादः क्व तर्हि प्रतिषेध इति । तं दर्शयति—तृतीये प्रतिषेधः गृह्णाति न गृह्णातीति । ननु विधिप्रतिषेधयोर्व्याघातात्तत्रापि पर्युदासः स्यादिति पूर्वपक्षमाशंक्याह— नहि तत्र पर्युदासो भवति । तथाहि यदि तावदनतिरात्रे गृह्णाति षोडशिनमिति पर्युदासः स्यात् । अतिरात्रे न गृहीतव्यः । तत्र विधानानर्थक्यं षोडशिनः । अथाषोडशिनमतिरात्रे गृह्णातीति तथाप्ययमेव दोषो विधानानर्थक्यमिति । तस्मात्प्रतिषेधः ॥६॥

[ ४—जर्तिलयवाग्वादिनिषेधस्य पयोहोमविध्यर्थवादत्वाधिकरणम् । ]

**न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च ॥७॥ सि०**

पूर्वपक्षमाह । चतुर्थेऽपि नास्ति तावत्पर्युदासः । तथा हि जर्तिलादिसम्बन्धेन वा नञ पर्युदासः स्यात् । आहुतिशब्दसम्बन्धेन वा । जर्तिलादिसम्बन्धेऽपि जर्तिलादिविधेर्वा शेषः स्यात् । पयोविधेर्वा होमविधेर्वा । तत्र तावदजर्तिलयवाग्वा जुहुयात् इत्यनेन सम्बन्धेन पर्युदासाभावः । नह्याहुतिशब्देन समस्तस्य जर्तिलादिना सामर्थ्यमस्ति । उपेत्यापि ब्रूमः । न तावज्जर्तिलादिविधेरयं शेषः । नह्यजर्तिलयवाग्वा जर्तिलयवाग्वेति सम्बन्धः सम्भवति । नापि पयोविधेरित्याह । यदि पयोविधेर्होमे पयश्च जर्तिलयवागूश्च प्राप्नुयात्तथा सति पर्युदासः स्यात् । न चैतयोः प्राप्तिः, पयसस्तु केवलस्य प्राप्तिः । अथैवमुच्येत अजर्तिलयवाग्वा जुहुयादिति होमविधेरयं शेष इति ततो जर्तिलविधानमनर्थकं किं हि तेन विहितेन । न च युक्तमानर्थक्यं तत्र तावज्जर्तिलसम्बन्धेन पर्युदासः । अथैवमुच्येत अजा नाहुतिः कर्तव्येति तथासति होमस्यैवाभावात्सर्वमेव जर्तिलविधानं पयोविधानं च न घटते । तस्माज्जर्तिलयवाग्वा जुहुयादिति विस्पष्टविधानात् पृथक् वाक्यीभूतेन विधाना विहिता यवागूरनेन प्रतिषिध्यते । निषिध्य च पयो विधीयते । तस्माज्जर्तिलयवाग्वा पयसा वेति विकल्पः । उच्यते-अर्थवादोऽयं पयोहोमस्तुतये । न जर्तिलयवागूः स्तुतये निन्द्येत च । कथमित्याह । अनाहुतिर्वै जर्तिलाश्चेत्यनेनाहुतिवचनेन हि प्रतिषिद्धस्य विकल्पं त्वमिच्छसि । स च पयसा जुहुयादित्यनेनैव लभ्यते विकल्पो विनापि प्रतिषेधवचनेन । तस्मात् प्रतिषेधोऽनर्थकत्वान्न घटते । सर्वस्त्वयं पयसा जुहुयादित्यस्य विधीयमानस्य वाक्यशेषत्वेनैव घटते । ननु 'मा' नामानाहुतिर्वै जर्तिलाश्चेत्यादिप्रतिषेधोऽभूद्वैयर्थ्यात् । तेनास्यान्यनिन्दात्वेन पयःस्तुत्यर्थतयैकवाक्यता पयोविधिना घटते । यस्तु जर्तिलयवाग्वा जुहुयादिति विधिर्याच तस्य स्तुतिः न ग्राम्यान् पशून्

हिनस्तीति तयोः कथं पयोविधिशेषता। सूत्रकारोऽपि शिष्ट्वा तु प्रतिषेधः स्यात् इत्यस्य लक्षणस्यापवादतया न चेदन्यं प्रकल्पयेत् प्रकृतावर्थवादः स्यादिति वदन्नत्र एवार्थवादतामाह—न पूर्वस्य विधेरत आह—**यथा देवदत्तः शोभनो विद्वानित्युक्त्वा एवं गुणविशिष्टोऽपि यज्ञदत्तमपेक्ष्याविद्वानशोभनश्चेति।** तत्र हि ये **देवदत्तस्य निन्दास्तुती न ते देवदत्तार्थे** देवदत्तं विधातुं प्रतिषेद्धुं **वोच्यार्येते।** किं तर्हि ? यज्ञादत्तार्थे। **एवमत्रापि** न केवलं निन्दामात्रमेव **निन्दास्तुती** द्वे अपि **पयोविधानार्थे** जर्तिलयवाग्वा होतव्यं अहिंसा तत्र गुणो लभ्यते। एवंगुणापि सा पयोपेक्ष्यानाहुतिः। तस्मात्पयसा होतव्यमित्येवमेकवाक्यत्वे सम्भवति नानेकदृष्टानुबन्धिवाक्यभेदाङ्गीकरणं युक्तमिति मत्वा भाष्यकारेणास्य सर्वस्यार्थवादता दर्शितेति ॥७॥

[ ५—त्र्यम्बकहोमादिष्वभिघारणादीनामर्थवादत्वाधिकरणम्। ]

## पूर्वैश्च तुल्यकालत्वात् ॥८॥ सि०

होमाभिघारणयोर्विधेयत्वमविवादम्। अतो होतव्यमिति चाभिघार्या इति चैतौ शब्दौ नार्थवादार्थौ किन्तु विध्यर्थौ। तत्समानकल्पत्वाच्च न होतव्यं नाभिघार्या इत्येतावपि विध्यर्थावेव। किं च यदभिघारयेद् रुद्रायास्ये पशूनभिदध्यादित्यभिघारणनिन्दा कथं तद्विधेः शेषो भवेत्। विपरीतत्वात्। तस्मात्प्रतिषेधशेष एवायमिति विकल्पः। यत्तु पुनः कीर्तनं तूष्णीं होतव्यमिति तद्गुणविधानार्थं अभिघार्या एवेत्यत्र त्वनुवादमात्रमिति। उच्यते। मीमांसासम्बन्धान्न द्वयमपि विधानार्थं, तेन तूष्णीं होतव्यमभिघार्या एवेत्येतावेवान्यशेषत्वाद् विधी न निन्दापि गुणवत्तरत्वज्ञापनेन स्तुत्यर्था ईदृशमभिघारणं गुणवत्तरं यत्संतमपि दोषमतन्त्रीकृत्य कर्तव्यमिति तस्मादत्राप्यर्थवादत्वमिति॥८॥

[ ६—आधाने निन्दावादेन, विहितसामगानप्रतिषेधात्सामविकल्पाधिकरणम्। ]

## उपवादश्च तद्वत् ॥९॥ सि०

नात्र सामगानं निन्द्यते। किन्तु गानस्य ब्रह्मकर्तृता निन्द्यते। सा च न

केनचित्प्राप्ता । तस्मात्प्रतिषेधपर्युदासयोरसम्भवादिदमप्यर्थवादार्थमिति मन्यते। विध्यन्तरशेषत्वाभावात्—अर्थवादता न सम्भवति। तस्माद् ब्रह्मग्रहणं ब्राह्मणपरत्वेनोद्गातरि व्याख्याय सामगानस्यैवायं निन्दाद्वारेण प्रतिषेध इति विकल्पः ॥६॥

[ ७—पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वपर्युदासाधिकरणम्। ]

## दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदान-होमपाकप्रतिषेधः स्यात् ॥१२॥ पू०

ज्योतिष्टोमप्रकरणे 'दक्षितो न ददाति न जुहोति न पचतीति' इति श्रूयते नाग्निहोत्रादिसन्निधौ। तस्मात्तौ न पशावितिवत् तत् प्रतिषेध एवायम्। स चाविशेषात् सर्वेषामथवा क्रत्वङ्गानि दीक्षितस्यैव विहितानीति तदतिरिक्तानां प्रतिषेधः। अथवा क्रत्वर्थानामपि। चोदकप्राप्तानामानुमानिकत्वात्प्रतिषेधः। अतश्च विकल्प इति। सिद्धान्तस्तु। सत्यं प्रतिषेधः। स तु प्रकरणात् क्रत्वर्थः अपशब्दमांसभक्षणादिप्रतिषेधवत्। पुरुषार्थत्वे हि विकल्पः स्यात्। प्रकरणं च बाध्येत। क्रत्वर्थोऽपि यदि क्रत्वर्थानां प्रतिषेधः स्यात्, तथापि न होतारं वृणीत इतिवत्तदवस्थो विकल्पः स्यात्। अग्निहोत्रादीनामयं प्रतिषेधः क्रत्वर्थतया विधीयते। पुरुषार्थस्यापि कर्मणः प्रतिषेधः क्रत्वर्थो भवतीत्युक्तं व्याकरणाधिकरणे।

स्त्र्युपायमांसभक्षादि पुरुषाथमपि श्रितः।
प्रतिषेधः क्रतोरङ्गं इष्टः प्रकरणाश्रयात् ॥ इति।

यत्तु कर्त्रधिरणे न ह्यन्यार्थायां प्रवृत्तौ प्रतिषेधोऽन्यार्थो भवतीत्युक्तं तदौत्सर्गिकं क्वचिदपोद्यत एवेत्यविरोधः। तेन प्रतिषेधस्य क्रत्वर्थत्वादग्निहोत्रादीनां त्वातदर्थत्वान्नित्यं दीक्षितस्याग्निहोत्रादिवर्जयितव्यमिति न विकल्पः। तेन फलतः पर्युदासलाभात् पर्युदासोऽयमित्युक्तं सूत्रभाष्यकाराभ्याम्। न तु पारमार्थिकः पर्युदासोऽयम्। दूरस्थत्वात्प्रकरणबाधालक्षणाप्रसंगाच्च। न च वाक्यबलादुत्कर्षः। तस्य प्रतिषेध एवोपपन्नतरत्वात्।

श्रुत्यर्थलाभात् । न चार्षेयाधिकरणवत् अत्र विकल्पापत्तिः येन लक्षणया पर्युदासः स्यात् । क्रत्वर्थत्वात्वात्प्रतिषेधस्य पुरुषार्थत्वाच्चाग्निहोत्रादिरित्युक्तमिति ॥

[ ८–ज्योतिष्टोमादौ विशेषविहितवर्त्मादिना सामान्यविहिताहवनीय-बाधाधिकरणम् । ]

## अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत् संदिग्ध-मारद्विशेषशिष्टं स्यात् ॥१६॥ सि०

गतो नञ्प्रसंगः । इदानीं प्राप्तिबाधसामान्यस्य विशेषेण बाधश्चिन्त्यते । **नन्वदृष्टार्थत्वात् पदाहवनीययोर्न विकल्पो न बाध्यबाधकभावः, किन्तु समुच्चय एव विरोधाभावात् । तेनानारभ्यमिदमधिकरणमिति । कथमदृष्टार्थता । उत्तरम् । याग आधारं नाक्षिपति विनाप्याधारेण, सिद्धस्नानत्वात् ।** शक्यते ह्यप्रतिष्ठितेऽपि द्रव्ये होमः कर्तुम् । **यदि चाधारमाक्षिपेत् तथा सत्याहवनीयो नियम्यते । यथाग्नेयोष्टाकपालो भवतीति अष्टाकपालेन** यत्किञ्चित्प्रकृतिद्रव्यमाक्षिप्तं **तत्र व्रीहयो नियम्यन्ते । इह त्वाधारो नाक्षिप्त एव, वचनसामर्थ्याद् विधीयते,** न तु सामान्येनाक्षिप्तो नियम्यते । तेनादृष्टार्थतेति । ततः किमित्याह । **तस्माद्यथा प्रयाजा अदृष्टेनोपहोमादिभिरुपकुर्वंतो नोपहोमादिभिः सह विकल्प्यन्ते, न** चापि तत्र **बाध्यबाधकभावः । एवमिहाप्याहवनीयपदयोः । तथा च 'न देवताग्निशब्दक्रियाणां प्रतिनिधिः'** इत्युक्तम् । दृष्टार्थत्वे हि स्यादेव प्रतिनिधिः । **तेन प्रतिनिधिकाण्डन्याये स्थिते समुच्चयस्यैव युक्तत्वात्** कथमिदमधिकरण**मारभ्यते** । तेनाविरुध्यमानं विकल्पो बाधो वेति । **उच्यते— सत्यमाग्नेयोऽष्टाकपालो भवतीति । अनेन** यथाप्रकृति **द्रव्यापेक्षस्तथा न यागेनाक्षिप्त आहवनीयः तथापि नानाकांक्षितः सम्बध्यते** । तथाहि**—यदाहवनीय इति सप्तम्यन्तं साकाङ्क्षं जुह्वतीत्यनेन निराङ्क्षीक्रियते । जुह्वतीत्यपि साकाङ्क्षमाहवनीयेन निराकाङ्क्षीक्रियते** । कथमित्याह**—यदि ह्यत्राकाङ्क्षा**

न स्यात् तथा सति यदाहवनीये जुहोतीति सम्बन्ध एव न स्यात्। तेनाधाराधेयत्वेनाकाङ्क्षावशादेव सम्बन्धः। ततः किमित्याह। स चाहवनीयो विधीयमानो होमस्य दृष्टेनैवोपकरोति। द्व्यवदानस्य ह्याधेयस्याधारतां प्रतिपादयति। तेनादृष्टार्थयोरपि पदाहवनीययोराधारद्वारत्वात् न समुच्चय इति। एतमभिप्रायमबुध्वा दृष्टार्थतां मत्वा चोदयति। एवं वर्ण्यमाने कामं सिध्यतो बाधविकल्पौ। प्रतिनिधिस्तु प्राप्नोति, दृष्टार्थत्वाद् द्रव्यान्तरवदिति। उच्यते। युक्तं द्रव्यान्तरेषु। तत्र ह्याग्नेयोऽष्टाकपालो भवतीति अयं यागः फले चोदितः। तत्र यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि, तदापि यागचोदना तन्निर्वृत्त्यर्थं द्रव्यमाक्षिपति। द्रव्येण विना यागो न निर्वर्तत इति। सति चाक्षेपे युक्तः प्रतिनिधिः। यदा त्वाहवनीयः प्रक्रान्ते कर्मणि नास्ति तदा यागचोदना नाक्षिपत्याहवनीयं विनाप्याहवनीयेन यागस्योपपद्यमानत्वात्। तेनानाक्षिप्तत्वात् नास्त्याहवनीयस्य प्रतिनिधिरिति। नन्वेतन्न्यायेन यदि यागचोदनयानाक्षिप्तत्वादप्रतिनिधिः। ततो देवताया प्रतिनिधिः प्राप्नोति, यागेनाक्षिप्तत्वात्।

तत्र केचिद्वर्णयन्ति—सादृश्येन प्रतिनिधिः। तद्यदि मुख्यदेवताशब्दो न स्मर्यते ततस्तस्य सादृश्यमेव न ज्ञायते इत्यशक्यत्वान्न प्रतिनिधिः। अथ तु स्मर्यते—तथा सति लब्धे मुख्ये स एवोच्चारणीयः, न प्रतिनिधिरिति। इदं मतं दूषयति। एवं वर्ण्यमाने यदा व्रीहयो नष्टा प्रक्रान्ते कर्मणि तत्र वचनसामर्थ्यात् यागोऽवश्यं समापनीयः। न च व्रीहीन्स्मरति कीदृशा व्रीहय इति। तेषां चास्मरणात् न शक्नोति सादृश्यं सम्पादयितुम्। तत्र किमीदृश्यामवस्थायां यागो नैव कार्यः। न चेदृश्यवस्थैव नास्तीति प्रत्यवस्थातव्यम्। कदाचिद्धि विद्यते चित्तभ्रेषात्। तस्मात्सादृश्याभावाद्देवतायाः प्रतिनिधिर्नास्तीति। एतदयुक्तं। तेनान्योपपत्तिर्देवतायाः प्रतिनिध्यभावे वक्तव्या। सा च षष्ठे वर्णिता। न प्रतिनिधीयमाना देवता भवतीति। प्राकृतमुपसंहरति—तेनादृष्टार्थत्वादाहवनीयस्य यागचोदनयानाक्षेपात्प्रतिनिधिकाण्डेन नेदं विरुद्धम्। अदृष्टार्थत्वेऽप्याधारत्वात्। तस्य च दृष्टत्वात् पदाहवनीययोरसमुच्चय इति।

अपिचाहवनीयः पदनिरपेक्षः सप्तम्याधारत्वं प्रतिपाद्यते। पदमप्याहवनीयनिरपेक्षम्। तस्मादप्यसमुच्चयः। तद्यथा व्रीहिभिरिति करणकारकविभक्तिः व्रीहीन्यवनिरपेक्षान् एव प्रतिपादयति यागसाधनत्वेन। तथा यवैरिति ततस्तद्वदेवासमुच्चयः। ननु तत्र शक्यत्वात् असमुच्चयः, न निरपेक्षश्रवणात्। अत आह। तत्र यः समुच्चयं कुर्यात् नासौ पुरोडाशं न निर्वर्तयति। शक्यते हि मिश्रैरपि पुरोडाशोऽभिनिर्वर्तयितुम्। किं तु वाक्येन योऽर्थः प्रतिपादितो नैरपेक्ष्यरूपस्तं बाधेत। तेन शब्दादेव तत्र विकल्पः न वस्तुस्वभावात्। एवमिहापि। अपिच वस्तुस्वभावोऽपीह शक्यते वक्तुम्। तत्र व्रीहियवाभ्यां मिश्राभ्यामपि पुरोडाशो निर्वर्तत एव। न तु प्रत्यक्षविरोधः कश्चिदस्ति। पदाहवनीययोस्तु समुच्चये सति पदे वाऽहवनीयो निक्षिप्यत आहवनीये वा पदम्। तत्र यदाहवनीयः पदे निक्षिप्तो होमाधिकरणं भवति, आहवनीयेन पदस्य व्यवधानात्। तदा पदमधिकरणं न स्यात्। एवं पदेऽपि होमाधारे वक्तव्यम्। तस्मान्न वस्तुतो नशब्देन पदाहवनीययोः समुच्चयो घटत इति युक्तमधिकरणम्। उदाहरणे तु चोद्यते। पदे जुहोति 'वर्त्मनि जुहोति' इतीदं जुहोतिश्रवणं तुल्यमाहवनीयपदयोः। एकत्रापि होमसामन्यमन्यत्रापि तदेव। तस्मादत्र सामान्यविशेषभावाभावाद् बाध्यबाधकभावो न घटते। अन्यत्तूदाहरणं मृग्यम्। यत्र सामान्यविशेषौ स्तः। तस्मादत्र सामान्यविशेषभावाभावाद् बाध्यबाधकभावो न घटते। तदुच्यते-गार्हपत्ये पत्नीसंयाजान् जुहोतीत्यत्र हि पत्नीसंयाजशब्दो याग विशेषमेव ब्रूते श्रुत्या। यदाहवनीये जुहोतीत्यत्र सामान्यमेव श्रुत्या। न विशेषः। तेनात्र बाध्यबाधकभावो घटते। कथं पुनर्बाधो यावता द्वयोरपि शास्त्रयोः प्रत्यक्षत्वान्न चोदकस्यैवोपदेशेन सम्भवति बाधः। जुहोतिशब्दादाविशेषात् तु पत्नीसंयाजेष्वपि विहित एवाहवनीयः, अतश्च विकल्प एव युक्तः, न बाध इति पूर्वपक्षाभिप्रायमाशंक्याह—यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सामान्यं विशेषेण बाध्यते तथेहापि। कः पुनर्न्याय इति दृष्टान्ते तावद् दर्शयति—तत्र ब्राह्मणशब्देन ब्राह्मणजातिरेव वर्णैरुपात्ता व्यक्तयस्तु लक्ष्यन्ते। कौण्डिन्ये तु

व्यक्तिरेव वर्णैरुपात्ता। ननु तत्रापि कौन्डिन्यत्वं सामान्यमेव वर्णोपात्तम्। अत आह—**न च कौण्डिन्ये किंचित्सामान्यं विद्यते** यत्कौण्डिन्यशब्देनाभिधीयेत। **यथा गोत्वमश्वादिभ्यो व्यतिरिच्यते शाबलेयादीनन्वेति** नैवमत्रास्तीति वैधर्म्योपन्यासः। कथमित्याह—**तच्च गोत्वं प्रत्यक्षेणोपलभ्यते। नचेदृशं कौण्डिन्ये वस्तु विद्यतेऽवान्तरसामान्यं, यत्प्रत्यक्षेण गृहीत्वा शब्दः प्रवर्तेत। तस्मात्कौण्डिन्यशब्देन विशेष एवोच्यते। अपि च वाक्यार्थे पदवचनमिदं** कुण्डिनस्यापत्यं गोत्रमिति। ततः किमित्याह—**वाक्यार्थश्चे-**दस्य वाच्यः, तथासति **नेदं** पदं **सामान्यं प्रत्याययति**, वाक्यार्थस्य विशेषरूपत्वात्। नहि जातिः कुण्डिनस्यापत्यं भवति। **तस्मात्सामान्याभावात्** च सामर्थ्याच्च **विशेष एवानेन शब्देनोच्यते।** तथापि कथं किं बलवत्त्वमित्याह—**तत्र चानन्तर एव कार्यम्।** अभिधेय हि शब्दस्यानन्तरमव्यवहितम्। तद्यत्र विशेषस्यैवाभिधेयत्वं तत्रानन्तरमेव कार्यमासज्यते विशेषस्य हि कार्ययोग इति। **इतरस्मिन्** सामान्यशास्त्रे **सामान्येन** कार्ययोगी **विशेषः** पश्चाल्लक्षणया **प्रकरणादिभिः** सहायैर**वच्छेत्तव्यः। तस्मात्तत्र विप्रकर्षः। इह तु सन्निकर्षः।** दार्ष्टान्तिके योजयति—**अनेन न्यायेन** पत्नीसंयाजेषु **विशेषश्रुतेन गार्हपत्येनाहवनीयो** बाध्यते। **अथवेदमेवोदाहरणं सम्भवति।** अत्राप्यस्त्येव बाध्यबाधकभाव असत्यपि सामान्यविशेषशब्दे। **आहवनीयो** हि **पवमानेष्ट्यादिभिरुत्पादितः प्रयोजनमपेक्षते। तस्य तादृशस्यानारभ्यवादेन। देवताधिकरणभावो होमेषु विधीयते** सामान्येन। **इह तु पदविशिष्ट** एव **होम** उत्पद्यते। **तत्राहवनीयो न शक्यते विधातुम्। पदेन होमस्य** व्याप्तत्वात्। नन्वाहवनीयोऽपि विधीयते। स कथं बाध्यते। अत आह—**आहवनीयो हि विधीयमान उत्पत्तिवाक्येन यादृशा होमा अवगताः, तादृशाननूद्य विधीयते।** ये शुद्धोत्पन्नास्ते तथैवानूद्यन्ते। येऽपि सहैवाधारणेनोत्पन्नाः। तेऽपि तथैव। ततः किमित्याह— **तत्र शुद्धेष्वाधारविधुरेषु विधातुमाहवनीयो युज्यते।** योग्यत्वात्। **अधिकरणोत्पन्नेषु ये साधिकरणा एवोत्पन्नास्तेषु न घटते।** अयोग्यत्वात्। **तस्मादत्राप्यस्त्येव बाध इति आहवनीयशास्त्रं** विषयान्तरपरं भवति। **यदा चैवं प्रत्यक्षमपि सामान्यशास्त्रं**

विशेषशास्त्रं परिहृत्य नीयते। तदा आनुमानिकःसामान्यविषयश्चोदकः प्रत्यक्षस्य विशेषविषयस्य च शरमयं बर्हिरित्यादेर्विषयं परिहृत्य न नीयत इति यत्कैश्चिदुच्यते तच्चित्रम्। यच्चेह प्राप्तबाधवाचोयुक्तेरालम्बनं, अभिधानाविशेषात् प्राप्तिः। तथापि निःसदिग्धशास्त्रान्तरविरोधात् भाष्योक्तसंदेहत्रयापगमसापेक्षस्याविलम्बितत्वात् ऐदमर्थ्याभावाद् बाध इति। तच्चोदकेऽपि शक्यमेव वक्तुं सामान्यरूपत्वादिति आस्तां तावत् ॥१६॥

[ ९—वैमृधादिषु साप्तदश्यपुनःश्रवणस्यानारभ्याधीतसाप्तदश्योपसंहारार्थत्वाधिकरणम्। ]

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥१७॥ पू०**

क्लृप्तोपकाराः सामिधेन्योऽनारभ्यवादलब्धसाप्तदश्यसंबन्धा विकृतिषु पुनः श्रूयमाणा आज्यभागवदपूर्वतापरा इति मन्यते। सिद्धान्तस्तु। नात्र सामिधेन्यो विधीयन्ते। किं तर्हि साप्तदश्यम्। नन्वनारभ्यवादेन तदपि विहितम्। नेत्युच्यते। सामिधेनीनां हि साप्तदश्यमनारम्यवादोक्तम्। न क्रतूनाम्। तद्यावदेव सामिधेनीद्वारं सर्वक्रत्वर्थं कल्पयितुमुपक्रम्यते तावत्प्राकरणिकेन वाक्येन क्रतुविशेषैदमर्थ्ये कृते क्षीणार्थापत्तिर्न क्रत्वन्तरसम्बन्धं कल्पयति। तस्मात् साप्तदश्योपसंहारार्थमिदं, नापूर्वार्थमिति। पश्वादिषु प्राकृताङ्गानामबाधः। किमर्थस्तर्ह्यनारभ्यवादः सामिधेनीसम्बन्धार्थः। यद्यपि प्राकरणिकेनैव क्रतुविशेषसम्बन्धः सामिधेनीसम्बन्धश्च साप्तदश्यस्य सिद्ध्यति। तथापि वाक्यद्वयाम्नानात् एवं विज्ञाय कृतमभ्युदयकारीति विज्ञायतेऽर्थवादप्ररोचित(विधि)वदिति ॥१७॥

[ १०—क्वचिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्यानारभ्याधीतस्वाहाकारानुपसंहारकत्वाधिकरणम्। ]

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥२०॥**

पूर्वन्यायसम्भवाशङ्कया कस्यचिदिहाप्युपसंहारबुद्धिः स्यात्। सा

व्यावर्तते । अनारभ्यप्रदानसंयोगेन स्वाहाकारवषट्कारौ श्रूयेते। सोऽनारभ्यवादो मन्त्रेण न शक्यो विशेष्टुम् । मन्त्रस्य प्रमाणान्तरप्राप्तमप्यर्थं प्रकाशयितुमेव सामर्थ्यम् । नानारभ्यवादं विशेष्टुम्, अविधायकत्वात् । नहि विधायकाविधायकयोर्विशेषणविशेष्यता घटते । ननु पशुविधेश्छागमन्त्रस्य सेद्धैवात आह—न चात्र 'छागो वा मन्त्रवर्णात्' इत्ययं न्यायोऽस्ति । कथम् ? तत्र हि यावदग्नीषोमीयापूर्वं तावन्मन्त्रः प्रयोक्तव्यः । प्रकरणे नित्यवदाम्नानात् । अग्नीषोमीयं पशुमालभेत' इत्यत्र च न कश्चित् पशुजातिविशेषः श्रूयते । तत्रार्थाज्जातिविशेषोऽवश्यं ग्रहीतव्यः । स यद्यनियमेन गृह्येत, ततो यद्यपि चोदना न विरुध्यते । यत्तु नित्यवत् श्रुतं मन्त्राम्नानं तत्पाक्षिकं कृतं स्यात् । तस्माद्यैषा नियमेन पशुचोदना, सा मन्त्रवर्णालोचनेन जातिविशेषपरैव कल्प्यते । तदेवं तत्र छागनियमो न विशेषणविशेष्यतया । कथं । न च मन्त्रविध्योर्विशेषणविशेष्यता । प्राप्तार्थप्रकाशकत्वात् मन्त्राणामित्युक्तम् । अपि च भवतु वा विशेषणविशेष्यता । तथाप्यत्र नास्त्युपसंहारः 'पृथिव्यै स्वाहा' इति न स्वाहापरमिदमाम्नानम् । किन्तु पृथिव्या इत्यनेन देवतोच्यते । सा ह्यप्राप्ता । तदर्थमिदमाम्नातमिति । स्वाहाकारस्तर्हि किमर्थः ? अत आह—तस्याश्च सम्प्रदानत्वात्स्वाहाकारो वषट्कारो वा प्राप्नोति । तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम् । वषट्कारनिवृत्तिपरत्वाच्च वाक्यस्योपसंहाराभावात् । अन्येषु क्रतुषु स्वाहाकारो नास्तीत्याशङ्कैव नास्ति । अत्र भाष्यमेवं[1] समुच्चारणं भवति । पृथिव्यै स्वाहेति न स्वाहा पृथिव्या इति । तस्याभिप्रायमाहुः—स्वाहा पृथिव्या इति यद्येवं श्रयेत तथासति स्वाहाकारस्य प्राथम्यात् उद्देश्यलक्षणापत्तेर्योसावनारभ्यवादेन विहितः स्वाहाकारः तमनूद्यास्मिन् पृथिविदेवत्ये प्रदानविशेषे नियम्येतेति शंक्येत । अस्मिंश्च पक्षे नान्येषु स्यान्नत्वेतादृशमिदं वाक्यमिति ॥२०॥

---

१. पृथिव्यै स्वाहेत्येकं समुच्चारणं भवति । पू. मु. पा.

[ ११—अग्न्यातिग्राह्ययोर्विकृतावतिदेशाधिकरणम् । ]

## अग्न्यातिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ।

यस्यामेव वेलायां प्रकृतौ विधीयतेऽग्निस्तस्यामेव विकृतिष्वपीत्यक्लृप्तोपकारत्वान्नाज्यभागवदपूर्वतापरत्वं सम्भवति । चोदकेनापि तु सम्भवेऽग्नेर्विकृतिषु कासुचिद् विधानात् नास्य चोदकेन प्राप्तिरिति कल्प्यते । अतश्च विकृत्यन्तरेषु अप्रवृत्तिरेवाग्नेरितिग्राह्याणामिति । सिद्धान्तस्तु । अङ्गान्तरवदस्यापि दुर्निवारश्चोदकः किमर्थं तु कासुचिच्छ्रवणमिति । तत्र सूत्रम्—

## ग्रहणं समानविधानं स्यात् ॥२७॥ इति

सामानविध्यस्य च प्रयोजनं गुणकामप्रवृत्तिरिति प्रसिद्धं मीमांसकानाम् । तदाक्षिपति । **यत्समानविधाने गुणकामानां** 'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादीनां यथाप्रकृतिमग्निमाश्रयतां विकृतिसम्बन्धितया श्रवणे तेनापि रूपेण प्रकृतोग्निरिति विकृतावपि प्रकृताविव **प्रवृत्तिरिति** प्रयोजनमुच्यते । **तन्नोपपद्यते**, विस्पष्टप्रयोजनान्तरसद्भावात् । **कथम् ? प्रकृतौ वैकल्पिकोऽग्निः उत्तरवेद्यां वा निधातव्यः स्थले वा । स चोदकेन वैकल्पिक एव** प्राप्नोति । तत्र **पुनर्वचनं नियमार्थं भविष्यति** स्थल एवासु विकृतिषु अग्निर्निधातव्य इति । **यथा खादिरादि पुनर्वचनं नियमार्थम् । यदि ह्यग्निर्द्विरात्रादीनां प्रकरण आम्नायेताग्निरत्र कर्तव्य इति एवं** सति **नियामकं स्यात् । यथा खादिरो यूपो भवतीति । अयं त्वग्निरनारभ्य सेतिकर्तव्यताकः** कामे **विहितः । तं विधायैभिरथातोऽग्निमग्निष्टोमेनानु** यजतीत्यादिभि**र्वाक्यैस्तस्य क्रतुसम्बन्धः क्रियते** । ततः किमित्याह—**एतानि च वाक्यानि अस्मिन्नेवाग्निप्रकरणे** समाम्नायन्ते । **द्विरात्रादीनां तु न प्रकरणमिह विपरिवर्तते । येन द्विरात्रादिषु चोदकेन प्राप्तस्य नियामकानि स्युः । तेन द्विरात्रादीनां चोदकेन वैकल्पिक एवाग्निः । पुनर्वचनं तु यदाग्निस्तदागुणकामानां** प्रवृत्तिरित्येवमर्थमिति । नन्वारभ्याधीतम 'व्युत्तरेऽहन् द्विरात्रस्य गृह्यते' इति वाक्यं वैकल्पिकस्य षोडशिनो नियमार्थमिष्टम् । सत्यं

प्रयोजनान्तराभावात्। इह तु सन्निहितगुणकामप्रवृत्तिप्रयोजनसम्भवान्न दूरस्थ-चोदकप्राप्तोत्तरवेदिनिवृत्तिः प्रयोजनं भवितुमर्हतीति भावः ॥

[ १२—उपस्तरणाभिघारणाभ्यां सह चतुरवत्तसम्पत्यधिकरणम्। ]

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिक-माज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥२८॥ पू०**

दातव्यं नान्यत्। तस्माद्धविष एव चतुरवदानम्। उपस्तरणाभिघारणं त्वधिकम्। न च तेनाधिकेन होमे चतुरवत्तविघातेन षडवत्तापत्तिः। उपस्तरणा-देरहोमसाधनत्वादिति पूर्वः पक्षः। सिद्धान्तस्तु।

**ताभ्यां वा सह स्विष्टकृतः सकृत्त्वेद्विरभिघारणेन तदाप्तिवचनात् ॥३१॥ सि०**

यज्जुहोतीति यदि होतव्यपरतया जुहोतिरनूद्येत। ततो हविरनुवादेन चतुरवदानविधानात्तत एव चतुरवदीयेत, न तु तदस्ति। तथासति हविर्लक्ष-णार्थमुच्चार्येत जुहोतिरित्ययं दोषः स्यात्। तस्मादियं वचनव्यक्ति-र्नास्ति। लक्षणाप्रसंगात्। का तर्हि वचनव्यक्तिः? यच्चतुरवत्तं तज्जुहोतीति। नन्वप्राप्तत्वान्न चतुरवत्तमनुवदितुं शक्यतेऽत आह। तच्चतुरवत्तं हविषो द्विरवादनविधानात् उपस्तरणाभिघारणविधानाच्च प्राप्तं विद्यते। विद्यमान-त्वाच्च तच्छक्यतेऽनुवदितुम्। अनूद्य च तस्य होमसम्बन्ध एवानेन क्रियते। तेन यथा प्राप्तसंख्याकावदानानुवादान्न हविषश्चतुरवदानापत्तिः। चतुरवत्तं जुहोतीत्यनेनार्थप्राप्तेऽवदाने संख्यामात्रं द्विर्हविषोऽवद्यतीत्यनेन विधीयत इत्युक्तं पञ्चमे। तत्कथमिह तत्पूर्वकमिदं चतुरवत्तवाक्यमित्युच्यते, नैष दोषः। द्वेधापि सम्भवादिहैवमुक्तम्, तत्र तथोक्तमिति। तथाहि यदि वा तेन संख्याविशिष्टेऽवदाने विहितेऽनेन तस्य होममात्रं विधीयते, यदि वानेना-वदानविशिष्टे होमे विहिते तेन संख्यामात्रं विधीयते। नात्रपक्षद्वयेपि कश्चिद् गुरुलाघवकृतो विशेषः। नचान्यतरनिर्धारणेन प्रयोजनमस्ति। तथाहि यद्यपि

द्विसंख्याविशिष्टावदानविधानं, तथापि होमोपक्रमतया विधानम्। न स्वातन्त्र्येणादृष्टार्थत्वप्रसंगात्। तेनावदानादिप्रदानान्तानुसमयो न विहन्यत्ते पञ्चमोक्तः। तथा यद्यप्यवदानविशिष्टहोमविधानमिदं स्यात्, तत्तु संख्यामात्रविधानम्। तथापि वचनेनैव हविषि द्विसंख्याविधानात् असंसर्गार्थतया चोपस्तरणाभिघारणविधानात् प्रचयशिष्टचतुःसंख्यानुवादश्चतुःशब्दः तदहोमाङ्गतया चतुःसंख्या विधीयते। केवलं त्ववदानविशिष्टहोमविधानमिति न हविषश्चतुरवदातव्यम्, वाक्यान्तरानुसारेण चतुरवत्तग्रहणात्। अनन्तर्याद्ध्युपस्तरणादिविधेश्चतुरवत्तविधेश्चैकवाक्यता गम्यते। यदिदं चतुरवत्तं तज्जुहोतीति। यद्वा चतुरवत्तं तदेवं सम्पादयेदिति। तस्मान्न हविषश्चतुरवदानम्। तत्र होमो वा चतुरवत्तार्थश्चतुरवत्तं वा होमार्थमिति प्रसङ्गाच्चिन्त्यते। तत्र यदि होमश्चतुरवत्तार्थः स्यात् तदा सत्यदृष्टं कल्पनीयं स्यात्। नहि होमेन चतुरवत्तस्य दृष्टमस्ति प्रयोजनम्। अथ तु चतुरवत्तं होमार्थं ततो दृष्ट एवार्थो होमनिर्वृत्तिः। तत्तु किंचिदप्यदृष्टं कल्पनीयम्। तस्माच्चतुरवत्तं होमार्थमिति। ननु सर्वप्रदानाधिकरणे चतुरवत्तद्रव्यसंस्कारार्थो होम इत्युक्तम्। तेनेदं विरुद्धम्। नहि विरोधः। अवत्तशब्दोऽत्र विशेषणप्रधानः। अवदानं होमार्थं दृष्टोपकारित्वान्न तु विपरीतमिति। यत्तु भाष्यकारेण चतुःसंख्याया होमाङ्गतया विधानमङ्गीकृत्य तदर्थातदर्थविशेषाश्रयणात् साधनमात्रपरिच्छेदेन संख्याया होमाङ्गतोपपत्तेः आज्यस्यापि च संस्कारद्वारेण तत्साधनत्वमस्त्येवेति नावश्यं हविष एव चतुरवदातव्यमिति सिद्धान्तितम्। तदभ्युपेत्य वादमात्रम्। एवमपि शक्यं सिद्धान्तयितुमित्यभिप्रायात्। न तु पारमार्थिकम्। नह्यवत्तहोमविधिपरे वाक्ये अनुवादतयापि गतौ सत्यां संख्याविधानं युक्तम्। अपि चैवं सति कृष्णलेष्वपि प्रधानभूतहोमावैगुण्यार्थं चतुरवदानं कर्तव्यं स्यात्। न च चतुरवत्तस्य इत्यनेनार्थवादेन तद्बाधः शक्यते वक्तुम्। अन्यपरत्वात्। तस्माद्वार्तिकोक्तैव व्याख्या ज्यायसीति। ननु तथासति उपांशुयाजे चतुरवदानं न सिद्धेत्। नैव दोषः। वचनान्तरमनारभ्याधीतं 'चतुर्गृहीतं जुहोति' इति दृष्टमस्तीत्युक्तं चतुर्थे। तेन सर्वेष्वाज्यहविःषु चतुर्गृहीतविधानादुपांशुयाजे चतुर्गृहीतसिद्धिः ॥२१॥

[ १३—उपांशुयाज उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुर-
वत्तसम्पत्त्यधिकरणम् । ]

## साम्नदश्यवन्नियम्येत ॥३३॥ पू०

अनारभ्यवचनं नास्ति । 'चतुरवत्तं जुहोति' इति चैतन्नोपस्तरणादिविधिसन्निधौ श्रूयते। तेन चतुःसंख्याविशिष्टस्य होमविधानमिति कृत्वा चिन्त्यते । अत्र पूर्वः पक्षः । यद्यपि चतुःसंख्या विधीयते । तथापि तत्सम्पादनप्रकारतयोपस्तरणाभिघारणविधिरसत्यपि सन्निधाने योग्यतयैव गम्यते। तयोश्च केवलसान्नाय्यौषधविषयत्वाच्चतुरवत्तमपि तत्रैवोपसंहृतम् । नोपांशुयाजे कर्तव्यमिति । सिद्धान्तस्तु चतुरवत्तमविशेषेण गम्यतेऽङ्गं सर्वहोमेषु । अतो न तस्योपस्तरणभिघारणविधिर्वाक्यशेषो भवितुमर्हति । केवलसान्नाय्यादिषियत्वाद्वाक्यशेषत्वयोग्यत्वाभावात् । तस्मात्सर्वत्र चतुरवत्तम् । तद्यत्रोपस्तरणाभिघारणमस्ति । तत्र न प्रधानद्रव्याच्चतुरवदानम् । अन्यत्र तु हविष एव चतुरवदानमिति ॥३३॥

[ १४—दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणस्यानुवाद-
त्वाधिकरणम् । ]

## पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वात् वैश्यस्तोमवत् ॥३५॥ पू०

पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्चेति । किमयं विधिरुतानुवादः इति । तत्र विधिपक्षेऽर्थवत्त्वमन्यथानर्थवाक्यम् । तस्माद्विधिरिति पूर्वः पक्षः । तत्र च बहवः कल्पाः । एकस्तावदधिकारवाक्यस्य 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इत्यस्य शेषोऽयम् , आभ्यामेवासोमयाज्यधिक्रियते, न सान्नाय्येनेति, असोमयाज्येवाभ्यां न सोमयाजीति, सोऽयमयुक्तः । समताभ्यां हि दर्णपूर्णमासाभ्यां फलं श्रूयते। तन्न । केवलाभ्यां पुरोडाशाभ्यामसोमयाजिनम् उत्पत्तुमर्हति । नापि सोमयाजिनस्तावन्तरेण । वचनस्य तु वक्ष्यमाणन्यायेनान्यथापि सिद्धेर्न वचनबलाद्विकलस्य

फलसाधनता सुकल्प्या । न च नित्ययोः पुरोडाशयोः सान्नाय्यस्य चानित्यमसोमयाजिनं सोमयाजिनं वा प्रति सम्भवति विधानम् । तस्मात्कर्मान्तरचोदना । यावेताविति चैतस्येवरेवतीष्वितिवद्धर्मापेक्षमिति । तदपि लक्षणादोषादेवायुक्तम् । एवं तर्हि याजनोपदेशोयमृत्विजोऽभ्युदयाय भवतु । न । फलाश्रवणात् । न च फलं कल्पयितुं शक्यम् । परस्मैपदेन याजनस्यान्यर्थत्वावगमात् । न च द्रव्यार्जनोपायतया प्राप्तस्य याजनस्य विधिरर्थवान् । न चासोमयाजिनमेव् याजयेदिति परिसंख्या युक्ता । त्रिदोषत्वात् । एवकारात्सैव श्रुतेति चेत् । न । तस्य पुरोडाशाभ्यां सम्बन्धात् सौमयाजिनश्चर्त्विगभावप्रसंगात् । एवं तर्हि कालोपदेशोऽयं प्राक् सोमयागात् पुरोडाशयोः काल इति । तदपि न युक्तम् । वैकल्पिको सान्नाय्यैन्द्राग्नौ यदेको न तदा परः । तत्र नासोमयाजी सन्नयेदिति वचनादूर्ध्वं सोमात्सान्नाय्ये नियतेऽर्थादेव विना वचनेनैन्द्राग्नः प्राग्भवतीति नार्थो विधिना । तस्मादाग्नेयस्य द्वयोः पर्वणोर्विहितत्वादनुवादः । ऐन्द्राग्नस्य तु पौर्णमास्यामप्राप्तत्वात् विधिरिति पक्षान्तरम् । तदपि न युक्तम् । एवकारानर्थक्यात् । नहि विधौ तस्यार्थवत्तास्ति तुल्यसमुच्चारितयोश्चाग्नेयैन्द्राग्नयोरेकस्यानुवादो परस्य विधिरिति वैषम्यमयुक्तम् । तस्मात्कालार्थतैव वरम् ! न चैवं सोमोत्तरकालस्य सान्नाय्यावद्धत्वादर्थादैंद्राग्नस्य प्राक् सोमता सिद्धयति । प्रागपि सोमात्सान्नाय्यश्रुतेस्तदु समेवनयेदिति । ततश्चाविशेषादुभयत्रापि सान्नाय्यवैकल्पिकैन्द्राग्नप्राप्तौ नियमविधिरवकल्पते—प्रागेवेति । इदमपि न युक्तम् । असोमयाजिना कालो लक्ष्येत सान्नायेन तु सोमयाजिनमिति चानेनैकवाक्यत्वं सम्भवत् बाध्येत । तस्मात्तच्छेषोऽयमनुवादः । कर्मान्तराभ्युच्चयबाधात्संगतिः ॥

[ १५—उपांशुयाजे ध्रौवाज्यविधानाधिकरणम् । ]

**उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वात् यथाकामी प्रतीयेत ॥४७॥ पू०**

'आज्यस्यैव नौ उपांशु पौर्णमास्याम्' इत्यर्थवादमात्रम् । सर्वस्मै

वा एतदिति च वै शब्दोपबन्धात् वर्तमानापदेशाच्चाविधायकम् । तस्मादनियमः । मैवम् । असंयुक्तोत्पन्नं ध्रौवमसत्यपि वचने सामर्थ्यादेवाज्यद्रव्यकेषु सर्वयागेषु प्रकृतेषु विनियुज्यते । किमुत यदा वचनमेव तादर्थ्यचतुर्थीयुक्तं विपरिणामलब्धविधिसामर्थ्यं विद्यते । तस्माद्ध्रौवमिति । द्रव्यान्तरस्यार्थिकस्य बाधात्संगतिः ॥४७॥

[ १६—उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतानियमाधिकरणम् । ]

## तद्वच्च देवतायां स्यात् ॥४९॥

विष्णुरुपांश्वित्यादीनामर्थवादत्वाद् वचनान्तराभावाच्च देवतायामनियमः । नाविहिता देवता भवतीत्युक्तम् । तस्माद्देवतापेक्षमिदं प्रकृतेनैकवाक्यतां गत्वा तान्त्रीणामन्यतमां देवतां ग्रहीष्यतीति । अन्यत्रापि अनियमबाधः ॥४९॥

[ १७—उपांशुयाजे वैकल्पिकविष्ण्वादिदेवतापौर्णमासीमात्रकालिकत्वोभयप्रतिपादनाधिकरणम् । ]

## धर्माद् वा स्यात् प्रजापतिः ॥५१॥

का पुनस्तान्त्रीणामिति चिन्त्यते । देवतासमानहेतुकत्वाच्च कालविचारोऽपि सह तेन क्रियते । तत्र सम्प्रतिपन्नधर्मकत्वात् प्रजापतिः । स हि 'यत्किञ्चित्प्राजापत्यम्' इति वचनादुपांशुत्वधर्मकः । उपांशुयाजोऽपि तथा । तस्मात्प्राजापत्यः । मैवम् । न ह्युपांशुत्वधर्मा प्रजापतिः, किन्तु तूष्णींभावधर्मा । 'प्रजापतिं मनसा ध्यायेत्' इत्यस्यार्थवादोऽयम् 'यत्किञ्चित्प्राजापत्यम्' इति । तस्मात्संप्रतिपत्त्यभावान्न प्रजापतिः । मुख्यत्वात्त्वग्निर्देवतेति गम्यते । 'अग्निमुखा वै देवताः' इति । नैवम् । मन्त्रवर्णाविद्वष्णुर्देवता स्यात् । अमावास्या हविश्च स्यात्तत्प्रकरणे, वैष्णवमन्त्राम्नानात् । नैवम् । सत्यं विष्णुर्देवता । न त्वमावास्यायाम्, वाचनिकत्वात्पौर्णमास्याः प्रधानानुरोधेन च तत्रैव मन्त्रः स्यात् । नैवम् । उभयत्र स्यात् । देवताविकल्पश्च व्यवस्थया स्यात् । यदा

विष्णुस्तदामावास्यायाम्, यदा प्रजापतिरग्नीषोमौ वा तदा पौर्णमास्यां स्यात्। कुत एवं तदुच्यते पौर्णमास्यामाग्नेयोग्नीषोमीयौ पुराडाशौ अमावास्यायां त्वाग्नेयेन्द्राग्नौ विहितौ 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति' इति अविशेषेण वचनम्। तस्मात्पर्वद्वयेऽपि आग्नेयादूर्ध्वमुपांशुयाजः। ननु जामितादोषोऽमावास्यायां पाक्षिकः। सोमयाजिनो ह्यैन्द्राग्नाभावात्। एकपुरोडाशामावास्येति नास्ति जामिता तुल्यमिदं पौर्णमास्यामपि। सा पि ह्यसोमयाजिन एकपुरोडाशैव 'आग्नेयो वै ब्राह्मणः' इत्यादिनाग्नीषोमीयस्योत्कर्षवचनात्। तदुभयत्रोपांशुयाजः। तत्राग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवयाज्यानुवाक्यायुगलमाम्नायते कस्यां चिच्छाखायां 'इदं विष्णुः प्रतद्विष्णुः' इति। तेनामावास्यायां विष्णुर्देवता। तैत्तिरीयाणां तु आग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये प्राजापत्यं याज्यानुवाक्यायुगलमाम्नातं 'प्रजापते स वेद' इति। तेन पौर्णमास्यां प्रजापतिर्देवता। तथाग्नीषोमावपि याज्यानुवाक्याम्नानादेव आन्यं दिवो आग्नीषोमायो आद्यवामिति। 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति चानेन पौर्णमासिकस्योपांशुयाजस्य विहितावेवाग्नीषोमौ। देवताविधानार्थं खल्वेतत्। न कालविधानार्थम्। तस्मात्पूर्वद्वयेऽप्युपांशुयाजः। तत्र च देवतानां व्यवस्थितविभाषेति। सिद्धान्तस्तु— सत्यं। मान्त्रवर्णिक्यो विष्णवाद्या देवताः। न तूभयत्रोपांशुयाजः। पौर्णमास्यामेव तु वचनात् 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति। न चानेनाग्नीषोमौ विधीयते। किन्तु कालोऽयमुपांशुयाजस्य विधीयते। उपलक्षणार्थं त्वग्नीषोमग्रहणं मान्त्रवर्णिकीनां देवतानाम्। अथ कस्मात्पौर्णमासीग्रहणमुपलक्षणार्थं व्याख्याय देवताविधानमिदं नाश्रीयते। नाश्रीयते मन्त्रवर्णादेव देवताया लब्धत्वात्। देवतान्तरनिवृत्यर्थे वा वैष्णवप्राजापत्यमन्त्राम्नानानर्थक्यं स्यात्। तच्च युक्तम्। सर्वेषु वाऽऽहवननिगमेषु प्रजापतिमावहेत्यादिश्रवणात् न शक्यं देवतान्तरं बाधितुम्। अपि च जामिवा इत्येतदप्याज्यस्यैव नावुपांशुपौर्णमास्यां यजन्निति प्रकृत्याम्नानात् पौर्णमास्यामेव दधातीति गम्यते। तस्मात्पौर्णमास्यामेवोपांशुयाजः। तत्रैव विष्णवादीनां विकल्पः। यथा प्रधानं हि गुणानां प्रवृत्तिरिति ॥

[ १८—एकपुरोडाशायामपि पौर्णमास्यामुपांशुयाजविधानाधिकरणम् ]

## द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥६२॥ पू०

अन्तरालस्याङ्गत्वात् तस्य चैकपुरोडाशायामभावात् द्विपुरोडाशायामेव स्यात्। अवैगुण्यादिति पूर्वः पक्षः। पौर्णमासीमात्रे काले श्रवणात् सर्वत्र कर्तव्यः। गुणस्तु द्विपुरोडाशा तदा भविष्यति। न तु तद्वशेन प्रधानस्य च संकोचो युक्त इति सिद्धान्ताभासः। सोऽयमयुक्तः। उत्पत्तावेवान्तरालगुणकोऽयमवगतः। स तथैव कर्तव्यः। अनुपादेयश्चायं गुण इति यत्रैवायं सम्भवति तत्रैव कर्म विधीयते। तेनानेकपुरोडाशायामपि। पौर्णमासीश्रवणस्यार्थवत्त्वादुत्पत्तिशिष्टगुणापरित्यागात्तत्रैव स्यात्। सिद्धान्तस्तु—

नैतावुपांशुयाजस्य पुरोडाशौ गुणौ मतौ।
तदभावेऽपि वैगुण्यमतस्तस्य न विद्यते॥
अन्यार्थाविव तौ काललिलक्षिषयात्र हि।
श्रूयेते यस्त्वसौ कालः सोऽङ्गमेतस्य कर्मणः॥
स च तत्रापि नापेतो यत्राग्नेयोऽस्ति केवलः।
तस्मात्तत्राप्यवैगुण्याद्बाधो नोपांशुकर्मणः॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
दशमाध्यायस्याष्टमः पादः समाप्तः।

समाप्तो दशमाध्यायः।



॥ श्रीः ॥

# पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## एकादशोऽध्यायः

[ १–दर्शपूर्णमासादिष्वाग्नेयादीनां समुचितानामेकफलकत्वाधिकरकम् ]

**प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ सि० ॥**

**दशमेऽध्याये** बाधाभ्युच्चयौ वृत्ताविति भाष्यानुभाषणम्। तत्र शङ्का-ननु नाभ्युच्चयो नाम कश्चिच्छास्त्रार्थः। तथाहि 'आमनमस्यामनस्यदेवा इति तिस्र आहुतीर्जुहोति' इत्यनेनामनहोमा विधीयन्ते। अनुयाजाश्च चोदकेन। कस्यार्थोऽभ्युच्चयो यो विचारित इति। तदिदमङ्गीकरोति—**तत्राभ्युच्चयो नाम न किञ्चिद्वस्तुस्वरूपं** शास्त्रप्रमेयं **विद्यते किन्तूपहोमैरनुयाजा**[१] **न बाध्यन्त इति बाधाभावमात्रमभ्युच्चय इत्युच्यते।**

नन्वेवमर्थभेदः स्याद्बाधाभ्युचयचिन्तनात्।
ततश्च लक्षणैकत्वमर्थभेदे कथं भवेत् ॥

अत आह—अस्मिंश्च दशमे **चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता।** बाधाभ्युचयद्वारेणेयन्तोऽत्र पदार्था इति चिन्तितमिति नार्थभेदः। **इहेदानीमेकादशे इयत्ताविशेषश्चिन्त्यते।** इयत्त्वेनावधारितानामङ्गानां विशेषश्चिन्त्यते। कः पुनरसावित्याह—**यत्र त्रयो यागाः** प्रधानभूताः **श्रूयन्ते** यथाग्नेयादयस्तत्र **सेयमङ्गेयत्ता किं तन्त्रेण भवत्युतावृत्त्येति।** अत्र चेयं प्रक्रिया-पूर्वेण षट्केनोपदेशविनियोज्याः

---

१. अनुयाजा मु. पा.

सप्रयुक्तिकाः सक्रमकाः साकल्येनावधारिताः । ततः सप्तमादिनाध्याय-चतुष्टयेनातिदेशिकाः सोहाः सबाधाबाधाश्चिन्तिताः । तदेवं प्रकृतिविकृतिष्वनुष्ठेये पदार्थेऽवधारिते सतीदानीमुभयसाधारण्येन तन्त्रावापप्रसङ्गाः प्रयोग-परिमाणरूपाः प्रस्तोष्यन्ते । अनुष्ठेयेयत्तावधारणाधीनं चानुष्ठानेयत्तावधारण-मिति स्पष्टो (हेतु ?) हेतुमद्भाव इति । ननु दशमानन्तरमङ्गानामेव तन्त्रावापचिन्ता प्रधानकर्मार्थत्वादङ्गानामित्यादिना वक्ष्यमाणा कर्तुं युक्ता तेषामेव दशमे इयत्तावधारणात् । प्रथमे त्वधिकरणे फलं चिन्त्यते किं तन्त्रेणेति । तच्च दशमोक्तेयत्ता न भवति । तस्मात्तस्य दशमेन नास्ति सम्बन्धः । तथाहि-किमेकैकस्य फलम्, उत संहतानामिति, कीदृशो दशमसंबन्धः स्यात् ? एवं द्वितीयादिष्वप्युपकारचिन्ता न सङ्गतेति । उच्यते-यदि समुदितानामेकं फलं ततस्तन्त्रावापचिन्ता घटते । अथ[1] त्वेकैकस्य फलं ततस्तन्त्रं नास्त्येव । क्रत्वन्तरवद्भेद एव स्यात् । तस्मादु-पोद्घातभूतं[2] प्रथममधिकरणमारभ्यते तन्त्रावापसिद्धये । द्वितीया-दीन्यपि तत्प्रसङ्गेनारभ्यन्ते किं संहतान्यङ्गान्येकं क्रतूपकारं [3]कुर्वन्ति उत निरपेक्षाणीति । अथवा तन्त्रावापसामान्येन प्रथममधिकरणं चिन्त्यते तथा द्वितीयादीनि ।

अत्र भाष्यकारेणाग्नेयादीनां स्वर्गकामवाक्योक्तं फलं तन्त्रेण भेदेन वेति सौत्रं विचारमुपन्यस्य चोदितम्-'ननु नैवात्र स्वर्गः फलं श्रूयत' इति । तस्यार्थमाह-यजेतेत्यनेनाक्षिप्तः कर्ता स विशेष्यते स्वर्गकामशब्देन पुरुषवचनेन यथा राजा राजसूयेन यजेत इति राजशब्दः कर्तृविशेषणं तथायमपि । ततः किमित्याह-विशेषणं च कामो राजत्ववत् कर्माङ्गं भवतीति न फलत्वमिति । तत्रोत्तरं भाष्यम्—'न खलु कश्चित्पुरुषः' इत्यादि । तस्यार्थमाह-एवं च कर्तृविशेषणत्वेऽभ्युपगम्यमाने दूषणमुच्यते । असाधारणं हि विशेष-

---

१. अथैक० मु. पा.

२. प्रथमाधि० मु. पा.

३. फलं. क.

णम् । तदिह यदि[1] स्वर्गमेव नित्यं कामयते नान्यानि ब्रह्मवर्चसादीनि तथा सत्यन्यकामानपेक्ष्यानन्यकामनाया असाधारणत्वाद्विशेषणमवकल्पते स्वर्गमेव सः कामयत इति । न चेदृशः कश्चिद्विद्यते यो यावत् प्रयोगं स्वर्गमेव कामयते । अवश्यं ह्यसौ तत्कालेऽप्याहारादिकं कामयते । न चायोगव्यावृत्तिरपि सम्भवति यावत्प्रयोगम् । क्षणिका हि कामना न यावत्प्रयोगमनुवर्तते । न च सन्तानरूपेणाप्यनुसन्धानम् । प्रयोगेऽन्यत्र व्यापृतचित्तस्य तद्भ्रेषावश्यंभावात् । तस्मात्कालद्वारेण विशेषणं न घटते । एवं तर्हि कामनानिमित्तं भवतु कपालनाशवदित्याशङ्क्य भाष्यकारेणोक्तम्, तस्य षष्ठेऽध्याये सूत्रेणैव सूक्तवाकफलार्थिताया निमित्तत्वं परिहरता तुल्यन्यायत्वात् परिहार उक्तः–'फलकामो निमित्तमिति चेन्न नित्यत्वात्' इति (जै. सू. ६. २. ६, १०) । नित्यानां हि सूक्तवाकफलकामनावत् स्वर्गकामनाप्यनित्येति तन्निमित्तता विरुद्धेति । तदाक्षिपति- योऽयं नित्यानित्यविरोध उक्तः, स नोपपद्येत । कथम् ? यस्यापि मते स्वर्गकामशब्देन फलमभिधीयते, तस्याप्ययं नित्यानित्यविरोधो भवत्येव । तथाहि—दर्शपूर्णमासौ यावज्जीवं कर्त्तव्यौ ज्ञातौ पुनः कामेन कामार्थेन कर्तव्याविति विरोधान्न कश्चिन्निमित्तेन फलस्य विशेषोऽस्ति । भवत्वविशेषः, काम्या(ता)नामपि माभूदिति चेत्तत्राह-नचेदृशो [2]नित्यानित्यविरोधो भवति । कथम् ? आग्नेयादय उत्पन्नाः तेषामुत्पत्तिवचने यदाग्नेय इत्यादौ न नित्यत्वमवगम्यते । नापि काम्यत्वम् । ते तु स्वरूपमात्रेणावगता विपरिवर्त्तमाना एकेन वाक्येन यावज्जीवं निमित्तं प्रतिविधीयन्ते; अपरेण स्वर्गं प्रति को विरोधः ? स्वरूपं हि तेषामुभ[त्रान्वय]यान्वययोग्यमिति । नच यावज्जीवस्वर्गकामचोदनयोः परस्परापेक्षा विद्यते । येन य एव यावज्जीविके प्रयोगे कर्त्तव्याः, त एव

---

१. स्वर्ग नित्यमेव मु. पा.

२. अनित्य न.

**काम्येऽपि** तादृशा एव **कर्त्तव्या** इत्यवगमाद् विरोधः स्यात् । **तस्मात्** [१]**काम्यनित्याभ्यामन्योन्यमनपेक्षमाणाभ्यामुत्पत्तिः** केवलापेक्षितव्येत्यविरोधः। तथा नैमित्तिकत्वेऽपि । तस्मादयुक्तमिदं नैमित्तिकत्वनिराकरणम् । **तेन तर्ह्यन्यथा** निमित्तत्वनिराकरणं वर्ण्यते । **स्वर्गकामशब्देन निमित्तं नाभिधीयते । सप्तम्यन्तेन निमित्तमुच्यते** । यथा भिन्ने जुहोतीति । **यद्वृत्तेन वा यस्योभयमिति** । न चायं सप्तम्यन्तो न च यद्वृत्तेन युक्तः। नन्वेवं 'यः कामयेत प्रजायेये'त्यादौ निमित्तत्वं (न) स्यात्, नैव दोषः। अन्वाचय युक्तिरियं दर्शपूर्णमासादिपूपन्यस्ता । मूलयुक्तिस्त्वनन्तरमेव वक्ष्यते, विधिना फलस्यापेक्षितत्वादिति । **तस्मान्निमित्तानभिधायित्वादनेन स्वर्गं कामयमानः पुरुषोऽभिधीयते** । तत्रापि पूर्वोक्तेन न्यायेन पुरुषपरत्वानुपपत्तेर्विशेषणपरत्वम्। तथापि कथं फलपरत्वमित्याशङ्क्य विमृशति **स च पुरुषः किं साध्यत्वेन स्वर्गं कामयते, उत साधनत्वेनेति** चिन्त्यम् ।

**द्विप्रकारापि** लोके **कामनास्ति** किं पुनरनया चिन्तया प्रयोजनम् । **अत आह-तत्र यद्ययं साधनत्वेन स्वर्गमिच्छति** तथा सति पूर्वोक्तेन न्यायेन विशेषण-परत्वे स्थिते स्वर्गकामाधिकरणपूर्वपक्षन्यायात् **प्रीतिविशिष्टेन द्रव्येण यागः साधनीयो** भवति । **तदा च न कश्चिच्छब्दोऽस्ति**, येन फलमभि-धी(येत)यते । **योऽप्ययं स्वर्गकामशब्दः स साधनवचनो** न फलवचन इति **अनेनापि प्रकारेणानारब्धव्यमधिकरणं** फलाभावेन ( तन्त्रावापचि) न्तानुपपत्तेः। तस्मादपि तन्निराकरणाय चिन्तनीयमिदम्। निराकरणमाह-**इदन्तु षष्ठ एव निराकृतम्** । तत्र [२]ह्युक्तम्–स्वर्गस्य साध्यत्वेन कामना। **किं कारणम्? सर्वे ह्येवं कामयन्ते-स्वर्गो मे स्यादिति** । न तु कर्म, तत्साधनं वा सिध्य-त्विति । ननु तत्राप्यस्त्येव कामना अत आह—**साध्ये च मुख्या कामना, साधने तु नान्तरीयिका, साधनेन विना साध्यासम्भवात् । तस्मात् साधने या कामना, सा गौणी** । तेन कामनोपबन्धात्तावत् स्वर्गस्य फल-

---

१. काम्येति नित्या.

२. स्वर्गस्य साधनत्वेन न कामना मु० पा०

त्वम् । किञ्चायं यजेतेति भावनावचनो विधिश्रुत्या पुरुषार्थमाक्षिपति । स चाक्षिप्तः किंशब्दं किमंशं प्रथमं पूरयति । यावत् पदश्रुत्या यागस्तमंशं पूरयति ततः प्रथममेव पुरुषार्थस्तं पूरयति, प्रत्ययश्रुतिबलात् । कथं पुनर्विधिना पुरुषार्थाक्षेपः ? अत आह-यदि किं शब्दो यागेन पूर्य्येत तदा चोदितमपि यागं न कश्चित् कुर्य्यात् । तत्र विधिः प्रवर्तनात्मा व्याहन्येत । तस्मान्न यागस्य किमंशनिपातः । कथन्तर्हि यागस्यान्वयः ? अत आह–तस्माद्यः स्वर्गं साध्यत्वेन कामयते, तेन लक्षणयोपाय आक्षिप्तः । तत्रोपायत्वेन यागो विधीयते-यस्स्वर्गकामस्तदुपायमभिलषति स यजेतेति । तस्मात् कामोपबन्धाद्विशेषाच्च फलमेव स्वर्गः, न साधनं नापि निमित्तम् । अत एव हेतुद्वयात् सति च फले किं तन्त्रम् ? उत भेदेनेति चिन्त्यते । तत्राग्नेयादीनां पृथग् विहितानां पृथगेव फलाकाङ्क्षा किं फलमाग्नेयस्य किं फलमग्नीषोमीयस्येति । यथाकांक्षं च फलान्वयो युक्त इति प्रत्येकमेव फलमिति पूर्वपक्षे प्राप्ते, सिद्धान्तितम्–एकशब्दाभिसंयोगादेषामेकफलत्वमिति । अत्र भाष्यग्रन्थः 'य एषां समुदितानामेकः शब्दो वाचकस्तेनैतान्यभिधाय फलसम्बन्धः कृतः दर्शपूर्णमासशब्देने'ति, तस्य किलायमर्थः–य एषां समुदितानामिति । केषामाग्नेयादीनां समुदितानामेकः शब्दो वाचकः इति दर्शपूर्णमासशब्द इत्यर्थः । तेनैतान्यभिधायेति दर्शपूर्णमासशब्देनाभिधाय [1]फलसम्बन्धः कृतः दर्शपूर्णमासाभ्यां स्वर्गमिति तदयुक्तम्; नहि दर्शपूर्णमासशब्दः समुदायवचनः । यदि समुदायवचनः स्यात् तथा सति समुदायो न द्रव्यं न देवता न क्रिया । किन्तर्हि गुणोऽसौ । ततः किमित्याह–तस्य गुणत्वाद्यागेन क्रियास्वरूपेण सामानाधिकरण्यं न स्यात् । अस्ति च सामानाधिकरण्यं दर्शपूर्णमासयाग इति । तस्मात् समुदायिवचनोऽयम् । समुदायिवचनयजिसामानाधिकरण्यात् । तेनैकशब्दाभिसंयोगादित्येतत् सूत्रमन्यथा वर्ण्यते । भावयेत् । किम् ? स्वर्गम् ।

---

१. सम्बन्ध नास्ति ।

**केन ? यागेन करणेन** दर्शपूर्णमाससंज्ञकेनेत्येवमेकेनाख्यातशब्देन नामसामानाधिकरण्ये लब्धे **विशेष्यविशेषणावस्थेन** तन्त्राभिहितानां फलेनैकेनाभिसंयोगादिति सूत्रार्थः। ततः किमित्याह- **तत्र च स्वर्गः प्रधानभूतः यागः साधनं गुणः।** ततोऽपि किमित्याह-**उपादीयमानश्चासौ गुणत्वादेव।** गुणस्य हि प्रधानं प्रत्युपादानमुचितं न विपरीतम्। अपि च यदाग्नेयादिभिः कुर्यादिति वचनव्यक्तौ प्रत्युद्देश्यं परिसमाप्तेर्वाक्यभेदः स्यात्। **तस्मा**द्यत् स्वर्गं कुर्यात्तदेभिरित्येवमित्युपादीयमानानां **तेषामितरेतरयोगो** विशेषणं तन्त्राभिधानावगतो **विवक्षित** इत्येकफलत्वम्। एवञ्च धात्वर्थविधानाच्छुत्यनुग्रहः [1](अत्र चोद्यग्रन्थः यदि यागो विधीयते।) भाष्यकारोऽपीदमेवोत्तरसूत्रे वक्ष्यति-याऽत्र विधायिका विभक्तिर्यजेतेति, सा फले यागं श्रुत्या विदधाति 'यागे तु फलं वाक्येन विदध्यादित्यादिना'। तस्मादयमेव पक्षः।

अत्र **चोद्यग्रन्थः**—यदि यागो विधीयते दर्शपूर्णमासशब्देन विशेष्टुं न शक्यते, नहि विधीयमानस्य विशेषणम्भवति यत्[2]कारणं **विशेषणमप्यविधीयमानं न भवति। नच द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवतीति। अयुक्तमिदं दूषणं** चोद्यम्, **अरुणादीनामप्ययं दूषणप्रकारः स्यात्,** सम्भवेद् **यथा भवता वर्णितम्।** तत्रापि हि विधीयमानैकहायनी नारुणिम्ना विशेष्टुं शक्यते। अरुणिम्नोऽपि विशेषणस्य विधेयत्वात् विधेयस्य च मिथः सम्बन्धाभावादिति शक्यं वक्तुम्। अपि चानवकाशमिदं चोद्यमित्याह-**बलीयांश्चायमेव** सप्तमनवमाद्योक्तो **न्यायो यद्भावनायां सर्वेषां सम्बन्ध इति।** तेन नाम्नोऽपि यजिमपास्य भावनयैवारुणिमेव क्रयेण सम्बन्धाद् दूरापास्तमिदं चोद्यम्। कथं तर्हि यागविशेषणता ? अत आह–**इतरेतरसम्बन्धस्त्वरुणैकहायनीवत् आर्थः।** तेन चोद्यं तावदनुपपन्नम्। **योऽप्यत्र** परि-

---

१. कुण्डलितांशोऽधिकः।

२. करणं।

हारग्रन्थः किंपुनरत्र विशेषणेन कार्य्यं यावता[१]रूपवतामाग्नेयादीनां संनिधानरूपो दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्दस्तत् समुदायवचनः ? इति तदप्ययुक्तमेव। यथैवाग्नेयादीनां द्रव्यदेवतेन रूपवत्वं एवं प्रयाजादीनामपि। तत्रापि हि न कश्चिद्रूपे विशेषो विद्यते, नापि तत्संनिधाने तस्मादसति विशेषणे प्रकृतत्वाविशेषात् सर्वेषामेव फले[२] विधानं स्यादिति। यदपि चात्रापरितोषादथवेत्यादिना परिहारान्तरमुक्तम्-दर्शपूर्णमासाभ्यां स्वर्गमिति संबन्ध इति। एतदपि भावार्थाधिकरणे निराकृतम्। तदीयेन हि न्यायेन याग एव फले विधीयते। [३]तस्माद्भावनैव सर्वविशेषणविशिष्टा विधीयत इत्ययमेव परिहारः। भाष्यमपि नामवशेनार्थाद्यजेर्विशेषेऽवस्थापनाद्दर्शपूर्णमासाभ्यां स्वर्गमितीयमेव वचनव्यक्तिः फलतः सम्बध्यत इत्येवमभिप्रायमिति सप्तमाद्य एव व्याख्यातमिति ॥१॥

[ २—अङ्गानां प्रधानोपकाररूपैककार्यार्थत्वाधिकरणम् ]

## अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥ पू०

समिधो यजती[४]त्येवमादीनि परस्परनिरपेक्षाण्युत्पद्यन्ते। उत्पद्यमानानि च प्रयोजनमपेक्षन्ते। प्रयोजनापेक्षयां चैकैकमेवाङ्गं क्रतूपकारं साधयतीतरनिरपेक्षम्। कथमित्याह—नात्र[५] प्रधानेष्विव कश्चिच्छब्दोऽस्ति य इतरेतरयोगं कुर्य्यात्। येनैतानि संहत्यैकं कार्य्यं कुर्य्युः, प्रधानविधिविधेयत्वे ह्यङ्गानामपर्य्यायविधानात् स्यात् समुच्चयः।

---

१. रूपवतां नास्ति।

२. विज्ञातमेवेति अधिकः पाठः।

३. तद्भावनैव।

४. यजतीत्या।

५. नत्वत्र ( नह्यत्र ? )

प्रातिस्विकास्त्वेषां विधयः विध्यभावादङ्गत्वानवकल्पनात् । अनङ्गस्य च प्रधानविध्यसंस्पर्शादेकैकस्य परस्परानपेक्षस्य क्रतूपकारः करणानुग्रहाख्यः परमोपकारः करणसामर्थ्योद्बोधनरूपः कार्यं क्रत्वन्तरवदिति पूर्वः पक्षः ।

**अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥ सि०**

इति सिद्धान्तसूत्रम् । एकप्रयोगवचनसम्बन्धादेषामपि पूर्ववदैककर्म्यं संहत्यकारित्वमिति । अत्र चोद्यं भाष्यम्—**नन्वेवं सत्येकार्थत्वादेषां विकल्पः प्राप्नोती**त्यनुभाष्याक्षिपति—**एषा परिचोदना नोत्तिष्ठति** । यदा हि सम्भूय कार्यं कुर्वन्त्युत भेदेनेति विचारसुपक्रम्यैककर्म्यं सम्भूय कारित्वात्मकमनेन सूत्रेणोक्तम् तदा कथमेवं सति विकल्पः स्यादिति चोद्यते ।

अथेदं सूत्रम् अङ्गानां **नेतरेतरयोगं** प्रतिपादयेत् क्रतूपकारं प्रति किन्त्वैकार्थ्यमात्रम् । तथासत्यनेन किं नाम निराकृतं पूर्वपक्षस्य ? ऐकार्थ्यं ह्यङ्गानां पूर्वपक्षिणोऽपि सम्मतमेव क्रत्वर्थत्वाभ्युपगमात् । तस्मादनुपपन्नमिदं चोद्यम् । **यदपि अथ यदुक्तं** चोदनाभेदादङ्गानामर्थभेदो न्याय्य इति, तत् परिहर्त्तव्यमित्यनुभाष्यम् परिहृतम्, तदेकार्थत्वेनेत्युक्त्वा **न परिह्रियते, सर्वाणि च प्रधानस्योपकुर्य्युः,** कारकवद्भिन्नानि च **कार्य्याणि कुर्य्युः । तद्यथा कारकाणि कर्त्रादीनी**त्यादि चोद्यभाष्यम् । तदनुभाष्यमाक्षिपति—**अनेन** ग्रन्थेन **किं सिध्यति पूर्वपक्षवादिनः ?**

ननु कार्यभेदः सिध्यति अत आह—**एवमपि** कार्यभेदे सत्यपि **सर्वाणि** समुच्चितान्येव **प्रयोक्तव्यानि** । ततः किमित्याह—**सा च परिचोदना युक्ता, या स्वपक्षं** साधयति **परपक्षं वा दूषयति** । इह च विकल्पः स्वपक्षः । समुच्चयश्च परपक्षः । न चावान्तरकार्यभेदेन विकल्पस्य समर्थनं समुच्चयस्य वा दूषणं भवति, भिन्नार्थत्वे सुतरां समुच्चयासिद्धेः । योऽपि च तद्यथा कर्त्रादीनीति **दृष्टान्तः, असावपि सुतरामविकल्पं** साधयति, कर्त्रादीनां समुच्चयात् । तेन चोद्यग्रन्थस्तावदयुक्तः । तथायमप्ययुक्तः परिहार-

ग्रन्थः । न च समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते—समिद्यजिः प्रयोक्तव्य इति । अनेन च यदि समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते—समिद्यजिः प्रयोक्तव्यः, तनूनपाद्यजिः प्रयोक्तव्य इति, ततः स्यात् प्रयोजनापेक्षा । सा च भवन्ती भेदेन स्यात् । न त्वत्रैषां प्रयोग उच्यते । किन्तर्हि ? रूपमात्रमाख्यायते । एवंलक्षणको याग इह भवतीति । तत्कस्य हेतोः ? प्रयोगवचनस्य प्रत्ययस्याभावादिति ग्रन्थोऽर्थतः पठितः—सोऽयमयुक्त इति । कथमित्याह—यदि सत्तामात्रमनेन समिदादिवाक्येन क्रियते । न तु तत्र कर्त्तव्यतोच्यते । तथा सति विध्यभावेन प्रयोजननिराकाङ्क्षत्वादेतेषां प्रकरणेन क्रतुसम्बन्ध एव न स्यात् । द्वयोर्हि साकाङ्क्षयोः प्रकरणलक्षणः सम्बन्धो भवति[न]निराकाङ्क्षयोः । विधीयमाना चाकाङ्क्षा तदभावे धात्वर्थस्यैव समानपदस्थस्य भाव्यत्वात्तन्न भाव्यान्तरापेक्षा स्यात् । उक्तञ्च स्वयमेवैतद्भाष्यकारेण 'न चाविहितमङ्गं भवती'ति । तस्मादुत्पद्यमानानामेवैतेषां तिस्र आकाङ्क्षा उत्पद्यन्ते । विधायको नास्तीति चेत्—अर्थवादादिना कल्प्यः । किञ्च यत्र विधायको विद्यतेऽङ्गानाम् 'ऐन्द्रवायवाग्रान् गृह्णीयात्, नानृतं वदेत्' इत्यादौ तत्रापि विकल्पस्यानिष्टत्वात् सम्भूयैक कार्य्यमङ्गानां वाच्यं सिद्धान्तिना । तत्र योपपत्तिः सात्रापि समिदादिषु भविष्यति । [2]किमप्यपिन्यानया विध्यभावोपपत्त्योपन्यस्तया ? उपसंहरति-इत्यनयोपपत्त्या तद्भाष्यं न घटते, यद्विधायको नास्तीति । केचित्त्वाहुः-कार्यभेदाभेदावत्राङ्गानां चिन्त्येते । उत्तराधिकरणे तु विकल्पाविकल्पाविति । ते यदि तावद्भाष्य[3] संमतमर्थं विषयं वदन्ति, ततो न युक्तम् , एवं ह्युपक्रमभाष्यमेव विरुध्यते, किं संभूय कार्यं कुर्वन्ति ? उत भेदेनेति । तथा यथा समेतानामेकं फलं प्रधानानाम्, नैवमङ्गानामिति । तथा साहित्यस्यानुक्तत्वान्न साहित्येन प्रयोजनसम्बन्ध इति । तथा प्रधानकर्माथ-

१. तत्र नास्ति ।

२. किं न० व्या० ।

३. भाष्यसंमतिर्थं विषया ।

त्वादङ्गानामित्यत्रार्थभेदोऽस्तु, तत्रापीहैकार्थ्यादैककर्म्यमित्यनेनाङ्गानां सम्भूयका-रित्वादित्युक्तम् ( ३०३० पृ० ) इति वक्ष्यति । न च सूत्रानुगुण्यम् ? सूत्रं हि पूर्वाधिकरणोक्तं सम्भूय फलसम्बन्धं तुशब्देन व्यावर्त्त्य प्रत्येकसम्बन्धमेव पूर्वपक्षयति, न कार्यभेदम् । न च युक्ता कार्य्यभेदाभेदचिन्ता । कार्य्य-शब्देन हि यदि करणानुग्रहः [1]सामर्थ्योद्बोधनरूपः कथ्यते, ततो न तस्य भेदाशङ्कास्ति । एकस्यैव[2] हि करणस्यैकं कार्य्यं प्रत्येकमेव सामर्थ्यं तदुद्बोधनं चेति स्पष्टमेवैतत् ।

न चाङ्गभेदात् फलभेदाशङ्का सम्भवति, फलस्याशास्त्रप्रमेयत्वात् । इष्टस्य हि फलस्य साधनं शास्त्रेण कथ्यते । करणानुग्रहश्चैक एवेष्ट इति तद्भेदो न शङ्कनीयः नच निराकर्त्तव्यः । अवान्तरकार्य्यभेदस्तु सिद्धान्तेऽपि संमत एवेति ([3]न तत्रापि चिन्ता सम्भवति । ) निष्प्रयोजना चैषा चिन्ता, सर्वथानुष्ठानसाम्यात् । तस्माद्विकल्पाविकल्पावेव चिन्त्याविति । तस्माद्यथा-श्रुतभाष्यव्याख्यानुपपत्तेरेतानि सूत्राण्यन्यथा वर्ण्यन्ते । प्रथमसूत्रमङ्गानां विकल्पप्रतिपादनार्थं यथाभाष्यमेव ।

**अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम्** इत्यनेन सूत्रेण सर्वेषामङ्गाना-मितरेतरयुक्तानां क्रतूपकारनिवृत्तिः[4] फलं कथ्यते । तथाहि-कथंभावा-काङ्क्षायां प्रधानस्योत्पन्नायां पृथगपि विहितानामङ्गानां सम्बन्धो नानु-त्पन्नायाम् । ततः किमित्याह-स चैकः कथम्भावो युगपदुत्पन्नो यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति, तस्मिन्नेवानुयाजादीन्यपीति युगपत् निपातात् समु-च्चयः । न च भिन्नः कथंभावः, येन भिन्नानि सम्बन्ध्येरन् । तस्मात् सर्वेषामितरेतरयुक्तानां क्रतूपकारनिवृत्तिः फलमिति । ऐकार्थ्यादिति

१. सामर्थ्याब्दो ।
२. एव नास्ति ।
३. कुण्डलितांशो नास्ति ।
४. रान्निवृ०

एकस्मिन् कथम्भावे युगपदुपनिष्पादितादित्यर्थः। **शब्दभेदान्नेति चेदिति प्रत्यनुभाषणसूत्रम्**। यदुक्तं स्वावाक्यैरङ्गानि विधीयन्ते. तानि चैकैकमेव[1] विदधाति, न साहित्येन। तस्मात् क्रत्वन्तरवच्चोदनाभेदान्नैरपेक्ष्यमिति तत् परिहर्त्तव्यमिति।

**कर्मार्थत्वात् प्रयोगे[2] ताच्छाब्द्यं स्यात्तादर्थत्वादिति प्रत्यनुभाषण-परिहरः**। अस्य सूत्रस्यायमर्थः—क्रत्वन्तरेषु हि भिन्नानि वाक्यानि प्रत्येकमेव विदधति, न साहित्येन। नहि तत्रैकः शब्दोऽस्ति, येनैतानि संहत्य विधीयेरन्। इह त्वेकेन प्रधानशब्देन कथम्भावाकाङ्क्षिणा इत्थंभावेनैकवाक्यतया सम्बध्यमानानामङ्गानामेकेन प्रधानविधिना सर्वाङ्गविशिष्टप्रधानविधायिना विधीयमानानामरुणादिवत् समुच्चयः। यद्यङ्गवाक्येषु विधिरस्ति, तथापि तावदसावुदास्ते यावदङ्गभावना स्वांशैः पूर्यते विधिसम्बन्धस्त्ववश्यंभावी। समानप्रत्ययोपादानादित्येतावत् प्रथमभवगम्यते। अतश्च तदवगमादेव यादृशैः पूर्णभावनाविध्यन्वयमर्हति तादृशैः पूरयितव्येत्यवगमाद्धात्वर्थमुल्लङ्घ्य पुरुषार्थभाव्यापेक्षायां प्रकरणेन क्रतौ विनियोगः। एतावदेवाङ्गविधीनां विनियोजकत्वम्, यद्विनियोगे हेतुभूताकाङ्क्षोत्थापकत्वम्। एवं प्रातिस्विकविधि-वशादेव लब्धाङ्गभावेषु प्रयाजादिषु पश्चात् प्रधानविधिनैव विधिसिद्धे-रनुवादमात्रमङ्गविधयो भवन्ति।

तस्मात् प्रधान[3] विधिना युगपद्विधानादङ्गानां समुच्चयः। **कर्तृविधे-र्नानार्थत्वाद्गुणभूतेषु[4] इति पुनः पूर्वपक्षः** विध्यनुवादवैरूप्यापत्तेर्नैकेन प्रधानविधिनाङ्गानां प्रधानानां च विधानं युक्तमिति। ननु फलसम्बन्धेन विधेय एव यागः कथमवैरूप्यम्? अत आह—यद्यपि यागः फलं प्रति विधीयते

---

१. दधिवद्विदधति

२. योगेनाच्छब्द्यं

३. प्रधानम्

४. गुणभूतेषु नास्ति

इतिकर्तव्यतां प्रत्यनूद्येत[1] तदा[2] नहि प्रधानस्य गुणं प्रति विधिः सम्भवतीति। न च सकृदुच्चरित उभयार्थो लभ्यते। आवृत्तौ च वाक्यभेदः स्यात्।

अथोच्येत-नायं विधिर्यागमनूद्य तेन सह सम्बन्धमङ्गानां करिष्यति, येन वैरूप्यं स्यात्। किन्तर्हि भावनया [3]सह सर्वेषामङ्गप्रधानानां सम्बन्धः, न परस्परमिति। तथासतीतिकर्तव्यता न दर्शपूर्णमासाङ्गं स्यात्। फलभावनासम्बन्धात् करणवत्फलाङ्गमेव स्यात्। तत्र को दोषः ? सोऽयं आग्नेयविध्यन्तो न स्यात्। [4]कस्मात्? आग्नेयस्येतिकर्तव्यताभावात्[5] 'आग्नेयादिवत्' सकृदनुष्ठीयतेति न प्रति त्रिकमावृत्तिः सिध्येत्।

[6]आरम्भफलपूर्वत्वात्।

न[7] चैवात्र यागमनूद्येतिकर्तव्यता विधीयते। किन्तर्हि ? भावनयैवारम्भापरनामधेयेतिकर्तव्यतासम्बन्धः। कथम् ? यजेतेत्यस्मिन् भावनावचन उच्चरिते तिस्र आकांक्षा जायन्ते, न तु यागशब्द उच्चरिते। अतो भावनाकाङ्क्षितानामङ्गानां तयैव सम्बन्धः तत्र किमंशो[8] भाव्यो यः पुरुषार्थः स उपनिपतति। द्वितीयस्यामाकाङ्क्षायां करणं तृतीयस्यामितिकर्तव्यता।

नन्वेवं यागगतक्रियाविशेषेणानुष्ठितेन फलं भवति ततः कथमिति सैव क्रियाविशेषरूपेण विमृश्यते यागेन कुर्यादिति। अनेन ह्येतावज्ज्ञातम्—इयं यागविषयक्रियेति। क्रियाविशेषस्त्वज्ञातः, ततोऽन्यन्वाधानात्मिकासौक्रियेति।

---

१. अनूद्यते मुद्रित पाठः
२. तदा नास्ति
३. सह नास्ति
४. कस्मात् नास्ति.
५. नह्यसावितिकर्तव्यताग्नेयस्याङ्गमिति : किञ्चैवमा० इत्यधिकः पाठः
६. आरम्भस्य शब्दपूर्वत्वादिति शास्त्रदीपिकापाठः
७. नैवात्र
८. अंशे

एवं क्रमेण विशिष्टाः सर्वेंऽशा भावनया युगपत्सम्बध्यन्ते। त्रिभिर्हि संबध्यमानस्य भावनावचनस्यावृत्तिः स्यात् । अत आह–ता[1] एतास्सपेक्षाः । अपेक्ष्यन्त इत्यपेक्षा अंशाः यौगपद्येन भावनया सम्बध्यन्ते न पर्य्यायेण । केवलन्तु क्रमेणाख्यायन्ते विमृश्यन्ते। कुर्य्यादित्युक्ते प्रथमं किमिति विमृश्यते, तत्र फलमिति, ततः केनेति साधनविषयतया[2] सैव क्रिया विमृश्यते ? किंविषयायाः क्रियायाः फलमिति,तत्र यागेनेति यागगतेर्यमिति, यथा–'अरुणया क्रीणातीति' इति यस्मिन्नेव क्षणे एकहायनी सम्बध्यते तस्मिन्नेवारुणापि[3], न च भेदेन । एवमिहाप्येकक्षणोपनिपातस्त्रयाणामंशानामिति नावृत्तिः । ननु व्यापारेणेतिकर्त्तव्यतायाः सम्बन्धो भाष्यकृतोक्तो न भावनया । अत आह-[4]प्रयोजकस्योत्पादकस्य प्रयोज्यमुत्पाद्यं प्रति यो व्यापारः स भावनेत्युच्यते। यदुक्तमेवं सति सौर्य इतिकर्त्तव्यता न प्राप्नोत्याग्नेयानङ्गत्वादिति । तत्रोच्यते—भावनया सम्बध्यमानैवेतिकर्तव्यता करणमनुगृह्णातीति करणानुग्रहद्वारेण सम्बध्यते व्यापारविशेषो हीतिकर्त्तव्यता, स च [5]करणविषयः। करणस्य हि प्रयाजादिभिरुपकारवत्तासम्पादनम् अवघातावहननादिसंस्कृतेन च द्रव्यदेवतेन स्वरूपनिष्पादनम्, असौ व्यापारः। तेन च साक्षात् फलं क्रियते । तद्यथारुणो गुण एकहायनीपरिच्छेदद्वारेण क्रयेण सम्बध्यते । एवं सतीतिकर्तव्यता पौर्णमासीयागेष्वावर्त्तते, अमावास्यायागेषु च प्रतित्रिकमावृत्तिरस्याः सिध्यति, अङ्गत्वात् । तस्मादाग्नेयादीनां फलं साधयतामङ्गभूतेतिकर्तव्यता।

अतश्च सौर्य्येऽपि तद्विकारे फलं साधयतीतिकर्तव्यतया भवितव्य-

---

१. ता नास्ति

२. ताथा

३. न च नास्ति ।

४. प्रयोजकस्य ।

५. करणविषयः नास्ति ।

मित्यदोषः । **अयं** च भावनयेतिकर्त्तव्यतासम्बन्धन्यायस्तावन्नवमाद्यभाष्ये **वर्णित एव । प्रत्ययार्थेन हीतिकर्त्तव्यता सम्बध्यते न यागेन, यागस्तु पूर्वापरीभूतः**[१] क्रियात्मकभावनाविशेषणतया तदात्मना प्रतीयमान इतिकर्त्तव्यतां **गृह्णाति न निष्पन्नरूपः ।** कथमित्याह–**यदा तु धातुमात्रमिदम्, तदा नामपदस्य याग इत्यादेरर्थे । न च द्वयोर्नाम्नोः सम्बन्धोऽस्ति** क्रियागर्भत्वात् सम्बन्धानाम् । तस्माद्भावनाद्वार एव सम्बन्धः । ततश्च नास्ति यजेर्वैरूप्यमिति । प्रधानविधिस्तु फलभावनामितिकर्त्तव्यतापेक्षिणीं क्रयरूपभावनामिव साधनापेक्षिणी तृतीयावगतसाधनभावैररुणादिभिः साध्यक्रियाविशेषापेक्षिभिः समिदादिभावनाभिर्विध्यवगतप्रयोजनसाधनभावाभिस्तद्विशेषमाकांक्षिणीभिः प्रकरणलब्धैकवाक्यताभिर्युगपत् सर्वाभिर्विशिष्टां विधत्त इति समुच्चयसिद्धिः । भाष्यन्त्वेवं गमयितव्यम्–क्रत्वन्तरवदसमुच्चय इत्युक्ते क्रत्वन्तराणि पुत्रपश्वादिफलभेदश्रवणयुक्तानि[३] यन्न समुच्चीयन्ते । नहि तत्रैकं फलम्, यतः समुच्चयः स्यात् । इह तु सर्वेषां क्रत्वर्थत्वात् समुच्चयो युक्त इत्युक्तम् ।

नन्वेवं सतीति एवमपि सतीत्यर्थः । यद्यप्यैकार्थ्यं न क्रत्वन्तरवदर्थभेदः, तथापि व्रीहियववद्विकल्पः कस्मान्न भवति । ऐकार्थ्येन हि विकल्पो न परिहृतो भवति । सुतरां तेन विकल्पः स्यादिति । तत्रोत्तरम् 'विधेस्त्वेकश्रुतित्वादि'त्यत्र विकल्पं परिहरिष्याम इति । तत्रैतत् स्पष्टयिष्याम इत्यर्थः । यत्त्विदं चोद्यं कारक[४]वदेकार्थानि भिन्नानि च[५] कार्य्याणि कुर्य्युरिति तस्यायमर्थः–यथा कारकाणि क्रियार्थतयैकार्थत्वे सत्यपि

---

१. मूर्तक्रि ।

२. ति । न तु निष्पन्नरूपः ।

३. णाद्युक्तं ।

४. वदकारक ।

५. वा ।

स्वावान्तरकार्ये निरपेक्षाणि, तथाङ्गान्यपि स्वविधिभिरेव[1] विहितानि पृथक्-प्रयोजनापेक्षाणि क्रतूपकारकाणि[2] साधनत्वरूपेणैकार्थान्यपि सन्ति, भिन्न-कार्य्याणि भवेयुः। अन्यक्रतूपकारातिरेकेण जन्यतेऽन्येनान्या। ततश्च विकल्प इति। तत्रोत्तरमिदम्-नहीत्यादि। तस्यार्थः-सत्यमपि पृथक् प्रयोजनापेक्षायां प्रधानविधिनैकेन सर्वेषामपर्य्यायविधानात् समुच्चयः किमिति [3]पुरुषः प्रधानविधिना विधानमित्याशङ्क्य विध्यश्रवणादित्युक्ता, तत्रापरितोषात् परिहारान्तरमुक्तम्। अन्येन च प्रयोगस्योक्तत्वादिति। शेषं सुगमम्।[4] एवं षट्सूत्राधिकरणं समाप्यैकेनापि समाप्येतेत्याद्यया नवसूत्र्याधिकरणान्तरं भाष्यकारश्चकार-काम्ये प्रयोगे किमेकाङ्गोपसंहारः? अथवा सर्वाङ्गोपसंहार इति। तदाक्षिपति–पूर्वस्मिन्नधिकरण इदमवगतम्–इतरेतरयुक्तान्यङ्गानि[4] (क्रतूनामङ्गानि[5]) क्रतूपकारं कुर्वन्ति, न निरपेक्षाणीति। तेन तदर्थं तावदनर्थकमिदम् तथा षष्ठे नित्ये प्रयोगे एकदेशोनाप्यधिक्रियते, काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुं सोऽधिक्रियत इति स्थितम्।

एतेष्वधिकरणेषु स्थितेषु कथं चिन्ता काम्येषु-किमेकदेश[6]योगः (प्रसङ्गे) न उत सर्वाङ्गो (र्वो)पसंहार इति। तस्मादयुक्तोऽयं भाष्यकारीयो विचारः, गतार्थत्वात्। तेनाङ्गानां तु विचारः शब्दभेदादित्यारभ्य यावद्विधेस्त्वेकश्रुतित्वादिति सूत्रम् तावदेकमधिकरणं समुच्चयविचारार्थं द्रष्टव्यम्। अपरन्तु यत् सूत्रत्रयं तथा कर्मोपदेशस्स्यादित्या-

---

१. प्रयोगेण विहि

२. पकारसाध.

३. पुनः.

४. षड्भिः सूत्रैः अङ्गानां विकल्पो भवति नवा, यदि समुच्चयः, किं द्वाभ्यां बहुभिर्वोपकारः, अथवा समुच्चय इति। विचारत्रयं कृत्वेत्यर्थे पङ्क्तिः षट्कत्र्यधिकरणं साधु वा न इति परिशीलनीयम्।

५. कोष्ठान्तर्गतो भागो नास्ति।

६. अयमेव पाठः कोशे।

दिकं तदन्वाचयो[1]( श्चावयवो ) पन्यासेन । चोद्यनिरासेन च विधेस्त्वेकश्रुतित्वादित्यस्यैव प्रधानहेतोः शेषभूतमित्यभिप्रेत्येदमेवावधित्वेन गृहीतमिति वेदितव्यम् ।

त्रयश्चात्र पक्षाः–किमङ्गानि प्रत्येकमेवोपकारं साधयन्ति ? उत प्रत्येकं संहत्य वोत संहत्यैवेति । तत्र प्रत्येकमेवेति पक्षमुपक्रम्यारम्भस्य शब्दपूर्वत्वादिति प्रधानविधिना विधीयमानत्वादङ्गानां समुच्चय इति सिद्धान्ते वर्णिते पूर्वपक्षान्तरसूत्रम्- एकेनापि समाप्येतेति । कथम्भावाकांक्षा ह्येकेनापि पूरयितुं शक्यते। अङ्गानि च पृथग् विहितानि। तेन तेषां प्रत्येकमप्युपकारकता गम्यते । [2]यथावदा[द्वा]म्नानसामर्थ्यात्, संनिधानाविशेषाच्च सहितानामपि कथंभावपूरकता गम्यते । अतश्चोभयथापि[3] फलसिद्धिरिति [4]विकल्प्यते ।

तत्र चाङ्गभूयस्त्वे फलभूयस्त्वं भविष्यतीति पूर्वपक्षभेदाच्चाधिकरणान्तरमिव भाष्ये दर्शितम्, फलाभावादित्यादिसूत्रजातं सुगममिति, 'विधेस्त्वेकश्रुतित्वादि'ति सिद्धान्तसूत्रम् । तस्यार्थः–यद्यप्यङ्गानि पृथगेव प्रयोजनमपेक्षन्ते कथम्भावोऽपि चैकेनापि शक्यते पूरयितुम्। तथापि सहितानामेव सम्बन्धः कस्मात् ? अपर्य्यायविधानात् । यदि ह्यङ्गानि स्ववाक्यैर्विधीयेरन् ततस्तेषामेकैकविषयत्वात् क्रत्वन्तरवत्पर्य्यायेण[5] विधीयमानानि विकल्पेरन् । प्रधानविधिना त्वेषां विधानम् । तेनापि न पर्य्यायेणैषां सम्बन्धः, येन नैरपेक्ष्यं स्यात् । किन्तु सर्वेषु विधिवशादेव सामान्येन कस्यापि प्रयोजनस्य साधनतया[6] गम्यमानेषु तद्विशेषाश्रवणात् साकाङ्क्षेषु सत्सु प्रधाने च कथमिति स्वगतव्यापारविशेषा[7] कांक्षिते

---

१. विकल्पसमु ।

२. तथाव०

३. उपयथापूराणादुभयथापि

४. वि नास्ति

५. र्यायेणवि

६. अवगम्य०

७. ङ्क्षापेक्षे

सति तेन सह सर्वेषामनपेक्षितपरस्पराणामवान्तरव्यापारभेदमाश्रित्य संनिकर्ष-विप्रकर्षाविनाहृत्यारुणादीनामिव क्रयेण विशेषणविशेष्यतयैकवाक्यत्वं युगपत् कल्प्यते। इत्थं यागे व्याप्रियेत अनेनाग्न्यन्वाधानादिकलापेन यागं प्रति व्यापृतेन फलं भवतीति[१]। एभिर्विशिष्टो यागः फलसाधनमित्यर्थः। ततश्च पृथग्-द्वारैः सर्वैरङ्गैर्यागस्य विशिष्टस्य फलार्थता विशेषणैरुपकारजनने सति घटते नान्यथेति विशेषणभूतानां समिदादीनामुपकारजनकता कल्प्यमाना, सहैव कल्प्यते सहैव विशेषणत्वात्। न च विनियोगदशायां व्रीहियववद्वाक्यैरेककार्य्यार्थत्वमवगतं[२] यद्वलेन पर्य्यायेणैकवाक्यता स्यात् तस्मात् संनिध्यविशेषाद-ङ्गानां च नित्यवच्छ्रुताना[३]मष्टदोषविकल्पपरिजिहीर्षया युगपत् प्रयोग-विधिरेषां प्रयोगं विधत्त इति तद्बलेन परमोपकारे सर्वेषां साहित्यं कल्प्यत इति सिद्धः समुच्चयः। यत एव विनियोगदशायां द्वारभेदः[४] स एव संनिकृष्ट-विप्रकृष्टप्रमाणकानामपि समुच्चयः। अन्यथा श्रुतिप्रमाणकाङ्गव्यापृतौ[५] लिङ्गादिप्रमाणकं न किञ्चित् स्यादिति।

[ ३—काम्यकर्मणां कामनानुरोधेनाभ्यासाधिकरणम् ]

### कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥२०॥ पू०

कर्मणि निराकृते कर्त्तुर्वाच्यत्वे प्राधान्येन केयमाशंका? उच्यते-अभ्युच्चयत्वेनैतदुक्तम्। एवन्तु पूर्वपक्षः—कृते यागे फलेनावश्यं भवितव्यम्। न च तत्कालान्तरभाविनश्वराद्यागाद् भवितुमर्हति। तत्रादृष्टाश्रुतापूर्वसत्ता तस्या-

---

१. इति नास्ति

२. अर्थ नास्ति

३. वनित्यवच्छ्रुतानाम् अममेव पाठः कोशे

४. अत एव

५. णोकाङ्क्षति क्रतौ लि०

६. दृष्टाश्रुता

वस्थास्तु तासां फल हेतुता तस्य च स्थास्नुता यागजन्यता चावकल्प्याः[१] । तद्वरं कृतयागादात्मनः सिद्धस्थैर्यात्फलं भवतीति कल्पितम् । सकृत् कृते च यागे कृतयागताचास्य संजातेति न भूयः करणे प्रयोजनमस्ति इदञ्चानागतावेक्षणेनापूर्वप्रस्तावे वार्तिककारेण दर्शितम् ।

यष्टुरेवात्मनो यागैः[२] संगतस्य स्थिरस्य च ।
निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति[३] ॥

सिद्धान्तस्तु-अपूर्वानभ्युपगमे कृताकृतयागयोरविशेषादात्मस्वरूपनिमित्तं फलं प्रागपि स्यात्, पश्चादपि[४] वा न स्यात् । तस्मात् [ यागे ] कृतेऽवश्यमुत्पन्नः कश्चिदतिशय इत्यङ्गीकर्त्तव्यम् । एतदपि तत्रैवोक्तम् ।

नचातिक्रान्तयागेभ्यः पुरुषेभ्यः [५]फलोद्गतिः ।
अतिक्रान्तानतिक्रान्तविशेषस्तव नास्ति हीति ॥

तस्मादपूर्वादेव फलमिति फलभूमार्थिना भूयांस्यपूर्वाणि कर्त्तव्यानीति सिद्धो यावदिच्छं प्रयोगः क्रियाणाम्[६] ॥ २० ॥

[ ४—अवहननादिदृष्टार्थानां फलोत्पत्त्याभ्यासाधिकरणम् ]

**क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽतस्तन्निर्वृत्त्यापवर्गः स्यात् ॥ २७ ॥ सि०**

मुसलोद्यमननिपातनमात्रं शब्दार्थः । तद्यदि दृष्टार्थं न संभवति काममदृष्टं कल्प्यम् । शब्दार्थानुगुणं हि प्रयोजनम्, न तु तद्वशेन शब्दार्थव्यवस्थापनमिति[७]

---

१. कल्प्या

२. योगैः

३. इति अधिकः

४. वा नास्ति

५. फलोद्गुतिः

६. नास्ति ।

७. स्थानमिति । उच्यते ।

उपपद्यते। सत्यम्। अभ्यासो न शब्दार्थः। अनभ्यासोऽपि तु नैव। तत्रावघातस्य प्रयोजनापेक्षायां तण्डुलनिर्वृत्तिः प्रयोजनं, दृष्टत्वात् संभवाच्चाङ्गीक्रियते तत्र। ऋतेऽभ्यासात् सिध्यतीति प्रयोजनवशादभ्यासः। यत्र तु तण्डुलनिर्वृत्तिरनपेक्षिता सर्वौषधैस्तत्र सकृत् करणम् ॥२७॥

[ ५-प्रयाजाद्यङ्गानां फलभूयस्त्वार्थमसकृदननुष्ठानाधिकरणम् ]

## क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात् ॥२९॥ पू०

फलभूमार्थिना प्रधानवदङ्गान्यप्येकस्मिन्नेव प्रयोगेऽभ्यसितव्यानीति पूर्वः पक्षः। सिद्धान्तमाह—

## अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥३०॥ सि०

भाव्यः[1] स्वर्गः तस्य भावको याग एव केवलः। इतिकर्तव्यता तु फलसाधिका[2] तथापि तु करणे यततो यागस्यानुग्रहं करोति तत्तु फलसाधिका। कुतः? यतस्तस्याः फलं न श्रूयते, करणात्तु श्रूयते फलमिति। नेतिकर्तव्यताभ्यासात् फलभूयस्त्वम् चोदयति, सत्यं नेतिकर्तव्यत्ता फलसाधिका। तथापि तु करणस्यैव फलं साधयतोऽभ्यस्यमानेतिकर्तव्यता महान्तमुपकारं करोति। तच्च करणं महतोकारेणानुगृहीतं महत् फलं करोति। लोके तथा दर्शनादिति। अत्र परिहारमाह-सकृदितिकर्त्तव्यता कर्तव्या। कुतः। भावनया करणेतिकर्तव्यते आकांक्षिते। भावनैव ह्युभयविशेषणविशिष्टा फले विधीयते। अतः किमित्याह-तत्र करणं फले व्याप्रियते, इतिकर्तव्यता तु करणं फलं साधयदनुगृह्णती आकाङ्क्षिता न तु[3] स्वयं फलसाधनतया।

---

१. अयमेवपाठः कोशे

२. फल...यततो नास्ति।

३. तु न

तथापि किमित्याह-सत्कृतया च तया निराकाङ्क्षीकृता भावना करणानुग्रहस्य लब्धत्वात् ।

ततो[1] द्वितीयादिप्रयोगः केनाकाङ्क्ष्यते[2] लब्धे एककरणोपकारे न वा शास्त्रीयेण केवलं पुरुषेच्छाधीनेनोपकारभूयस्त्वेन[3] फलभूयस्त्वं प्रमाणवत् । तस्मादेकस्मिन् प्रधानप्रयोगे[4] सकृदेवेतिकर्त्तव्यता फलभूमार्थिना तु प्रधानमेव-साङ्गं[5] पुनः [पुनः] प्रयोक्तव्यम् । तस्यैव तत्साधनत्वात्[6] नाङ्गमात्रससाधन-त्वादिति । अत्राङ्गवत्तार्थमङ्गानुष्ठानेच्छा[7] । सा च सत्कृतैरेव जातेति[8] न पुनरनुष्ठानमित्येतत् सिद्धान्तैकदेशिमतम् । अत्र निराकणार्थो भाष्यग्रन्थः यदा प्रयाजाः, न तदा प्रधानयजिरपूर्वं वा । यदा च यजिरपूर्वं च न तदा प्रयाजा इति । एतदयुक्तं भाष्यम् । कथम् ? यस्मिन्नेव क्षणे स्वर्गोऽ-पूर्वरूपेण भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणमपि भावकत्वेन व्याप्रियते । इतिकर्तव्यतापि तस्मिन्नेव क्षणे करणमनुगृह्णाति कथमित्याह-यदि ह्यन्यस्मिन् क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, करणमप्यन्यस्मिन् क्षणे भावकं तथा सति भाव्यभावकसम्बन्ध एव न स्यात् तस्माद्यौगपद्यं स्वर्गयागयोः । एवमेव करणेतिकर्त्तव्यतयोः । तस्मादेषां तुल्यकालता । तथा च स्वयमेव भाष्यकारो द्व्यन्तरितेऽधिकरणे यौगपद्यमेषां वक्ष्यति । तस्मात् कालभेदाभिधानमनुपपन्नमिति समाधत्ते । न चावान्तरक्रियाः पदार्थावान्तरो-पकाराः परस्याभिप्रताः किन्तु भिन्नकाला अपि सत्यः प्रयाजादिक्रिया एवाभिप्रेताः ताभिरेव स्वरूपेण तद्वत्ता परस्याभिमता न त्ववान्तरव्यापारपरि-

---

१. तत्रेत्येव पाठः
२. लब्ध्वेककर
३. ध्वाधाने
४. प्रधानयोगे
५. साङ्गं पुनः
६. साधनत्वादिति ( नाङ्ग......त्वादिति नास्ति )
७. नुष्ठानम् ; सा च
८. जातैवेति

हारेण[1] तच्चायुक्तम् । स्वरूपाणां भिन्नकालत्वादिति युक्तं निराकरणभाष्यमिति ।

[ ६—कपिञ्जलाधिकरणम् ]

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥३८॥पू०**

वसन्ताय कपिञ्जलानालभते इत्यत्र पूर्वः पक्षः। यथाक्षशब्दः साधारणवचनो विदेवनादिषु एवं बहुवचनं साधारण्येन वर्तते। त्रित्वादिषु अथवा यत्रैकत्वद्वित्वे न स्वतस्तत्रायं वर्तते एतस्मिंश्च पक्षे सामान्यवचनोऽयम्। द्वित्वाधिक्यं सामान्यं निमित्तीकृत्य सर्वत्र वर्तते। तेनायं पक्षो ज्यायान्। पूर्वस्मिंस्तु पक्षेऽनेकशक्तिकल्पना स्यात्। तेन त्रित्वप्रभृतीनां सर्वेषां शब्देनैवोक्तत्वादत्र न[2] पूर्वाधिकरणवदशास्त्रीयं[3] गुणशास्त्रीयं गुरुपक्षाश्रयणम् सति च शास्त्रीयत्वे गुरुपक्षस्य फलभूयस्त्वं[4] भविष्यति इति सर्वेषां शब्दार्थत्वादनियमेनोपादानमिति, सिद्धान्तेऽप्ययमेव द्वित्वाधिक्यमात्रं शब्दार्थः। न त्वसौ[5] व्यावर्तते[6]। अनेन तु वक्ष्यमाणन्यायेन त्रित्वनियमः। तमेव न्यायं निगदव्याख्यातेन सूत्रेण दर्शयति—

**प्रथमं वा नियम्येत कारणादतिक्रमः स्यादिति ॥४३॥सि०**

किमिति पुनः प्रथममपि त्रित्वं नियम्यते। येन कारणादतिक्रमो न भवति। अत आह-प्रकृतिरियं लोके स्वभावतः[7] बहुत्वे सति कारणे प्रथमे नियमः

---

१. व्यापारव्यापारद्वारेण।

२. अत्र नास्ति

३. गुणशास्त्रीयं नास्ति

४. भूयस्त्वे

५. न नास्ति

६. व्यावर्तते

७. स्वभावः बहुत

यथाहि-न्यग्रोधतले स्थातव्यमिति नियुक्तः[१] एतस्वपि बहुषु न्यग्रोधेषु प्रथम एव न्यग्रोधेऽवतिष्ठते। न तमतिवर्तते। एवमिहापि बहुवचनार्थमनुतिष्ठन् त्रीननुपादाय (चतुःप्रभृतीनामुपादानासम्भवादेवात्रायं प्रथमं तावत्रीनुपादत्ते। तेषु चोपात्तेषु कृतकरं शास्त्रं न परमुपपाद)[२] यतीत्यशास्त्रीयोपादाने न फलभूयस्त्वं प्रत्युत निवृत्तव्यापारे विधौ हिंसाप्रतिषेधो निरपवाद इति तदनुष्ठाने प्रत्यवाय एव स्यात्। तस्मात् त्रयाणामेवालम्भ इति।

[ ७—उत्तरागोदोहाधिकरणम् ]

## उत्तरासु न यावत्वमपूर्वत्वात् ॥४७॥ पू०

'उत्तरा दोहयति' इत्यत्रापि तर्हि निसृणामेव दोहः स्यात्। न। अनुवादात् 'नास्यैनां रात्रिम्'इत्यनेनैव दृष्टार्थत्वाल्लक्षणया यावत् स्वं दोहनं विहितम्। इ[हत्वन] हान्वारम्भविधिपरे वाक्येऽनूद्यते। तस्मादिह यावत् स्वं दोहनम्। नास्ति त्रित्वनियमः।

[ ८—दर्शपूर्णमासयोः प्रयाजादीनां तन्त्रताधिकरणम् ]

## प्रधानकर्म्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात्॥५४॥पू०

उपोद्घातप्रसक्तानुप्रसक्तादागतेऽधुना।
तन्त्रमावर्तनं वेति लक्षणार्थोऽभिधीयते ॥

नन्वनभ्यासो वा प्रयोगवचनैकत्वादित्यङ्गानां सकृदनुष्ठानमुक्तम् किमत्र चिन्त्यते। अत आह– । भावनयेतिकर्तव्यताकरणमनुगृह्णाति सम्बध्यते न तु स्वयं फलसाधनम्। अतो न फलभूसार्थिनाप्युपकृतानां प्रधानानां पुनरुपकर्त्तव्यमित्युक्तम्। इदानीन्त्वेवं विचार्य्यते किमाग्नेयादीनां तन्त्रेणेतिकर्त्तव्यतोपकरोति? उत भेदेनेति। उपकार एव सकृत् प्रयोगे सर्वेषां जन्यते [नवेति]। तत्र भेदेनेति ब्रूमः। कथम्?आग्नेयादीनां सर्वेषां तावदितिकर्त्तव्य-

---

१. सत्स्वपि

२. कोष्ठान्तर्गतः पाठो नास्ति

तोपकरोति। यद्येकस्यैवानयोपकर्त्तव्यं सकृत् कृतैवोपकुर्यात्। सर्वेषां तूपकर्त्तव्यम्। उपकारवेलायां च प्रधानभूतानां तेषां साहित्यमविवक्षितम्, उद्देश्यगतत्वात्। तस्मादेकैकस्यैवोपकरोति न सहितानाम्। तस्मादेकैकं साङ्गं कृत्वाऽन्यत् प्रक्रमयितव्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु- एकदेशकालकर्तृत्वं[1] वक्ष्यत्यङ्गप्रधानानाम्। तेनागृह्यमाणविशेषत्वात् सकृदेव प्रयुक्तेतिकर्त्तव्यता सर्वेषामुपकरोति। तस्मात्तन्त्रमङ्गानामनुष्ठानम्। अयमभिप्रायः-प्रधानान्यङ्गानि च संहत्यकरीणीत्युक्तम्। [2]श्रुतितः फलार्थिना सर्वं युगपच्चिकीर्ष्यते। तस्यां च चिकीर्षायां साङ्गसर्वप्रधानगोचरायां विधीयमाना देशादयः सर्वेषां समाना भवन्तीति वक्ष्यते। तेनैकस्मिन् काले देशे चैकेन कर्त्रा सर्वाणि सह प्रयोक्तव्यानि। तत्रद्येकं संगमयमपवृज्यापरमुपक्रम्येत (तदा) साहित्यं बाध्येत। अतः सर्वेषां सहैवारम्भोऽपवर्गश्च। अंगान्यपि विनियोगदशायामविवक्षितसाहित्यानि प्रधानोद्देशेन विनियोगादेकैकस्योपकारकतयावगतान्यपि [3]प्रयोगदेशस्यैक्यात् सह प्रयुयुक्षितसर्वप्रधानोपचिकीर्षया प्रयुज्यमाननि देशाद्यभेदादगृह्यमाणविशेषाणि सर्वेषां तन्त्रेणोपकुर्वन्ति। न च सन्निधानाद्विशेषः, सर्वाङ्गानां संहत्यकारित्वात्। अवान्तरव्यापारद्वारेणाग्न्यन्वाधानादिब्राह्मणतर्प्पणान्तैः सर्वैरुपकारो जन्यते। तस्यां च वेलायां सर्वाण्याग्नेयाद्यपूर्वाणि संनिहितान्येवेत्यविशेषात्तन्त्रमिति सिद्धम्।

[ ९–काम्यपशुषु कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् ]

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६८॥ पू०**

प्रयोगवचनावगतं यौगपद्यं यदि कथञ्चिदपि न संभवति, ततोऽवश्यं भाविनि क्रमे तन्नियमः श्रुत्यादिभिः क्रियते। अत्र च समानदेवत्यत्वा-

---

१. कर्तृकत्वं.

२. (श्रुतित इत्यस्य स्थाने) अतः.

३. प्रयोगदशायां सह प्रयु.

दाग्नेययोः संभवति सहानुष्ठानमिति सत्यपि पाठक्रमे तन्त्रप्रयोगः। सत्यम् अनयोः (तयोः) साहित्यं संभवति। सौम्येन तु भिन्नदेवत्येन साहित्यासम्भवादावश्यकः क्रमः। तत्र पाठादेकस्य प्राक् सौम्यात् प्रयोगोऽपरस्य[१] पश्चात्। तत्र सहानुष्ठानेऽवश्यमन्यतरस्य सौम्येन सहावगतः क्रमाङ्गऽभूतो बाध्येतेति वैगुण्यं स्यात्।

तस्मात् पृथगनुष्ठानं भवेदाग्नेययोर्द्वयोः।
अन्यथा क्रमलोपेन विगुणोऽन्यतरो भवेत्॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
[२]एकादशस्याध्यायस्य प्रथमः पादः।

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
एकादशस्याध्यायस्य द्वितीयः पादः॥

[ १–अङ्गप्रधानानामेकदेशकालकर्तृत्वाधिकरणम् ]

## एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात्॥ १॥ सि०

किमाग्नेयोऽग्नीषोमीयादिनिरपेक्षो देशादिभिः सह सबध्यते? उताग्नीषोमीयादिसहित इति चिन्ता। अत्र पूर्वःपक्षः-आग्नेयादयो यदाग्नेयोऽष्टाकपालः इत्येवमादिभिरुत्पन्नाः प्रज्ञाताः।ताननूद्याप्रज्ञाता देशादयो विधीयन्ते 'समे' दर्शपूर्णमासाभ्यां यजेत' इत्येवमादिभिः। दर्शपूर्णमासशब्दो हि यागानामेव प्रत्येकं नामधेयं न समुदायः। अत आग्नेयादिचोदनाशेषभूताः, न फलचोदनाशेषभूताः। फलस्य देशादीनां च सर्वेषामुत्पत्त्या सम्बन्धो न परस्परमिति तेषां चोद्दिश्यमानामितिकर्तव्यतया सम्बधो नोपादीयमानानाम्। तस्मिँश्च सम्बन्धे यद्यपि तन्त्राभिहिता यागः, तथाप्याग्नेयोऽग्नीषोमीयनिरपेक्ष इतिकर्तव्यतया सम्बध्यते उद्देश्य-

---

१. अपरस्य ततः पश्चात्।

२. एकादशाध्यायस्य ( श्रीपा····चिते नास्ति )।

साहित्यस्याविवक्षितत्वात् । देशादयोऽपि चेति कर्तव्यतैव कारकविभक्त्या सप्तम्या शेषत्वेनोपादानात् । तस्माद्विवक्षितसाहित्ययागोद्देशेन विधीयमाना देशकालक(र्त्तो[1]) र्तृवदग्न्यन्वाधानादितिकर्त्तव्यता चाग्नीषोमीयादिनिरपेक्षस्यैवाग्नेयस्य न्याये(यो)त्यग्न्यान्वाधानादिकाया अपीतिकर्त्तव्यताया आवृत्तिः । तेनाङ्गानां तन्त्रत्वं पूर्वोक्तं परावृत्तमिति । अत्र चोद्यते—यद्याग्नेयमग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं कृत्वाग्नीषोमीय आरभ्यते । तदैतयोर्यत्[2] फलं प्रतीतरेतरयोगोऽवगतः प्रधानविधिनाद्याधिकरणन्यायेन सोऽत्यन्तं बाधितः स्यात् । यथा सौर्य्ये कर्मण्याग्नेयेन सहेतरेतरयोगाशङ्कैव ( एकैव ) नास्ति एवमिहापि प्रसज्यते । तस्माद्यदि तन्त्रेणेतिकर्त्तव्यता क्रियते, एवमितरेतरयोगः सम्पादितो भवति नान्यथा । तस्मात् फलवाक्यावगतसाहित्यबलादेव देशादीनामन्येषां चाङ्गानां तन्त्रतेति । उच्यते । फलगतादितरेतरयोगादयमियानर्थो लभ्यते, यदुतैकेनाप्यक्रियमाणेन यागेन फलं न प्राप्यते, तस्मादेकैकस्य कृत्स्नेतिकर्तव्यता क्रियमाणापि न फलगतमितरेतरयोगं बाधते । तेनैषां पृथगेव कालादिसम्बन्धः । एवं चाङ्गानामपि न प्रधानैरेककालत्वादि सिध्यति । दर्शपूर्णमासशब्देनाग्नेयादीनुद्दिश्य विधीयमानाः कालादयः[3] प्रसङ्गादङ्गेषु भवेयुः । तस्माद् भेद इति । सिद्धान्तस्तु—यद्यप्ययं कालः कारकविभक्तियुक्तः श्रूयते तथापि स्वभावादेवा (नुयाजादयः) नुपादेयः । ततः(त्)किमित्याह—अवश्यं च क्रियया सहास्य[4] सम्बन्धः करणीयः । तस्मिंश्च सम्बन्धे द्वयोरुद्देश्ययोरुपादेययोर्वा मिथः सम्बन्धाभावादन्यतरोद्देशेनान्यतरस्मिन्नुपादातव्ये कालमनुपादेयं [5]प्रतियागा उपादीय-

---

१. कर्तार इत्येव पाठः ।

२. यः ।

३. द्वयः कः प्रसङ्गोद्यदङ्ग ।

४. अस्य नास्ति ।

५. प्रतियोग ।

न्ते। तस्मात् उपादीयमानत्वाच्चेतरेतरयोगादिविशेषणं तन्त्राभिधानावगतं विवक्षितं आदिशब्देन तृती[2]ययोपात्तकरणत्वं गृह्यते। तेनेतरेतरयुक्ताः करणीभूताः काले देशे च कर्त्तव्या नैकै(कांशेन)कश्येन। एवं चाङ्गानामपि तत्कालत्वादि सिध्यतीत्याह- करणविभक्तिश्चेतिकर्त्तव्यताया[3] (विभक्तिश्चेति तया) विना नोपपद्यते। अस्मिन् काले दर्शेन स्वकार्य्यं कुर्य्यादिति हि तृतीयासंयोगात् करणभूतानां कालसम्बन्धोऽवगम्यते। कारणत्वं च सहितानां साङ्गानां च प्रयोगवाक्ये चा[4]वगतमिति तादृशानामेव कालसम्बन्धः। तस्मादितरेतरयुक्तास्त्रयो यागाः पौर्णमास्यां सेतिकर्तव्यताका विधीयन्ते।

एवममावास्यायामपि। एवञ्च काले कर्मविधानाद्धात्वर्थोऽन्यत्र विहितो भवति। तत्र श्रुतिरनुगृहीता स्यात् इतरथा तु परार्थकालविधानार्थं धातुरुच्चार्य्येत। एवं देशेऽपि द्रष्टव्यम्, तस्याप्यनुपादेयत्वस्य तुल्यत्वात्। भव(जय)त्वनुपादेययोर्देशकालयोरुपादीयमानानां यागानामितरेतरयोगस्तन्त्राभिधानावगतः। तृतीयावगतश्चाङ्ग[5]संयोगे विवक्षितः। कर्तृणान्तूपादेयत्वात् द्रव्यदेवतादिवत् कर्म्मोद्देशेन विधानम्। उद्दिश्यमानानां च कर्म्मणामितरेतरसंयोगोऽङ्गसम्बन्धश्चाविवक्षित इति न सहितानां साङ्गानां च कर्तारः स्युः। अपि च दर्शपूर्णमासयोर्यक्षतोश्चत्वार ऋत्विजः इत्यत्रापि[6] न श्रूयते, (नाथाख्यातं येन) नाप्याख्यातं येन तत्--करणकभावनाबलेनाङ्गसंयोगो (गतावगम्येतात) गम्येत् अत आह-कर्त्तारस्तु यद्यप्यु-

---

१. तस्मात् नास्ति।

२. तीयोपात्तं क।

३. कर्तव्यतया कुण्डलितांशो नास्ति।

४. च नास्ति।

५. सांयोगो वि।

६. जतृतीयापि अधिकः पाठ।

पादेयास्तथापि सेतिकर्त्तव्यताके प्रयोगे फलवाक्येन विज्ञाते सति यजमानः कथं एनं[1] करिष्यति- किं ससहायः किमसहाय इत्येतस्यामवस्थायामर्थिनः 'स्वयं प्रयोगे स्यात्' इति न्यायाद्यजमाने केवले प्राप्ते वचनादध्वर्य्वादयो विधीयन्ते। अस्यार्थः-यद्यपि प्रधानशब्दसंयोगः कर्तॄणां यद्यपि चोपादेयता(देवता) तथापि साङ्गानां सहितानां च प्रधानानां भवन्ति। तथापि[2] प्रयोगाङ्गतया तेषामुपादानं विधानं [3]चापेक्षितत्वात्। निःशेषप्रयोज्यावधारणोत्तरकालं च प्रयोगपर्य्यायेण प्राप्तिः। प्रयोगे च सहायोपादित्सा भवति। न तु तदवयवे। समीहितप्राप्त्यर्थो यः पुरुषस्य व्यापारः स प्रयोग उच्यते। स च फलसामग्रीविषयः। सामग्री व्यापाराणामेव हि कर्तृव्यापारो नान्यः। सहितानि साङ्गानि(स) च प्रधानानि तत्सामग्री। नैकैकं प्रधानं नाप्यंङ्गै[4]र्विना नेति न समानविषये व्यापारे फलवाक्यविहिते सहायापेक्षायां विधीयमाना ऋत्विजस्तद्द्वारेण साङ्गानां च सहितानां च प्रधानानां भवन्ति। देशकालयोरपि चायं न्यायः समान एव। तयोरपि प्रयोग एवापेक्षितत्वात्। तेन सायमग्निहोत्रं जुहोति इत्यादौ तृतयाभावेऽपि साङ्स्यैव तत्कालता सिद्धा भवति। द्रव्यदेवतादीनां तु न प्रयोगेऽपेक्षा, प्रयोज्यावच्छेदकत्वात्। करणादिकारकावच्छिन्नैव हि क्रियाकर्तृव्यापारस्य गोचरः। तेन न स्वतः तेषां प्रयोगावच्छेदकता। किञ्च फलभावनैव प्रयोग इत्युच्यते। सा च नानाविधाग्न्यन्वाधानबर्हिस्तरणप्रयाजाग्नेयादिव्यापारात्मा। न च सम्भवति नानाविधाग्न्यन्यन्वाधानादिविषयकर्तृव्यापारावच्छेदकता द्रव्यदैवतयोः। तदवयवभूतयागादिस्वरूपविषयत्वात्तयोः। कर्तृदेशकालानां तु प्रयोगापेक्षा, प्रयोज्यानवच्छेदकत्वात् सम्भवति। उपसंहरति तस्माद्यद्येकैकं प्रधानमितरेतरनिरपेक्षं करोति तथासति यो देशं दर्शप्रतिविधीयमानामितरेतर-

---

१. एनं नास्ति।

२. तथाहि।

३. वा।

४. विना। तेन समस्त वि०।

योगोऽवगतः स बाधितः स्यात् । तथा कालेऽपि । अङ्गैश्च विना करण-विभक्तिर्बाधिता स्यात् । तस्माद् वचनात् सहितानि साङ्गानि च प्रधानानि प्रतिदेशादीनां तन्त्रतेति। अत्र भाष्यकारेण पौर्णमास्यां पौर्णमास्या यजेत इत्यनेनैवैककालविधानमुदाहृतम् तत्र चोदयति-ननु पौर्णमास्यां पौर्णमास्या यजेत इत्यनेन कालविधानं न क्रियते, उत्पत्तिवाक्येन यदाग्नेय इत्यादिना कालस्य प्राप्तत्वात् अनुवादमात्रं त्वेतत् ननु फलार्थं स्यात् । कथमनुवादता? अत आह-फलसम्बन्धोऽपि न क्रियते-दर्शपूर्णमासवाक्येन कृतत्वात्[1] अपि चात्र फलसम्बन्धाशङ्कैव नास्ति, फलाश्रवणात् । तस्मादनर्थकमेवैतत् । उच्यते । एतेन वाक्येन विनोत्पत्तिवाक्येषु प्रत्येकं कालश्रवणात्, तस्य च साङ्गप्रधानविषयत्वादेकैकस्य कृत्स्नमिति कर्तव्यताकाण्डमाग्नेयादेरावर्तेत । सति त्वेतस्मिन् वाक्ये पौर्णमास्यां ये यागा उत्पन्नास्ते सर्वे करणविभक्तियुक्ताः फलं प्रति विधीयन्ते, न प्रत्येकम् । करणविभक्तिश्चेति कर्त्तव्यतामन्तरेण न सम्भवति, उपादीयमानत्वाच्च तेषां साहित्यविवक्षा। तस्माद्येकैकः कृत्स्नेतिकर्त्तव्यताकः क्रियते। यत्तत्[2] साहित्यमवगतम् तद्बाध्येत (तेन [3]बाधाये) तेनेतिकर्तव्यतां प्रति साहित्यमेषां क्रियते । तस्मादनेन वाक्येनेतिकर्तव्यतां तन्त्रेण भवतीत्ययमर्थः क्रियते त्रयाणां यागानाम् । अत्र चोदयति । अयमस्य वाक्यस्य [4]तत् साहित्यमवगतं ? भवतोऽर्थः प्रयोजनं [5]विवक्षितः। अयं च वाक्यान्तरेणापि लभ्यत एव। तथाहि समे दर्शपूर्णमासाभ्यां यजेत, इत्यनेन वाक्येनेतरेतरयुक्ताः सेतिकर्तव्यताका यागदेशं प्रति विधीयन्ते। विधीयमानानाञ्च साहि-

---

१. एव नास्ति

२. यत्तु

३. तेन तदबाधायेति०

४. तत्साहित्यमवगतं नास्ति

५. अभिप्रेतः

त्यं विवक्षितं तद्यदीतिकर्त्तव्यता वर्त्तेत यत् साहित्यमवगतं तद्बाध्येत। तस्मादस्मिन् वाक्ये सति सिद्धमङ्गानां तन्त्रत्वमिति पौर्णमास्यां पौर्णमस्या यजेत इत्यनर्थकोऽनुवाद एव। तत्र केचित्तावद्वर्णयन्ति, प्रधानस्य केवलस्योत्पत्तिवाक्येन पौर्णमासीकालोऽवगतः, न ह्युत्पत्तिवाक्ये करणीभूतस्य कालसंयोगः, येनाङ्गयुक्तस्य तत् कालता स्यात्। तेनाङ्गानामनवगमात् कालस्य पञ्चम्यामपि प्रयोगः प्राप्नोति। तस्मादनेनाङ्गानां कालनियमः क्रियत इति। तदयुक्तम्—कथम् करणमनुगृह्णातीतिकर्तव्यतोपकरोतीति युक्तम्, तथा यस्मिंश्च काले करणम्, तस्मिन्नेवेतिकर्तव्यतेत्येतदप्युक्तम्[१]। किञ्च या च सन्निपत्योपकारिकाया[२] केतिकर्तव्यता या चाराद्उपकारिका ते उभेऽप्येकेन[३] प्रधानकथंभावेन युगपद् सम्बध्येते। ततः किमित्याह—तत्र पौर्णमास्यां प्रधानं कुर्वता [४]सन्निपत्योपकारितावदितिकर्त्तव्यतावश्यं करणीया न ह्यन्यथा प्रधानमेव निर्वर्तेत। तथाप्याराद्उपकारिकान्यकाला स्यात्। अत आह—तत्र येन प्रमाणेन सन्निपत्योपकारिकां करोषि। तेनैव प्रमाणेनाराद्उपकारिकामपि कुरु समानकथम्भावगृहीतत्वात्। किञ्च न चेदृशः कश्चित् [५]न्यायः। येन [६]प्रधानमात्रमेव कर्त्तव्यम्, पौर्णमास्यां[७] स्यात्। देशं प्रति करणीभूता उपात्ताः सेतिकर्त्तव्यताका एव कर्तव्या भवन्ति। तच्च कालैक्ये सिध्यति नान्यथेति सिद्धमङ्गानामपि तत् कालत्वम्। तस्मादवाच्यमनर्थकमिदं वाक्यमिति। अत्राभिधीयते—नैतदेवम् समे दर्शपूर्णमासाभ्यां यजेत इत्यनेन षडपि यागाः सेतिकर्त्तव्यताका

---

१. व्यत्तेद्युक्तम्ः

२. ( केति··· ···या नास्ति )

३. अप्यनेन

४. अवश्यं अधिकः पाठः

५. न्यायः नास्ति।

६. मात्र नास्ति।

७. पौर्णमास्यां नास्ति।

इतरेतरयुक्ता देशं प्रतिविधीयन्ते। तत्र षण्णामपि यागानां तन्त्रेणेति-कर्त्तव्यता प्राप्नोति, साहित्यस्य विवक्षितत्वात्, प्रयोगतन्त्रन्तु नान्यत्। तस्मादीदृशमनुष्ठानं स्यात्, येऽत्र पौर्णमासीसंज्ञका यागाः, तेषामुत्पत्ति-वाक्यवशेन पौर्णमास्यां क्रियमाणानां समीपे प्राक्तनान्यङ्गान्याज्य-भागान्तानि करिष्यन्ते, पाठक्रमात्।

एवममावास्यासंयुक्तानां समीपेऽनुयाजादीनि पश्चात्तनान्यङ्गानि करिष्यन्ते। पाठक्रमादेवम्[१]। तदेवं तन्त्रेणाङ्गप्रयोगे प्राप्ते पौर्णमास्यां पौर्णमास्या यजेत[२] 'अमावास्यायममावास्यया यजेत' इत्यनेन त्रिकं त्रिकं प्रत्यङ्गानामावृत्तिः प्रतिपाद्यते इति। अपि च समे दर्शपूर्णमासाभ्यां यजेत इत्यनेनेतरेतरयोगस्य विवक्षितत्वात्तन्त्रेणेतिकर्त्तव्यता प्राप्यते, तत्र पौर्णमास्यां[३] प्रधानं प्रारब्धममावास्यायां समाप्यते[४] प्रातः सवनारब्ध इव सवनीयः तृतीयसवने, तेन सर्वेषां प्रधानकाल इति पौर्णमास्यमावास्ययोरन्तराले यत्र क्वचिदपि कुर्वन्नङ्गानि 'समे दर्श-पौर्णमास्यौ यजेत इति साम्यमित्यस्य न किञ्चिद् बाध्यते। नापि फल-वाक्यस्य तत्रापि षण्णामितरेतरयोगावगमात्। यदि परं मां पाठक्रमो बाधीन्यन्तराले[५] क्वचिदपि कुर्वन् क्रियते[६] पुरस्तात्परस्ताच्च क्रियन्ते नत्वनयो-र्वचनयोरन्तरालकालेऽनुष्ठानेऽपि कश्चिद्बाधः। तस्मादनेन वचनेन 'पौर्ण-मास्यां 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन कालनियमोऽन्तरालकाले यत्र क्वचिदनुष्ठानमङ्गानामपनीयते।

---

१. देव।

२. एतद्वाक्यं नास्ति।

३. सर्वप्रधा०।

४. समाप्येत।

५. क्वचिदपि कुर्वन् नास्ति ०राले न क्रियन्ते इतिपाठः।

६. उच्यते नास्ति।

नियतकालता चोच्यते। चाज्यभागान्तानां पौर्णमासीकालतानुयाजादीनाममावास्याकालतेत्येवं व्यवस्थितकालता बाध्यते। **तस्मादनेनाङ्गानां कालविधिः** क्रियते। अनेन हि यागत्रयस्य करणीभूतस्य कालं प्रत्युपादानात् साङ्गं त्रयं पौर्णमास्यां कर्त्तव्यम्। तथामावास्यायामपीति त्रिकस्य त्रिकस्य सर्वाङ्गयुक्तस्य स्वेकाले प्रयोगद्वयं सिद्धं भवतीति ॥

[ २–दर्शपूर्णमासत्रिकराजसूयादिष्वङ्गानामतन्त्रत्वाधिकरणम् ]

**इष्टिराजसूयचातुर्मास्येष्वेककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥१२॥ पू०**

पशुवत् कालभेदेऽपि तन्त्रत्वाशङ्का सैषा पूर्वमेव निरस्ता। पशौ पुनरेकं प्रधानं अभ्यासास्तु विप्रकृष्यन्ते। न च तदङ्गमितिकर्त्तव्यता। कर्मार्था हि सा। [१]तत्रैकमिति युक्तोऽङ्गानां सकृत्प्रयोगः। अत्र तु कर्मभेदात् तेषां च प्रयोगाङ्गभूतदेशादिभेदेन प्रयोगभेदाद् गृह्यमाणविशेषाण्यङ्गान्यावर्तन्ते ॥१२॥

[ ३–अध्वरकल्पेष्ट्यधिकरणम् ]

**तथा स्याद् अध्वरकल्पायां विशेषस्यैककालत्वात् ॥१८॥ पू०**

[२]प्रकरणविशेषात् सर्वनिर्वापापकर्षः। ततश्च तदङ्गतापकर्षात् सर्वेषां सहोपक्रमः। यथोपक्रमं चापवर्ग इति सर्वेषामेकोपक्रमावसानानामेकयोगत्वं[३] तन्त्रमङ्गानि। वचनाच्चान्यकालत्वमङ्गानामिति पूर्वपक्षः। सिद्धान्तमाह —

**अपि वा कर्म पृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥२१॥ सि०**

(न वा) कालभेदादेकैकस्येतिकर्त्तव्यताया आवृत्तिः। यत्तु निर्वापाप-

---

१. तच्चैक० ।

२. णावि० ।

३. योगाङ्गत्वात् ।

कर्षादिषां सहोपक्रम इति तत्राह–किञ्च यस्य द्वादशकपालादिनिर्वापस्यापराह्णे करणं प्रधानकालत्वात् प्राप्तम् तस्य न प्रातःसामान्यं [1]प्राप्तम्, नापि प्रातर्विशेषः। यस्य त्वष्टा कपालादिनिर्वापस्य पूर्वाह्णे करणं प्राप्तं तस्य प्रातर्विशेषमात्रं विधीयते नियम्यते। सामान्यं तु प्राप्तमेव। तस्माद्यत्रै-कोऽर्थो विधीयते स एव पक्षो ग्रहीतव्यः। अप्राप्तविधानाद्धि प्राप्तनियमपक्षो लघीयान्। एवञ्च प्रधानकालताऽङ्गानामबाधिता भवति ॥२१॥

[ ४—एकदेवतापशुकरणे वसाहोमस्य तन्त्रताधिकरणम् ]

## वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥२४॥

कालभेदादावृत्तिर्देवताभेदे शिष्यहितार्थमिदं सूत्रद्वयम्। वसोहोमस्यैक-देवत्येषु तन्त्रत्वम् ( मित्रदेवत्येषु न तन्त्रत्वम्[2]। ) भिन्नदेवत्येष्वावृत्तिरिति न तु पूर्वपक्षाशङ्कास्ति ॥२४॥

[ ५—एकादशिन्यां यूपाहुतेस्तन्त्रताधिकरणम् ]

## अन्ते यूपाहुतिस्तद्वत् ॥२६॥ पू०

यूपभेदेनान्तिकानामपि भेदः। स्वीये एव चान्तिके कृतो होमो यूपस्योप-करोति। तस्माद्देशभेदेन गृह्यमाणविशेषत्वाद्यूपाहुतेरावृत्तिः। मैवम्। मथित्वा जुहोतीत्येतावदत्र विवक्षितम्, अन्तिकग्रहणन्तु प्राप्तनुवादः। तद्विधौ हि मथनस्य तदपेक्षयोद्देशानुवादप्राधान्याद्धोमं प्रति वोपादान [ विधेय ] गुण-भावाद्वैरूप्यं स्यात्। विशिष्टविधिश्च [3]सत्यां गतावन्याय्यः। अस्ति च गतिः। प्राप्तानुवादतया [4]अस्ति। कुतः प्राप्तिः होमस्तावदयं छेदनाङ्गमन्थनं

---

१. प्राप्तं नास्ति।

२. अयमंशो नास्ति।

३. त्यामव गता।

४. अस्ति नास्ति।

च होमाङ्गम् । तेन द्वयमपि देशतः कालतश्च छेदनं प्रत्यासन्नमसत्यपवादे कर्तव्यम् । तेन प्राप्तत्वादनुवादमात्रमिदङ्गम् तेन[1] अथापि 'विधीते तथाप्या-पेक्षिकत्वादन्तिकार्थस्यात्यन्तान्तिकस्य वा सम्भवाद्यस्मिन् देशे यूपोऽस्य दृष्टि-पथमापद्येत तत्र मथनं विधीयते । स च बहुष्वपि सर्वसाधारण्येनैकः सम्भव-तीत्यगृह्यमाण विशेषत्वात्तन्त्रता ॥२६॥

[ ६—अवभृतस्याप्सु साङ्गानुष्ठानाधिकरणम् ]

## अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्नि-संयोगः ॥३०॥ पू०

मुख्यार्थो वाङ्गस्याचोदितत्वादिति न्यायाद्यथा यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्याः इत्युपांशुत्वं प्रधानकर्मशब्दसंयोगान्नाङ्गेषु । भवति एवमारोऽपि[2] तासामपि प्रधानशब्दसंयोगात् । तेनाङ्गान्याहवनीये स्युः । स्यादेवं यदि तृतीया न श्रूयेत चरन्तीति च तत्तु द्वयमपि श्रुतम् । तेनावभृथेन स्वकार्य्यं प्रति व्यापारोऽप्सु कर्त्तव्यः । सर्वाङ्ग संयुक्तेन शक्यते नान्यथेत्यङ्गानामपि तद्देशता चरन्तीति च । प्रयोगस्यैव [3]वाचकः स्यात् । एवं तृतीया तु सर्वाङ्गप्रधानविषयः ? कृत्स्न एवाप्सु कर्त्तव्यः । तत्राश्रपणसाद-नादयोऽसम्भवादग्नौ स्थले च क्रियन्ते । अन्यत्तु सर्वमप्सु स्यादिति ॥३०॥

[ ७—वरुणप्रघासेषु दक्षिणविहारे पृथगङ्गानुष्ठानाधिकरणम् ]

## दक्षिणाग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियते ॥३५॥ सि०

आसादनमात्रं दक्षिणे विहारे श्रुतं, न होमः । सतूत्तर एव कर्तव्यः । तेन प्रधानदेशभेदात्तन्त्रमङ्गानि । वचनात्त्वन्यदेशमासादनं भवतीति मन्यते । [4]भवेदेतदेवं यद्यत्रासादनं विधीयते । तत्तु प्रकृतितः प्राप्तम् । इह हि विहारद्वयेऽ-

---

१. तेन नास्ति ।

२. मीयोऽपि ।

३. स्यादेव तृतीया नास्ति ।

प्याहवनीयस्य विद्यमानत्वात् सर्वे होमास्तदर्थां नवनिर्वापसादनादीन्यवस्थया प्राप्नुवन्ति ।

तत्र व्यवस्थामात्रमनेन वचनेन यथा प्राप्तस्यासादनस्य विधीयतेऽपेक्षितत्वाल्लाघवाच्च । तच्च होमार्थतयैव प्राप्तमिति । तादृशस्यैव नियमाद्धोमोऽपि दक्षिणे विहारे मारुत्याः इतरेषां तूत्तर इति प्रधानदेशभेदादङ्गानामावृत्तिरिति ॥३५॥

[ ८—वरुणप्रघासेषु होत्रादीनां तन्त्रत्वाधिकरणम् ]

## कर्तृभेदस्तथेति चेत् ॥४५॥

देशभेदेन प्रयोगस्य भिन्नत्वात्तदङ्गभूताः कर्त्तारोऽपि प्रतिप्रयोगं भिद्येरन् । न च 'र्त्विजः' इति वचनस्य विरोधः, [1]विहारद्वयाभिप्रायमेतद्वचनम् । विरोधेन प्रतिप्रधानपञ्चानामेवोपपादनात् । न हि तत् समुदायाभिप्रायम् । कर्तॄणां प्रयोगाङ्गत्वात् समुदायाङ्गत्वाभावात् । तस्मात् प्रतिप्रयोगं भिद्येरन् कर्त्तार इति नैवम् । पञ्चर्त्विज इति वचनं विहारद्वयाभिप्रायमेव न ह्येकैकत्र पञ्च सन्ति प्रतिप्रस्थातुरध्वर्योश्च वचनेनैव दक्षिणोत्तरयोर्व्यवस्थितत्वात् । तद्यदि ब्रह्मादयः प्रतिविहारं भिद्येरन् ततो न व्यस्तयोर्न समस्तयोः पञ्च भवेयुः । तत्र पञ्चर्त्विज इति वाक्यमनर्थकं स्यात् । अपि च शक्नुवन्त्येते तन्त्रेण[2] प्रयोगद्वयस्योपकर्त्तुमिति दर्शितं भाष्ये । तस्मात्तन्त्रमिति ॥४५॥

[ ९—वरुणप्रघासेषु पत्नीसंयाजानामतन्त्रताधिकरणम् ]

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥४६॥ पू०

देशभेदादेव प्रयोगस्य भिन्नत्वात् कर्त्तन्तरापेक्षायां प्रतिप्रस्थाता विधीयते यानि त्वापराग्निकानि कर्म्माणि तेष्वध्वर्योरेव कर्तृत्वसंभवात् । अनपेक्षिते

---

१. विहारद्वय… …विरोधेन नास्ति ।

२. णैव ।

कर्त्रन्तरे[१] प्रति प्रस्थातुर्विधिः [२]न। अतः कर्तृभेदस्याप्यभावादापराग्निकानि तन्त्रमिति। नैवम्। द्वयोरपि कर्तृदेशभेदयोः परस्परनिरपेक्षयोर्विधानात्। नहि देशभेदपूर्वकः कर्तृभेद इति प्रमाणमस्ति। विपरीतस्यापि सम्भवात्। शक्यते हि वक्तुं कर्तृभेदादेवापेक्षिते देशान्तरे दक्षिणविहारविधिरिति। तस्मादापराग्निकानामपि भेदः ॥४९॥

[ १०—ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षमात्राधिकरणम् ]

**पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः। श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्निचोदना पृथक्त्वं स्यात् ॥५१॥ पू०**

'पर्यग्निकृतानुत्सृजन्ति' इति, पर्य्यग्निकरणान्ताङ्गरीतिर्विधीयते। [३]तस्माच्च तया कृतोपकारायैतेरथै प्राजापत्यरनिराकांक्षीक्रियन्ते। गृहमेधीयवत् आज्यभागाभ्याम्। अतश्च पूर्वस्य कर्म्मणः समाप्तत्वाद्ब्रह्मसाम्न्यालम्भते। न इति कर्म्मान्तरम्। आज्येन शेषमितिवत्। द्रव्यदेवतं तत्र यदेव–तत्र यदेव पूर्वेषु[४] तदेवानुषज्यते। ब्रह्मसाम्न्या लभते तान् सप्तदशप्राजापत्यान्पशूनिति सेयमारण्यश्रुतिसामान्यमात्रेण पूर्वपक्षाशङ्केति।

**संस्कारप्रतिषेधो वाक्यैकत्वे क्रतुसामान्यात् ॥५२॥ सि०**

यथावसरं प्राप्ताः पर्य्यग्निकरणोत्तरकाला आलम्भादयः संस्काराश्च[५] अस्मिन् काले न कर्त्तव्याः किन्तु ब्रह्मसाम्नोत्येवमपि वाक्यार्थ उपपद्यमानेऽङ्गरीतिविधानं न गृह्णीमः, वाक्यभेदादृष्टकल्पनाभयाच्च[६]। तथा

---

१. न अधिक।

२. धिः न कर्तृ०।

३. तस्मात् नास्ति।

४. यागेषु अ० पा०।

५. च नास्ति।

६. च नास्ति।

सति हि वाक्ययोरत्यन्तमेव भेदः स्यात् । मिथः कर्मद्वयस्य सम्बन्धाभावात् । ततश्च कर्मभेदः कर्मभेदाच्चादृष्टभेदः स्यात् ॥

संस्कारप्रतिषेधेषु तु[1] न तेषामेव कालप्रतिषेधः[2] प्रसवश्च क्रियत इति[3] सम्बद्धार्थवाक्यद्वयं भवति कल्पनालाघवं च । अपि च मुख्यमेवात्रैक-वाक्यत्वम् । तथाहि—अस्मिन् काले [4]संस्कारा न कर्त्तव्या इत्ययमर्थः प्राप्ता-नुवाद एव । यदालम्भोऽह्यन्यस्मिन् काले विहितस्तदा तदा दिवाभि-सम्बन्धादिति न्यायादेव सर्वसंस्काराणामुत्कर्षात्मकः प्रसङ्गोऽन्यस्मि-न्पर्य्यग्निकरणकाले संस्काराणां येन प्रतिषिध्येरन् । तस्मादुत्कर्षमात्र-विधिरिति एकवाक्यता । अतो न पर्य्यग्निकरणान्तं माध्यंदिने पुनरनु-वर्तनीयम् ।

वपानां चानभिघारणस्य दर्शनादिति लिङ्गदर्शनसूत्रमाक्षिपति—यस्यापि ब्रह्मसाम्न्यालम्भन[5] इति कर्मान्तरं तस्यापि पशुपुरोडाशस्येव[6] माध्य-न्दिनकालस्य तत् कालानां कर्म्मान्तराणामपि पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' इतिन्यायात् । प्रासङ्गिका एव प्रयाजाः तस्मादेतद्दर्शनमयुक्तम् । द्वयोरपि वादिनोः प्रयाजाभावेनानभिघारणस्य तुल्यत्वात्पूर्वपक्षेऽप्युपपन्नम-नभिघारणदर्शनम् तत्र केचिद्वर्णयन्ति-एतेषां प्राजापत्यपशूनां द्वौ पक्षौ । तत्रैकः पक्षः क्रतुपशुभिः सहस्थानां पर्य्यग्निकरणं कृत्वोत्सृज्य ब्रह्मसाम-

---

१. पुनस्ते ।

२. प्रतिप्र ।

३. इति नास्ति ।

४. संस्काराः ।

५. भत इ ।

६. यैव ।

काल[१] आलम्भनम् । द्वितीयस्तु सह क्रतुपशुभिः । [२]अस्मिँश्च समाप्तिः । अस्मिँश्च द्वितीये पक्षेऽवपानामभिघारणं विद्यते, संनिहितत्वात् यदा च माध्यंदिने सवने आलम्भस्तदा[३]यत्तद्वपा.[४] अभिघारणं तन्नास्ति, वपाया[५] अनुत्पन्नत्वात् । प्रयाजावसरे वपानाम् । भवत्येवम् किमायातं लिङ्गस्येत्याह–तत्र कर्मान्तरत्वे योऽसावाभिरेवपाभिः पक्षान्तरेऽभिघारणेन संस्कारे[६]शङ्का स्यात् कर्मति नान्तरीयकः प्रयाजशेषप्रतिपत्त्यर्थेनापि निय[७]तांशतुल्यो हविषाऽनुभूतः, तस्येदीनामविद्यमानत्वाद्दोषाशङ्कावचनमुपपद्यते सव्या वाय एत र्हीति । अभिघारयितव्यानां ह्यनभिघारणे दोषाशङ्का स्यात् । कर्मान्तर पक्षे तु तदीयाभिर्वपाभिः कदाचिदपि स धर्मोऽभिघारणादिरननुभूतपूर्वः । तत्र सव्या वा य ए(व)तर्हीति दोषाश शङ्कैव नास्तीति दोषाशङ्कादर्शनादकर्मान्तरत्वमिति इदमपि नोपपद्यते [८]कर्मान्तरवादिनोऽपि [९]हविषां संस्कारश्चोदकेन प्राप्नोति सचेह नास्ति इत्याशङ्कावचनमुपपद्यत एव अभिधार्य्याणामन)भिधारणादिति । तस्मादयुक्तमेवेदं लिङ्गं परमतत्त्वेन नेतव्यम् ॥५२॥

---

१. लं आलम्भः ।

२. अस्मिन् नास्ति ।

३. तदायत्तत् नास्ति ।

४. वपाअभि० ।

५. वपायाः नास्ति ·

६. रोनान्तरीयकः प्र.

७. यमांशजलो ।

८. ममकर्मा० ।

९. हीवनोपि अ. पा.

[ ११—पञ्चशारदीयाधिकरणम् ]

## पञ्चशारदीयस्तथेति चेत् ॥ ५४ ॥ पू० ।

सप्तदशमारुतीस्त्रिवत्सा अप्रवीता उपकरोति इति [१]द्रव्यदेवता-संयोगः। सप्तदशपृश्नीनुक्ष्णे इत्यपि पूर्वासु त्रिहायनीषु या देवता सात्रानुषज्यते मारुतानुपाकरोतीति। तस्माद्द्रव्यदेवतासंयोगाच्च चतुस्त्रिंशत्कर्माण्यन्ये(नान्यनेन)वाक्येन विधीयन्ते, तत्रैतद्द्वितीयं वाक्यम्, 'तान्पर्य्यग्निकृतान् प्रोक्षितान् [२]इतरान् आलम्भन्ते प्रेतरानुत्सृजन्ति' इति। तत्र तानिति प्रकृताः परामृश्यन्ते [३]प्रेतराशब्देन स्त्रीलिङ्गेन वत्सतर्य्य उच्यन्ते। तासामालम्भानु(नममुक्षण !)ज्ञावचनेन लक्षणया विशसनादि कृत्स्नं चोदकप्राप्तं क्रियते। अतस्तासु संदेह एव नास्ति। प्रेतरानुत्सृजंतीत्यनेन पुंल्लिङ्गेनानड्वाह उच्यन्ते। तेष्वेव सन्देहः किं पर्य्यग्निकरणान्तयाङ्गरीत्या क्लृप्तोपकारायानड्वाह एकवाक्यतां गत्वा चोदकेनाङ्गानि न गृह्णन्ति यथारण्या उत प्राजापत्या (निव) प्रातःसवनकालेऽनड्डुहामपि यथाप्राप्तकाले संस्काराणां प्रतिषेधः, सुत्यहस्त्यु च प्रतिप्रसवो ब्रह्मसामकाल इवेति। किन्तावत् प्राप्तम्। संस्काराणां प्रतिषेधोऽयं अस्मिन् कालेऽनड्डुहामालम्भनादयः न कर्त्तव्याः संस्कारा इति यथा प्राजापत्त्यानाम्। ततस्त्रींस्त्रीनुक्ष्ण(नतुङ्गा)एकैकस्मिन् सौत्येऽहन्यालम्भेतेति ? तेषां सुत्यासु प्रप्रिप्रसव [४]इति यथा[५] ब्रह्मसाम्न्यालभते[६] कर्म-

---

१. पदमेतन्नास्ति।

२. आ इति वर्तते।

३. तत्रेतरा।

४. इति नास्ति।

५. प्राजापत्यानां ब्र०

६. इति। तमेवन्यायं दर्शयति—क०

शेषप्रतिषेधे तु[१] तास्तानिति च कर्मान्तरं कल्प्येत प्रतिसंवत्सरम।[२] त्रींस्त्रीनिति च तत्र च वह्वदृष्टं कल्प्येत। देवतापदानुषङ्गादिति[३]। प्रकृतवचनः [४]श्वतछलर उच्यन्ते बाध्यते। संस्कारप्रतिषेधे तु तेषामेवानुडुहां द्वितीये सम्वत्सरे पर्य्यग्नि॰रणणान्न संस्कारमात्रं विधीयते, न यागः, तथा त्रीँत्री-नित्यपि प्रतिसंवत्सरं संस्कृतानामुक्षणां पञ्चमे वर्षे सुत्यासु सर्वेषामेवालम्भादि-प्रतिप्रसवमात्रं [५]( तद्देवतानुषङ्ग इति। अहंमतिरानुवंध्यदृष्टान्तरछन्दवाधश्च) न भविष्यतीति न चोदनैकवाक्यत्वात्। 'सप्तदशमारुतीः पृश्नीरुपा-करोति' इति द्रव्यदेवतासंयोगाद्यागचोदनैषा सप्तदशप्रश्नीनुक्षण इत्यस्य साङ्काक्षत्वान्निराकांक्षीकरणेन भवितव्यम्। तत्र मारुतीराल-भत इत्यनेन मनसि विपरिवर्तमानेन निराकांक्षीक्रियते। अत्र च द्वयी गतिः यदि वानडुहः प्रति मारुतीरालभत इत्यनुषज्यते अथवा मारुती-रालभत इत्येतत्प्रत्यनड्वाहो नीयन्ते। तत्रैव [६]निर्णयः अनड्वाहः-सापेक्षाः। तेन यस्मिन्नेव क्षणे त्रिहायन्यः सम्बन्ध्यन्ते तस्मिन्नेवान-ड्वाहोऽपि इति[७] तेन न मारुतीरालभत इत्यस्य प्रथमं वत्सतरीभिः सम्ब-द्धस्य पश्चादनडुत्स्वनुषङ्गः। किन्तु युगपदेव वत्सतरीणामनडुहां चोपाकरोतीत्यनेनाख्यातेनान्वयः। एवं च परस्परापेक्षित उपायाङ्काक्षा-निमित्तः सम्बन्धो भविष्यत्येकवाक्यत्वं च भविष्यति। इतरथा पूर्व-स्मिन् वाक्ये निराकांक्षीभूतस्याख्यातपदस्य पुनराकांक्षा कल्पनीया

---

१. सति अ० पा०
२. तथा अ० पा०
३. ति नास्ति।
४. तच्छब्दोबाध्येत।
५. तत्रदेवतापदानुषङ्गः कर्मान्तरानुबन्ध्यदृष्टान्तरतच्छब्दबाधश्च।
६. ष।
७. इति नास्ति।

ततः पश्चात् पुनः[1] सम्बन्धः कल्प्य इति[2] वाक्यभेदस्तु स्फुट एव। तस्मादेकेनानेन वाक्येन चतुस्त्रिंशत् कर्म्माणि विधीयन्ते सप्तदश मारुती पृश्नी सप्तदश च पृश्नीन् मारुतान् कुर्य्यादिति। तेषां च [3]चतुस्त्रिंशत्कर्म्मणां चोदकेन प्रकृत्यपेक्षायां सत्यां तत्रैकेषामनडुहां पर्यग्निकृतानामुत्सर्गः क्रियते। अथपरेषां स्त्रीपशूनां यथाप्रकृति। एवं द्वितीयादिष्वपि सम्वत्सरेषु। ननु पूर्वपक्षवाद्यपि चतुस्त्रिंशत्कर्माण्ये[4]—कवाक्यत्वं चेच्छत्येव कर्मशेषप्रतिषेधन्तु नेच्छति। पर्य्यग्निकृतानुत्सृजतीति संस्कारप्रतिषेधं त्विच्छति प्राजापत्यवत्। नचानेनैकवाक्यत्वव्याख्यानेन भाष्यकारीयेण स पूर्वपक्षो निराक्रियते। तस्मात् कथमेतदेकवाक्यत्वादिति सूत्रं व्याख्येयम्। उच्यते। प्राजापत्येषु यः संस्कारप्रतिषेधः स ब्रह्मसाम्न्यालभत इत्यस्य प्रतिप्रसव वाक्यस्य सामर्थ्यात्। अस्मिन् हि सत्यनुवादो वा संस्कारप्रतिषेधो वा पर्य्यग्निकृतानुसृजन्तीति भवतीत्युक्तम्। इह तु न शङ्क्यः त्रीँ स्त्रीनन्वहमालभते पत्रोत्तमेऽहनीत्यनेन सुत्याकाले प्रतिप्रसवः कर्तुं येनोत्सर्गवचनमनुवादः संस्कारमात्रप्रतिषेधो वा स्यात्।[5] अत्र हि यदालभते [6]तत्पञ्चाश [7]तांस्त्रोत्तमेऽहनीति गुणपरत्वे सत्यर्थद्वयस्य विधानाद् वाक्यभेदः स्यात्। एवं त्रीँ-स्त्रीनित्यपि योज्यम्। तस्मादेतत् सुत्या कालिकं कर्मान्तरम्। तदा

---

१. पुनः नास्ति।

२. इति नास्ति।

३. त्रिशब्दोनुक०।

४. ण्यन्यांनि क्रियन्ते पूर्वेषां समाप्तत्वात्। ननु पूर्वपक्षवाद्यपि चतुस्त्रिंशत्कर्माण्येक इति पाठः।

५. क्षत्र।

६. तत्।

७. चान्त्ये।

ह्यपूर्वकर्मविधानादेकवाक्यता भवतीतिसूत्रार्थः । [1]व्याख्यान्तरमाह—**अपि च यस्य(मते) संस्काराः** प्रतिषिध्यन्ते **तस्य द्वितीये सम्वत्सरे पर्य्यग्निकरणं न प्राप्नोति** कृतत्वात् **तेन तत्तावद्विधातव्यं उत्सर्गश्च** विधेयः । तत्रार्थभेदात् वाक्यभेदः स्यात् । तथा [2]च **विवक्षाभेदश्च** पर्यग्निकृतानित्यत्र स्यात् । एकत्र हि वत्सतरीषु प्रकृतितः **प्राप्तमनूद्यते** पर्यग्निकरणम्, अन्यत्र त्वनडुत्सु प्रागेव [3]पर्याग्निकृतत्वात् पुनः पर्य्यग्निकरणस्याप्राप्तेः पर्य्यग्निकरणान्तरमप्राप्तं विधीयते । **सकृदुच्चरितस्य** च पर्य्यग्निकरोतीति, शब्दस्यैतदुभयरूपत्वमन्याय्यं वाक्यभेदप्रसङ्गात् । अपि च नात्रापाकरणं विधीयते, तत्तुनिर्वपतीतिवत् प्रकृतिलिङ्गमात्रम् । यागास्त्वेते वैशाख्याममावास्यायां चतुस्त्रिंशद्विधीयन्ते । तेषु यदि सप्तदशयागाः कालान्तरं नीयेरन् उत्पत्ति—[4]विशिष्टकालबाधः स्यात् । तस्मादारण्यवत्तदन्ताङ्करतिविधाने सुत्यासु च कर्मान्तरविधिरिति । **अत्रानन्तराधिकरणमतिक्रम्य लिख्यते ।**

[ १२–अभिषेचनीयदशपेययोर्भिन्नताधिकरणम् ]

वयन्तु किञ्चिद् ब्रूमः—

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ॥ ५७ ॥ पू०**

मूल्यं दत्वा परकीयस्यात्मीयत्वकरणं क्रयः, · चोपसम्वादस्यास्ति ताद्रूप्यम् । तस्मात्तत्र गौणो लोके क्रीणातिः । न चेह गौणाश्रयणे प्रमाणमस्ति । तस्मान्मुख्यस्याङ्गभूतस्य क्रयस्यायमुपकर्ष इति तदन्तापकर्षा-

---

१. ख्यानान्त० ।

२. च नास्ति ।

३. त्वात् नास्ति

४. वि नास्ति

तुल्योपक्रमावभिषेचनीयदशपेयौ । तथैव समापयितव्याविति समानतन्त्रौ । सत्यमेवम् । तथापि वचनान्तरानुगुण्याद्रुपसंवादपर एवायं क्रीणातिः व्याख्यायते । दशपेये हि सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति इति श्रूयते । तथाभिषेचनीयेऽवभृथदर्शनम् । तस्माद्भिन्नतन्त्रौ ॥५७॥

[ १३—वरुणप्रघासेष्ववभृथस्य कर्मान्तरत्वबोधनाधिकरणम् ]

**निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ॥६३॥ पू०**

वारुण्यामिक्षोत्पन्नतस्या[१] एकदेशः पूर्वमावापस्थाने हूयते । एकदेशश्चोत्तरत्र समिष्टयजुरनन्तरकाले तयैव [२]क्रियया सम्बध्यते वरुणदेवतया । यथा पशोरेकदेशः प्रातःसवने हूयते, तृतीयसवने चैकदेशस्तद्वदत्रापीति । सौर[३] यदि स एव यागः कथं तर्ह्यवभृथशब्द अत आह—अवभृथशब्दो देवतासामान्येन गौणः, अवभृथोऽपि वरुणदेवत्य इति देशसामान्येन वा अप्सुहि निष्कासप्रचारोऽवभृथवदिति । अथ धर्मातिदेशः कस्मान्न भवति इति चेत् तद्धर्मककर्मान्तरविधिरित्यर्थः । उच्यते । यत्र ह्याख्यातेन कर्म प्रतिपाद्यते, तत्र यन्नाम तद्धर्मातिदेशकं भवति यथा 'मासमग्निहोत्रं जुहोती'ति । जुहोतिना कर्म प्रतिपाद्यते अग्निहोत्रशब्दस्तु धर्म्मातिदेशक इति । इह तु नाम शब्द एव केवलः श्रूयते ।[४] स एव कर्म विधास्यति, स एव च धर्म्मातिदेशको भविष्यतीति गौरवमनुपपन्नम् । नहि अभ्यवन्ती[५]त्यनेन कर्म प्रतिपाद्यते, गमनमात्रवचनत्वात । तेन तस्यैवामिक्षायागस्यायं प्रचारविप्रकर्ष इति ।

---

१. तस्यां ए.

२. स्वीयथा

३. सौर नास्ति

४. माणः

५. यन्ती.

## अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६४॥ सि०

नायं प्रदानविप्रकर्षः कुतः ? अवभृथशब्दकेन कर्म्मणा कर्मान्तरेण निष्कासस्य संयोगात्। नन्वनुवाद इत्युक्तम्। सत्यमुक्तम् तत्वयुक्तम्। असत्यां हि गतावनुवाद आश्रीयते। अस्ति[1] तु गतिः। लक्षणया धर्मातिदेशको भविष्यतीति। नन्वाख्याताभावात् केन विहितस्य कर्मणेत्यनेन धर्म्मातिदेशः क्रियते अत आह—लक्षणया चाऽयमेव यागं प्रतिपादयिष्यति। अवभृथधर्मकं कर्म कुर्य्यादिति। प्रत्ययार्थेन करोतिनावभृथशब्दः सम्बध्यते। तद्धर्मकत्वाच्च तदीयदेवतायोगाद्यागोऽयं भवति। विशिष्टविधानाच्च वाक्यभेद इत्यने(अनेना)ननाऽयमाभिक्षायागान्निष्कासस्येति।

अत्रानन्तरं ननु भवतु यागान्तरम् नापनयो द्रव्यस्य, किन्तु तस्यैव प्रतिपत्तिरियं याग इत्याशङ्क्योत्तरं सूत्रम् प्रतिपत्तिरिति चेन्न कर्मसंयोगादिति ॥ ६५ ॥

तस्यार्थमाह—न चेयन्तुषनिष्कासस्य प्रतिपत्तिः। कथम ? यथा तेन प्रसिद्धेनावभृथेन कृतं तथानेनापि कर्म्मणेति नामधेयेनावगम्तते। तत्र च द्रव्यं गुणतो यागः प्रधानतः। इह तु विपरीतम् तत् कथं तद्भावमाप्नुयात्, तेन यस्यैव नामधेयस्य प्रसादात् कर्मान्तरमिदं सिध्यति, तत् एवार्थकर्म तथैव तत् सिध्यतीत्यपनय इति ॥१३॥

[ १४–प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् ]

## उदयनीये च तद्वत् ॥ ६६ ॥ पू०

सिद्धान्तोपक्रममिदमधिकरणम्। अथवा प्रसिद्धोदयनीधर्मकं कर्मान्तरं निष्कासद्रव्यकं विधीयत इति प्रथमः पक्षः। तथा च द्वितीये सूत्रे कर्मान्तरत्वनिराकरणं भाष्यकारेण कृतमिति। निष्कासस्यायं प्रयाजशेषस्यैव[2]

---

१. च गति.

२. व न प्रति।

प्रतिपत्तिरुदनीयहविर्निर्वापसंयोगः । प्रकृतत्वाचोदनीयस्य प्रकरणान्तरस्वाभावान्न कर्मान्तरत्वमिति द्वितीयः । सिद्धान्तस्तु—

निष्कासः प्रायणीयार्थो यथा संस्कारमर्हति ।
तथैवोदनीयार्थं हविश्चापि तमर्हति ॥
नचैकेनेतरस्यास्ति किञ्चिद्दृष्टं प्रयोजनम् ।
तेन शब्दवशादेव गुणप्राधान्यनिर्णयः ॥
सप्तम्यां गुणभावश्च निष्कासस्य प्रतीयते ।
द्वितीययेतरस्यापि प्राधान्यं गम्यते ततः ॥
निष्कासो गुणभावेन पुरोडाशकपालवत् ।
उपवन्तु प्रधानत्वं हविषः स्यादिति स्थितम् ॥

इति श्रीपार्थसरथिमिश्रविरचिते तन्त्ररत्ने
एकादशाध्यायस्य द्वितीयः पादः ।

अथ श्रीपार्थसरथिमिश्रविरचिते तन्त्ररत्ने
एकादशस्याध्यायस्य तृतीयः पादः ।

[ १—अङ्गानां मुख्यकालान्यकालकर्तव्यत्वाधिकरणम् ]

## अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥१॥ सि०

अतः प्रभृत्यष्टाधिकरणान्यतिक्रम्य लिख्यते । वयन्तु तेष्वपि किञ्चिद्ब्रूमः । यदुक्तमेकदेशकालकर्तृत्वमङ्गानां प्रधानैरिति कश्चिन्मन्दधीः सर्वत्रैवापवादकेऽपि वचने सति तथा मन्येतेति । तस्य बुद्धिं व्यावर्तयितुमिदमुच्यते । वचनात्कालान्तराद्यपि भवतीति ।

[ २—आधानस्य तन्त्रताधिकरणम् ]

## द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्, स्वस्वकालत्वात् ॥ २ ॥ सि० ।

कर्मार्थतामाधानस्य कृत्वा चिन्त्यते । सत्यां च तस्यामङ्गान्तरवद्भेदेन प्रयोक्तव्यम्, न च बहिः कालत्वेनागृह्यमाणविशेषता । यद्यस्यानन्तरं क्रियते ।

[१]तदर्थमित्याधानान्तर्य्येण विशेषग्रहणात् । तस्मात् कर्म्मणि कर्म्मणि प्रयोगः नैतदेवम् । अङ्गमपि सदेतद्वचनात् स्वकाले कर्त्तव्यम् न तु कर्मकाले, अतोऽगृह्यमाणविशेषत्वात् तन्त्रता । न चानन्तर्य्यविशेषग्रहण-कारणम् नान्तरीयकत्वात् । न च कस्यचित् कर्म्मणः प्रक्रमेऽस्य प्रयोगः । नापि कर्म्ममध्ये, येन विशेषग्रहणं स्यात् । किन्तु यदेवं किञ्चदग्निकार्य्यं तद्यथा प्राप्तकालं मया कर्त्तव्यमित्यभिसन्धाय, सर्वेषां तेषां वसन्तकाला-धानापेक्षत्वात् सर्वार्थमाधत्ते । तथाकृते कारणवशाद्यपि प्रथमं किञ्चिदा-पतति तथापि न तावन्मात्रेण तादर्थ्यमेव भवति । तस्मात्तन्त्रम् ॥ २ ॥

[ ३–अग्निष्टोमे पशूनां यूपतन्त्राधिकरणम् ]

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥ सि० ।

अत्रोपदिष्टोऽग्नीषोमी[१]यो यूपः । सवनीयानुबन्ध्ययोस्तु [२]स्वकालैस्त्वति-दिष्टः । तत्र मुख्या[३]दग्नीषोमीयार्थस्यैव यूपस्यापकर्षो दीक्षासु यूपं छिनत्तीति नेतरयोः यथाध्वरकल्प्यामाद्यस्यैव पुरा वाचः । प्रवदतीति कालविधिः एवमिहापि ।

इतरयोस्तु [४]स्वकालभेदेनोत्पादयितव्यो यूप इति मन्यते । सिद्धान्तस्तु मुख्यत्वमात्रेण श्रुतेः सङ्कोचायोगादविशेषात् सर्वापकर्षः । अध्वरकल्पायां त्वप्राप्तविधितो नियमविधेर्बलीयस्त्वात् प्रधानकालाबाधाच्च तथाश्रितम् । इह तु त्वग्नीषोमीययूपस्याग्नीषोमप्रणयनान्तरं पठितस्य दीक्षासु प्रयोगोऽत्यन्ता-प्राप्त एवं, प्रधानकालश्च बाधश्चावर्जनीय इत्यविशेषात् सर्वेषामपकर्षे सत्य-गृह्यमाणं विशेषत्वात् पूर्ववदत्रापि तन्त्रता ।

---

१. आधान नास्ति

२. स्वकालैः नास्ति :

३. मुख्यत्वात् ।

४. काले ।

यत्तु भाष्यकारेण त्रिवृता यूपं परिवीयेति [1]परिव्याणविधानमुपन्यस्तं तदयुक्तम् । नहीदं परिव्याणविधानं यागविधिपरत्वात् अस्य परिव्याणविधाने गौरवात् परिव्याणस्य च आश्विनं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययते इति वचनान्तरेण प्राप्तत्वात् । त्रिवृत्वस्यापि रशनाधर्मसाधारण्यादेव सिध्येत ।

[ ४—यूपसंस्काराणां तन्त्रताधिकरणम् ]

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ पू० ।**

सत्यमेवम् परिव्याणविध्युपलक्षणार्थं तु भाष्यम् ।
न तु वाक्यविशेषेऽतात्पर्यम् तस्माददोषः ॥

छेदनमात्रस्यापकर्षो न प्रोक्षणादीनामश्रवणात् । [2]तेन तेषामग्नीषोमीयकालत्वेन विशेषग्रहणात् सवनीयान् बन्ध्ययोर्भेदेनानुष्ठानमिति उच्यते । दीक्षासु यूपं छिनत्ति इति विनायमर्थः—यूपं सन्तं छिनत्तीति, यूपस्यासिद्धत्वात् । किन्तु छेदनेन यूपं कुर्य्यादिति । न च तावन्मात्रेण शक्यते यूपः कर्तुं छेदनादिजन्यानेकसंस्कारसमुदायवचनत्वाद्यूपशब्दस्य स्यति [3]च प्रदर्शनार्थं छेदनग्रहणं दीक्षासु छेदनादिभिर्यूपं कुर्य्यादिति । तेन प्रोक्षणादयोऽपि दीक्षाकालाः । नन्वेवं 'यूपं छिनत्ति' इति छेदनविधेः कोऽर्थः ? न हि तत्र छेदनशब्दः प्रोक्षणाद्युपलक्षणार्थ इति शक्यते वक्तुम् । अतः तेऽत्र यत्र यूपं कर्त्तुं खदिरं छिनत्तीति वाक्यार्थः, तथासत्यत्रापि यद्यूपार्थं छेदनं तस्यैवायमपकर्षोऽस्तु किं लक्षणाश्रयणेन । तस्मात् प्रोक्षणादयोग्नीषोमीयकालाः सत्यम् । तथापि काष्ठस्य तावत् सर्वार्थत्वात् तस्य चाग्नीषोमीयकालकृतैरेव प्रोक्षणादिभिर्यूपता सिद्धेति तत् सिध्यर्थानां प्रोक्षणादीनां न पुनः प्रयोगः यथातिथ्याकालसंस्कृतस्य बर्हिषो न पुनरुपसदग्नीषोमीयकाले संस्कारा

---

१. यूपपरि :
२. तेन नास्ति ।
३. तेन ।

भवन्ति तथेहापि। तत् [1]कालस्त्विति चाग्नीषोमीयकाला एव संस्कारास्तन्त्रेण सर्वेषामुपकुर्वन्तीति सूत्रार्थः। भाष्यकारेणापि पूर्वत्रापरितोषादेवापरा व्याख्या कृतेति वेदितव्यम्। तथा वार्तिककारेणापि तृतीयेऽध्याये पश्वधिकरणे तत्-कालास्तु यूपकर्मत्वादित्येवमग्नीषोमीयकालकृतादेवोपकारसिद्धेरिति वदतैवमेव व्याख्याङ्गीकृतेति।

[ ५—स्वरुतन्त्रताधिकरणम् ]

## स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ २ ॥ पू०

'यूपस्य स्वरुं करोति' इति। यच्छकलं पश्वञ्जनायादत्ते तद्यूपशकलं इति वाक्यार्थ इत्युक्तम्।

उपादानं चाञ्जनकालेऽर्थात्कर्त्तव्यं न पूर्वम् कारणाभावात्। तस्मादग्नीषोमीयकालोपात्तस्य स्वरोस्तदपवर्गेपवर्गोऽपवर्गात्पश्वन्तरकालेऽन्योपादानम्। यः प्रथम इति चैकस्मिन्प्रहरणे यः प्रथम इति शास्त्रार्थः। तेन सम्भवन्ति बहुषु प्रहारेषु बहवः प्रथमशकला इति मन्यन्ते। सिद्धान्तस्तु प्रहरणस्यानु-पात्तत्वाच्छकलशब्दोपात्तानां सर्वेषां शकलानां यः प्रथमः स उपादेयः। तेनैकयूपानां पशूनामेक एव प्रथमः शकलोऽङ्गमग्नीषोमीयकालेऽप्युपात्तस्तन्त्रं स्यात्। अपि च छेदनकाल एव व्यामोहनिवृत्त्यर्थं नाशापहारपरिहारा(यचा) यावश्यमुपादाय रक्षितव्यः शाकल इत्यगृह्यमाणविशेषत्वादपि तन्त्रता॥

[ ६—कृष्णविषाणाप्रासनाधिकरणम् ]

## अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाहनि विकल्पः स्यात् ॥ १३ ॥ पू०

उत्तरयोः सवनयोः प्रकृतौ पाणिकंडूयनं कृतं शास्त्रप्रयुक्तं मन्वानस्य पूर्वपक्षः। तेन यदि प्रथमेऽहनि प्रास्येत परेषां प्रातःसवनानां विषाणकण्डूयनं

---

१. ला।

धर्मो बाध्येत। न हि तस्याः पुनरुपादानं संभवति। प्रकृतौ हि त्यागात्मकं प्रासनम्। नचपुनरुपादानस्य त्यागबुद्धिः संभवतीति विकल्प एव न्याय्यः। नैवम्। पाणिकण्डूयनस्यार्थकृतत्वेन प्रकृतावशास्त्रीयत्वात्। तस्मादविरोधादन्त्येऽहनि प्रासनम्॥ १३॥

[ ७—नानाबीजेष्वन्त्यबीजे वाग्विसर्गनियमाधिकरणम् ]

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात्॥१५॥ सि.**

"तां सहविष्कृता वाचं विसृजति" इति व्याभाषणमेव विधीयते, न पाणिकण्डूयनवदशास्त्रीयतेति विशेषाशङ्का। नैवम्। नात्र व्याभाषणं विधीयते वाग्यमविधायकेनैव विधिना सहावधिप्रतिपादनेनैकवाक्यत्वे संभवति वाक्यभेदायोगात्। रागप्राप्तत्वाच्च व्याभाषणस्याविधेयत्वात्। तस्मादिहाप्यन्त्ये विसर्गः।

[ ८—पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले विसर्गाधिकरणम् ]

**पशौ च सपुरोडाशे समानतन्त्रं भवेत्॥ १६॥ सि०**

इह तु प्रासङ्गिकत्वात् 'पशुनैकेनैव[1] वाग्यमनेन पुरोडाशकार्यसिद्धेः, न तत्र वाग्यमनेन कार्य्यमिति पशुकाले विसर्ग इति विशेषाशङ्का। कर्तृसंस्कारो वाग्यमो नारादुपकारकः। तेनावाचंयमेन क्रियमाणाः पौरोडाशिका निर्वापादयो विगुणा भवेयुः। तस्मात् पुरोडाशकाले विसर्गः।

[ ९—अग्नियोगविमोकाधिकरणम् ]

**अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात्॥१७॥ पू०**

---

१. पाशुकेनैव

सर्वापवर्गे विमोकः कर्त्तव्यः। कुतः? 'अग्निमेव त्द्युनक्ति इत्यनेन तावद्विशेषोनावगम्यते[1]; प्रधानार्थो [2]योगो नाङ्गानामिति। न च प्रकरणेन विशेषलाभ इत्याह—अग्नौ च युक्ते प्रधानान्यङ्गानि च क्रियन्ते। यथा वेद्यां हवींष्यासादयति [3]इत्युक्तं हविषां प्रधानहविषां च सर्वेषां वेद्यामासादनं भवति न तु प्रकरणमाश्रित्य प्रधानहविर्भिर्विशेष्यते। यथा चात्र चाहवनीये संमार्गः क्रियमाणो न शक्यते वक्तुं प्रधानस्य योऽग्निस्तस्यायं संमार्गो नाङ्गानां योग्निरिति सर्वसिहाप्यग्नेः सर्वार्थत्वेनाविशेषात्तु संस्कारार्थो योगः सर्वार्थः प्रकरणस्याविशेषकत्वादिति युक्तम् सर्वार्थेव योगे सर्वापवर्गे विमोक इति॥

सिद्धान्तमाह—

**प्रधानापवर्गे वा तदर्थत्वात् ॥१८॥ सि०**

प्रधानापवर्गे विमोकः। कुतः? 'पञ्चभिर्युनक्ति, पाङ्क्तो वै यज्ञः' इति श्रुतत्वाद्यज्ञसंयोगेन। यज्ञशब्दश्च प्रधानवचन इति वाक्यशेषात्तदर्थो योगस्तदपवर्गेऽपवृज्येत इति। तमिमं सिद्धान्तं दूषयति—नैतद्युक्तम् पञ्चभिर्युनक्तीति इति गुणवाक्यमिदम्। पञ्चसंख्या ह्यत्र गुणो विधीयते। न त्वग्नियोगः। तेन तदैकवाक्यत्वात् संख्याया एवायमर्थवादो न योगस्य। अपि च स्ववाक्यसामर्थ्यादपि तस्या एव संख्यायाः 'पाङ्क्तो यज्ञः' इत्ययमर्थवादः संभवति। पञ्चाक्षरा हि पङ्क्तिरित्यर्थवादस्याभिप्रायः। न त्वग्नियोगस्यायमर्थवादो घटते। [4]कथं तर्हि तदनन्तर्हि (?) योगविधिः, अत आह –'अग्निं युनज्मि शवसा घृतेनेति जुहोति' इत्यनेन कर्म्मो-

---

१. न इत्येव पाठः

२. यागो मु०

३. त्युक्तेऽङ्ग

४. केन तर्हि

त्पद्यते। तथापि कथं प्रधानार्थता च [1]भवत्यत आह—उत्पद्यमानं च कैमर्थ्याभिलाषि भवति [2]गुणविध्यवस्थायाम्। तत्र चोत्पत्त्यवसरे यत् प्रकरणेन वाक्येन वा प्रयोजनसम्बन्धो दीयते। यदिति क्रियाविशेषणम्। तेन निराकांक्षी भवति। इह तु वाक्येनैवास्य प्रयोजनं दीयतेऽग्नियोगः अग्निमेव तद्युनक्तीति। तस्मिंश्च वाक्ये यज्ञसंयोगो नास्ति, येन प्रधानार्थता स्यात्। अपि च यद्यपि तूत्पत्तिवाक्य एव यज्ञसंयोगो भवेत्, तथापि यज्ञशब्दो यागमात्रवचनश्चेदङ्गयागानपि वदति, (न) प्रधानयागानपिवे चे (?) दित्यसन्दिग्धे सन्दिग्धवचनं शास्त्राणि चेतिवदिति, [3]तत्राविशेषाद्यागमात्रेणाग्नियोगस्य [4]संयोगः सम्बन्धः। यदप्यवभृथे च तद्वदित्यवभृथे होतृवरणप्रतिषेधात् सौमिकवरणस्य केवलप्रधानार्थत्वावगमात्तत्तुल्यन्यायस्याग्नियोगस्यापि तादर्थ्यमिति लिङ्गदर्शनसूत्रं [5]तदप्ययुक्तम्। सौमिकमपि वरणमङ्गप्रधानार्थं न केवलप्रधानार्थमिति भावः। तथाहि—तत्रापि योऽयं यज्ञसंयोगो 'यदवृता वषट्कुर्य्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छेत्' इति।

अयमपि गुणवाक्यस्याथवाद [6]एव। 'ऋत्विजो वृणीत' इत्यस्य तूत्पत्तिवाक्यस्य नायं शेषः। तेन सौमिकमप्यङ्गप्रधानार्थमेव वरणम्। नन्वेवमवभृथे वरणस्य पृथक् प्राप्त्यभावात् प्रतिषेधोऽनर्थकः स्यात्, अत आह—यत्तावज्ज्योतिष्टोमस्यादौ दृष्टार्थं कर्तृणामानत्यर्थं वरणं क्रियते, तत् साङ्गस्य ज्योतिष्टोमस्य कर्तृणां समाख्यादिभिरङ्गप्रधानार्थत्वात् संस्कारार्थवरणमप्यङ्गप्रधानार्थम्।

---

१. न भवति?

२. न गुण १९।१

३. तत्र वि०

४. योगः

५. एत०

६. इव नास्ति

यत्तु प्रकृतितो द्वितीयं होतृवरणं प्राप्तं दीक्षणीयादिषु तत् प्रवृत्तेहोतरि क्रियमाणं प्रकृतावप्यारादुपकारकम्। अतो न दृष्टार्थेन सौमिकेन वरणेन प्रत्याम्नातुं शक्यमिति वक्ष्यते द्वादशे। अवभृथे चा [1]दृष्टार्थत्वात्। लुप्तार्थत्वात्? प्राप्तमदृष्टार्थं वरणं पूर्वपक्षेऽपि युक्तं यत् प्रतिषिध्यते। तेन नानेन प्रतिषेधेन सौमिकस्य वरणस्य प्रधानार्थता शक्या वदितुमिति न लिङ्गता। इतश्च न लिङ्गमित्याह **तत्रापि चोदकाभावात् नित्यानुवाद एव**। अपूर्वो ह्यवभृथ इत्युक्तम्। तेन प्राकृतस्य वरणस्याप्राप्तत्वात्तदेव[2] पक्षद्वयेऽप्यनुवादोऽयं न प्रतिषेध इत्यलिङ्गता। इदन्तु दूषणमति[3]शयार्थम् न तत् पारमार्थिकम्। तथाहि यद्यप्यपूर्वोऽवभृथः, तथापि प्राकृतावाज्यभागाविह इज्येते। प्रकृतौ च होतृसंस्कारार्थं वरणम्। होता च सर्वार्थः। तेन ह्याज्यभागयोरपि समाख्यानाद्याज्यानुवाक्यादि वक्तव्यम्। तत् संस्कारार्थं च वरणमत्यप्यतिदेशे आज्यभागार्थतयाऽवभृथे प्राप्यत इति कार्य्यः प्रतिषेध.।

तस्मात् पूर्वमेव दूषणं अङ्गप्रधानार्थत्वे सत्यपि सौमिकस्य [4]दृष्टार्थस्य प्राकृतस्य तेन प्रत्याम्नानाभावात् प्राप्तिरस्त्येवेति। **तस्मात् प्रतिषेधो न लिङ्गं घटते**। अवश्यं चादृष्टार्थत्वादेव प्राप्तिर्वक्तव्या। दृष्टार्थत्वे हि यद्यपि सौमिकं वरणं प्रधानार्थं स्यात्तथापि[5] यथा दक्षिणा सौमिकी प्रधानार्थापि

---

१. चालुप्तार्थमदृष्टार्थं न०

२. प्तत्वात्प०

३. तिशयोक्तं नपा०

४. दृष्टार्थत्वाददृष्टात्वाददृष्टार्थेऽस्य प्रा०

५. तथाभाव: श्रूयते।
तेन यैः कैश्चिद्यद ?
यज्ञापत्तेश्चैयंजमानसंस्कारण्या (?)
धानमेव धारणमवश्यं कर्तव्यमिति।
अत्र सिद्धेऽपि यथा द० अधिकः पाठः।

प्रयोगाङ्गत्वादङ्गषु दक्षिणां निवर्त्तयति, तथा वरणमपि। तदपि हि कर्तृसंस्कारत्वात् प्रयोगाङ्गम्। तस्मादनुपपन्नं लिङ्गम्। यदप्यपरं लिङ्गम्—**द्वादशाहे स वाहरहर्युनक्ति अहरह**[1]**र्विमुञ्चतीति** प्रत्यहं योगविमोकदर्शनं तदप्यङ्गप्रधानार्थे योगे विमोके च घटत एव। कथमित्याह—यद्युनक्तीति योगमनूद्य तदहरहरिति गुणविधानमेतद्भविष्यति। न हि सर्वानुवादः प्रयोजनवान्। अतः सर्वादौ योगे सर्वान्ते च विमोके न्यायात् प्राप्ते वचनमिदमहरहरिति विशेषविधानार्थमर्थवद्भवति। तेन विपरीतमिद लिङ्गमिति भावः। तस्मात् प्रत्याख्येयमधिकरणं ससूत्रभाष्यम्। अथवैवं सूत्राणि व्याख्येयानि—सिद्धान्तोपक्रममिदमधिकरणम्। अग्नियोगः, सोमकाल इति सिद्धान्तसूत्रम्। प्रधानापवर्गो वा तदर्थत्वादिति पूर्वपक्ष[2] (सूत्रम् पाङ्क्तो यज्ञ इति वाक्यशेषात् प्रधानमात्रसम्बन्धात् प्रधानार्थतापि। अवभृथेच तद्वदिति पूर्वपक्ष) एव लिङ्गमुक्तम्। तच्चादृष्टार्थता होतृवरणस्थानालोच्य पूर्वपक्षवादिनोपन्यस्तमिति वेदितव्यम्। अहर्गणे च प्रत्यहं स्यात् तदर्थत्वादिति सिद्धान्तसूत्रम्। तु शब्दस्थाने (च) शब्दः। प्रधानार्थत्वे ह्यहर्गणे प्रत्यहं योगविमोकौ न्यायादेव प्राप्तौ स्याताम् केवलप्रधानार्थत्वात् तत्राहरहर्युनक्तीति न वक्तव्यं स्यात् उक्तं च तत्। तस्मात् लिङ्गात् साङ्गप्रधानार्थम्। प्राप्तिस्तु पूर्वोक्तैव यज्ञार्थवादस्यात्रासमर्थत्वादिति॥

[ १०—अहर्गणे सुब्रह्मण्यावाहनस्य तन्त्रताधिकरणम् ]

**सुब्रह्मण्यातुतन्त्रं दीक्षावदन्यकालत्वात्॥ २१ ॥ सि०**

यूपच्छेदनन्यायेन तन्त्रता सिद्धा। उत्तरविवक्षार्थं प्राप्यते।

[ ११—द्वादशाहे सुब्रह्मण्याह्वानस्यातन्त्रताधिकरणम् ]

**तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात्॥ २२ ॥ सि०**

---

१. वि भाष्ये न०

२. ( ) कोष्ठान्तर्गतः पाठो नास्ति।

[1]अग्न्यशब्दः प्रकृतौ सुत्यैकत्वादविवक्षितः । देवतासंस्कारार्था च सुब्रह्मण्या । सा च सकृत् संस्कृता यावत् प्रयोगमवतिष्ठते । यूपाहुतिवच्चैकसान्निध्यमवश्यंभावीत्यगृह्यमाणविशेषत्वात्तन्त्रमिति पूर्वः पक्षः । सत्यमग्न्येत्यविवक्षितम् कालभेदेन तु ग्रहणाद्देवतासंस्कारोऽयं तत्कर्म्माङ्गापवर्गेऽपवृज्यत इति प्रत्यहमाह्वानं कर्त्तव्यमिति सिद्धान्तः ॥

[ १२—देशकर्तॄणामनियमाधिकरणम् ]

**[2]लौकिकेषु तु यथाकामी संस्कारानर्थलोपात्[3] ॥ ३३ ॥ सि०**

वरणसम्मार्जनादयो वैदिका द्रव्यसंस्काराः प्रतिप्रयोगं कर्तव्या एव । लौकिकन्तु द्रव्यस्वरूपम्प्रति सन्देहः किम्प्रतिप्रयोगमन्यदेवोपादेयमुत तद्वान्यद्वा अनियम इति । तत्र बर्हिरादिवन्निरिष्टिकत्व[4]बुद्धिरस्ति । तस्मादनियमः । नन्वृत्विगाचार्य्यौ नातिचरितव्याविति वचनात्तैरेव भवितव्यम् कथमनियमः ? उच्यते । पुरुषधर्मोऽयं न कर्म्मधर्मः । तस्मादनियम इति ॥

[ १३—यज्ञपात्राणां यावज्जीवं धारणाधिकरणम् ]

**यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ सि०**

न प्रतियोगमन्योऽन्यो[5] वोपादेयानीत्येतावत् स्थितं पूर्वाधिकरणे तन्मात्रे-

---

१. अशब्दः

२. लौकिकेषु शास्त्रदीपिकापाठः

३. स्यादिति शास्त्रदीपिकापाठः

४. त्वादन्यदेवेति प्राप्तेऽभिधीयते । सत्यं निरिष्टकै शिष्टानाचरन्ति । न चर्त्विगादिषु शिष्टानां निरिष्टकत्वबु० अधिकः पाठः

५. अन्यान्येवो

णैव चर्त्विक्षु देशे च पर्यवसिता कथा । इदानीं पात्रेषु चिन्त्यते[1] किमनियमः किं वा सकृदुपात्तान्येव यावज्जीवं धारयितव्यानि इति तदर्थं च परिधानि[नीये]र्यानि[2] कर्मणि पात्राणां गुणभाव उत प्रतिपत्तिरिति चिन्त्यते । तत्र सिद्धान्तेनैवोपक्रमते यज्ञायुधानीति । पूर्वपक्षस्तु तृतीयानिर्देशात् पात्राणां गुणभावः श्रूयते । तेन यैः कैश्चिद्यज्ञपात्रैर्यजमानसंस्कारसिद्धेर्नाद्यानामेवधारणमवश्यं कर्त्तव्यमिति ।

अत्र सिद्धान्त्येकदेशी कश्चिदाह—भवतु गुणभावः, तथापि धारयितव्यानि, मरणस्यानियतत्वात् । [3]तदादावुपयुक्तेषु पात्रेषु परित्यक्तेषु प्रयोगोत्तरकाले चानागते यजमानो म्रियेत तत्र यज्ञपात्राभावाद्विगुणः संस्कारः स्यात् । तेनावश्यं तावत् प्रयोगान्तरकालं यावद्धारयितव्यानि । तेषु च धारितेषु च सत्सु नान्यैः प्रयोजनमिति सोऽपि प्रयोगस्तैरेव कर्त्तव्यः । एवमुपरिष्टादपीति सिद्धं यावज्जीवं धारणम् । अस्मिन्नवसरे प्रसङ्गात् किञ्चिच्चिन्त्यते—किं पौर्णमास्या आरभ्यधारणम् ? उताधानादारभ्येति । तत्र प्रकृतौ पात्राणां प्रथमप्राप्तिरिति तत आरभ्य धारण मन्वाधानस्योत्तरं पवमानेष्टिषु [4]तु पात्राणां चोदकप्राप्तेः तासां च प्राक्पौर्णमासात्प्रयोगात् ततःप्रभृति धारणम् । अन्यथा प्रागेव प्रकृतितो मरणसंभवादाहिताग्निः सन्नैतैर्दह्यते[5] । तस्मात्ततः प्रभृति धारणमिति । प्रासङ्गिकं समाप्य मूलाधिकरणशेषमुच्यते नैतदस्ति गुणभूतानि

---

१. किमनियमः किं वा सकृदुपात्तान्येव धारयित ( व्यानि त ) दर्थं च परिधानीये कर्मणि किं पात्राणां गुणभाव उत प्रतिपत्तिरिति चिन्त्यते तत्र ( अधिकः सङ्गतः पाठः )

२. यानि नास्ति

३. कदाचित्त्यक्तेषु पात्रेषु प्रयोगान्तरकाले चा०

४. तु पात्राणां नास्ति

५. दह्येत

पात्राणीति । प्रतिपत्तिस्तेषां नानाकर्मसूपयुक्तानामपेक्षितप्रतिपत्तित्वात् । 'दक्षिणे पाणौ जुहूमासादयति' इत्यादि द्वितीयसंयोगाच्च दहने तु कामं तृतीया-संयोगात् परार्थानामपि (तेषां) सत्वं[१] पुरोडाशकपालवद्भवतु गुणभावः । [२]न सादने तु प्रतिपत्तिरेव ।

अतश्चावश्यं धारणम् । इतरथा प्रतिपत्तिलोपेन वैगुण्यापत्तेः । ननु गुण-भा[वादेव]वेऽपि धारणसिद्धेः किमर्थं [३]प्रयत्नेनैवं प्रतिपत्तिसाधनम् । उच्यते । न सिध्यति तदा नियमेन धारणम् । तथाहि यद्यपि मरणस्यानियतत्वात् प्रयोगो[४]-त्तरकालेऽन्यानि नवानि पात्राणि लभते तस्येच्छावशेन पूर्वेषां त्यागे अपरेषां चोपादाने न कश्चिद् दोषः स्यात् । तस्मान्नियमेन तान्येव दिधारयिषता त्र प्रतिपत्तिरेव वक्तव्या । अस्मिंश्च पक्षे पवमानहविःप्रभृतिधारणं स्पष्टं न चिन्तनीयमस्ति । इतरथा विहितप्रतिपत्तिलोपापत्तेः । अत एव चास्मिन् स्थिते पूर्वपक्षासम्भवादर्थकर्मपक्षांस्थापयित्वान्तरागर्भिणीरूपेणैषां चिन्ता कृता ॥

नन्वेवं प्रतिपत्तित्वे पात्रवतां कर्म्मणामिदमङ्गं स्यात् । ततश्चामरणात् कर्म्मणामसमाप्तत्वान्न किञ्चित् कर्म्मैहिकफलं स्यात् । तत्र केचिदाहुः-अप्रवृत्तेषु कर्मसु विधीयमानः प्रतिपत्तिनियमोऽयं न क्रत्वर्थः, किन्तु पुरुषार्थोऽयं एवं प्रतिपादितेषु पुरुषस्याभ्युदयो भवतीति । अन्ये त्वाहुः यद्यपि क्रत्वर्थः, तथापि कृतकरणद्रव्याणां प्रतिपत्तिरियम् न तु तत्कार्य्यम्प्रतिपत्त्यधीनम्, येन प्रति-पत्तिं यावत् प्रतीक्षेत । प्रतिपत्तिनियमविधिना त्वेवं कल्प्यते । अन्यथा प्रति-पन्नेषु द्रव्येषु कृतमपि कार्य्यं विनश्यतीति तेन विनापि प्रतिपत्त्या फलवन्त्येव कर्म्माणि यदि प्रकारान्तरेण न प्रतिपादितं द्रव्यम् । अन्यथा

---

१. सतां

२. न नास्ति

३. प्रयत्नेन प्रति०

४. गान्तरकाले

तु प्रतिपादितेषु यान्यकृतफलानि तत्कालस्थानि कर्म्माणि तानि नश्यन्तीत्यनवद्यम् ॥

[ १४—वाजपेये सर्वसोमोत्तरं प्राजापत्यप्रचाराधिकरणम् ]

**उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४६ ॥ सि०**

चोदकानुग्रहात् आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति च क्रमानुग्रहादार्भवकाले प्रचार इति प्रथमः पक्षः। शस्त्रवतां सोमानामुपरिष्टादिति द्वितीयः पक्षः। अवापस्थान ( आगन्तुकानां स्थान ) इति तृतीयः। सिद्धान्तमाह—यद्यार्भवकाले प्रचारः क्रियते, अप्रवृत्तिविशेषकरं वाक्यं स्यात्। उपरिष्टात् सोमानामिति चोदकेनैव प्राप्तत्वात् सवनीयस्य ( तुआर्भ० ) ह्यार्भवकाले प्रचारो विहितः। स चोदकेनैकादशिनान् गत्वा ततः प्राजापत्यानागच्छति। ननु चोदकप्राप्तकालबाधेन 'तीर्थं वै प्रातःसवनं यत् प्रातःसवने पशव आलभ्यन्ते तीर्थ एवैतानलभते' इतिवचनात्[1] (नेन) 'तान्पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्न्यालभते' इति वचनाद्ये प्रातःसवने माध्यंदिने सवने वा साकल्येन कर्त्तव्याः प्राप्नुवन्ति। तेन तार्तीयसवनिकार्भवकालेऽङ्गस्यप्रचारविधानार्थमर्थवद्वचनम्। तस्मिंश्च सति [2]वपाहोमान्तं पूर्वयोः सवनयोर्विकल्पेन भविष्यति। अङ्गप्रचारस्त्वार्भवकाले। उच्यते। प्रातःसवने माध्यंदिने सवनेवेति य एते भवदुक्ते ( वाक्ये ते ) संस्कारवाक्ये, आलम्भमात्रश्रवणात्। अङ्गप्रचारस्त्वार्भवकाल एव चोदकप्राप्ते कर्त्तव्यः, नान्यस्मिन् काले। तस्माद्वचनार्थवत्वात् सर्वसोमानामूर्ध्वमिति परेण सम्बन्धः।

ननु माभूदार्भवकाले। वाक्यानर्थक्यात् शस्त्रवतां सोमानामुपर्य्यावापस्थाने वा किमिति न भवत्यत आह। अविशेषान्त्सर्वसोमानामूर्ध्वम्। नहि

---

१. वचनात् इत्येव पाठः

२. वपाहोमानं इत्येव पाठः

विशेषः श्रूयते। एतेषां सोमानामिति विशेषाभावात् सर्वेषामुपरीति [1]विज्ञायते। नन्वाग्निमारुतादूर्ध्वं प्रहृत्य परिधीनिति च क्रमविपर्य्यासः प्राप्नोतीत्युक्तमेव। उच्यते। आग्निमारुतं सोमाङ्गम् अनूयाजाश्च पश्वङ्गम्। अनयोरङ्गाङ्गिभावस्तावन्नास्ति, येनाग्निमारुतं कृत्वानन्तरमनूयाजाः क्रियमाणाः सगुणाः भवेयुः। न चैत आग्निमारुता[2]दूर्ध्वमित्यनेनाऽनूयाजादय एकेन प्रयोगवचनेन गृह्यन्ते येनाग्निमारुतं कृत्वानूयाजाः क्रियेरन्। तस्मादनङ्गत्वात्क्रमस्य तल्लोपे न दोषः। किं तर्ह्याग्निमारुतादूर्ध्वमित्यनेन क्रियतेऽत आह—प्रकृतौ परिध्यग्निसम्मार्जन [3]लक्षणोत्तरकालमनूयाजा द्वितीयक्षणे प्राप्नुवन्ति। तदेवमीदृशे चोदकेन प्राप्ते सतीह द्वितीये क्षणेऽनूयाजा न कर्त्तव्याः, किन्तु क्षणमात्रमग्निमारुतकालं यावत् स्थित्वा कर्तव्या इत्येव कालविधानेन चोदकशेष एवेदं वचनं न त्वाग्निमारुतानूयाजयोः क्रमविधानार्थं स चोदकं बाधते। द्वितीयेऽपि प्रहृत्य परिधीनिति वाक्येऽप्येमेव कालविधानं वक्तव्यम्। नन्वेवं लक्षणा भवतीति चोद्यभाष्यमनुभाषितम्, न हीति [4]निराकरणभाष्यानुभाषणम्। तत्र कारणं भाष्योक्तमर्थतोऽनुभाष्यते। 'क्त्वा' शब्दः कालवचन एव स्मर्य्यते। न त्वसौ प्रकृत्यर्थस्य परिधिप्रहरणस्य कालमाह। न हारियोजनस्य। अत आह—स तावत् परिधिप्रहरणस्य पूर्वकालतायां श्रुत्या वर्तते तद्वशादेव परिधिप्रहरणं कृत्वा तत उत्तरकालं हारियोजनः कर्त्तव्य इति गम्यते। अतः सर्वाण्येव पदानि श्रुतिवृत्तानि तथाग्निमारुतशब्दोऽपि स्वार्थमेव प्रतिपादयति, ऊर्ध्वशब्दोऽपि श्रुत्यैव कालमाह। न तु किञ्चित् पदं लक्षणावृत्तं पश्यामः। नन्वाग्निमारुतस्य न वाक्यार्थान्वय-

---

१. विनास्ति

२. दूर्ध्वमित्यनेन नास्ति

३. ल नास्ति

४. भाष्यानुर्जक्षण. मु. पा. नास्ति

कस्य तर्हि, तत्सम्बन्धिनः कालस्य। अतः कथं न लक्षणा यदि चैवमपि न लक्षणा क्व तर्हि लक्षणा भवत्यत आह—ईदृशे तु विषये लक्षणा भवति यथा 'गौर्वाहीकः' इति, गोशब्दो वाहीके प्रयुज्यमानो गोसम्बन्धि तिष्ठन्मूत्रभक्षणादिकं लक्षयति। न हि तत्र तिष्ठत् भक्षणादिवचनः कश्चिच्छब्दोऽस्ति गोशब्देनैव तु लक्षयितव्यम्, यथा वाकृतिर्व्यक्तिलक्षणार्था भवति एवमत्र न काञ्चिल्लक्षणां पश्यामः। इह हि श्रुत एव कालवचन'क्त्वा'शब्द ऊर्ध्वशब्दश्च परिधिप्रहरणाग्निमारुते अपि श्रुत्यैवोक्ते क्त्वाद्युक्तंकालं [1]विशेषतः विशेषणत्वाच्च तयोर्वाक्यार्थान्वयः न लक्षणावदिति। एवं भाष्यमनुभाष्य चोदयति—एतेन व्याख्यानेन वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यत्र यो दोष उक्तोऽङ्गप्रयोजनसम्बन्धं वदता सिद्धान्तवादिना पूर्वपक्षवादिनः कालविधिमिच्छतो (निष्ठितो) [2]लक्षणं स्यादिति, स नास्ति। सर्वेषां श्रुतिवृत्तत्वात्। एवमन्यत्राप्यग्निचित्वेत्येवमादाविद दूषणं वक्तव्यम्। प्रदर्शनार्थन्तु वाजपेयोदाहरणमिति। उच्यते। नैतदेवम्। अत्रापि हि प्रहृत्य परिधीनिति लक्षणा तेष्वपि वाजपेयादिषु लक्षणा काचिदस्ति। कथम्? पदार्थो ह्ययमाग्निमारुतादिरुच्चार्यमाण उपलभ्यते[3] तस्य स्वरूपं चेहाकर्त्तव्यं तस्य वचनान्तरेण निर्ज्ञातत्वात्। तथान्यत्रापि स्वरूपं न कर्त्तव्यम्। अनूयाजानामङ्गत्वानभ्युपगमात्। तथा तन्त्रस्वरूपेऽपि न किञ्चित्कर्तव्यम्। अनूयाजानामेतदङ्गत्वाभावात्। (अधिकः) किमर्थं तर्ह्युच्चारणं परार्थ तस्यानुयाजस्य यः कालस्तं लक्षयितुम्। एवं सर्वत्र वाजपेयादिष्वपि लक्षणा द्रष्टव्या। एवमुक्तं भवति-स्वार्थस्य वाक्यार्थान्वयाभावात् परविशेषणत्वेनोच्चारणाल्लक्षणा वाचोयुक्तिः। अत्रत्वेतदुच्येत स तु परो गङ्गायां घोष इत्यादिवन्नाश्रुतः। किन्तु श्रुत एव क्त्वा शब्दस्य कालवचनत्वात्। अतो नातीव लक्षणादोष इति सर्वमनवद्यम्॥

---

१. विशेषपतः विशेषणस्यादिति स नास्ति सर्वेषां श्रुतिवृत्तत्वात् अधिकः

२. लक्षणा

३. अत्र वार्तिकमधिकं वर्तते। तस्य व्याख्या नास्ति।

[ १५—वाजपेये सूक्तवाके सोमदेवतासङ्कीर्तनाधिकरणम् । ]

**उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः, पश्वनङ्गत्वात् यथा निष्कर्षेऽनन्वयः ॥ ५३ ॥ पू०**

**सवनीयानां या देवता** 'भृज्यन्निन्द्राय हरिवते धानाः' इत्याद्याः सूक्तवाके श्रुताः। **ताः सूक्तवाकोत्कर्षेऽपि** नोत्कृष्यन्ते। कथम् **पश्वनङ्गत्वात् सवनीयानां** देवतानाम्। अङ्गत्वे सति तदुत्कर्षेस्याप्युत्कर्षः। सोमाङ्गानां न पश्वंगोत्कर्षादुत्कर्ष इत्युक्तम्। 'असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत' इति ( जै० सू० ५-१-२७)। तद्यथा पौर्णमास्यां प्रयुज्यमानः **सूक्तवाकोऽमावास्यादेवता** इन्द्रादीन्नाकर्षति, एवमिहापि पश्वर्थतया तृतीयसवनं नीयमानोऽपि सूक्तवाकः पौरडाशिकीदेवता नाक्रष्टुमर्हति वाक्यसंयोगात् **प्रस्तरस्तावत्** पश्वङ्गमिव प्रासङ्गिकस्तेषां सवनीयानां यदार्थश्च **प्रस्तरस्तदर्थमेव** ततसंकाररूपं प्रहरणम्। **प्रहरणाङ्गं च सूक्तवाक** इत्युक्तं तृतीये। **तस्मादनया** परिपाट्या सूक्तवाकोऽपि **परार्थः,** पश्वर्थः **सूक्तवाकमध्ये च सवनीयदेवतापाठात्तेन सहैकवाक्यता** अवगम्यमानैकवाक्यताऽपकर्षे च सत्येकवाक्यता बाध्यते। नतु बाध्यताम् लिङ्गं हि वाक्याद्बलीयोऽत आह—**अपि चापकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः** भृज्यन्निन्द्राय हरिवते धाना इत्येतावत् साकाङ्क्ष न कंचिदर्थं प्रतिपादयेत्। **न च तन्त्रपदानामग्निमद्यहोतारमवृणीतायं** सुतासुती यजमान इत्यादीनामपकर्षो **लभ्यते**। येनैतानि निराकाङ्क्षी **भवेयुः। परार्थत्वात् सूक्तवाकस्य।** तस्मादेषामप्युत्कर्षः। यत्तु यथा न पौर्णमास्यां प्रयुज्यमानः सूक्तवाकोऽमावास्यादेवता उत्कर्षति तद्वदिहापीति। तत्राह—**पौर्णमास्याममावास्यायां च** तन्त्रेण साधारण्येन **सूक्तवाको** विनियुक्तः **प्रकरणाविशेषात्।** तेनोभयार्थत्वात् सूक्तवाकस्योभयत्रापि तन्त्रपदलाभेन नैराकांक्ष्यसभवात्तत्रापकर्षो **युक्तः। इहतूत्कर्षे सूक्तवाकस्य** तन्त्रपदानामप्युत्कर्षात्तदपेक्षा **उत्कृष्टा एव सवनीयानां देवताः प्रकाशयिष्यन्ते।**

अत एव लिङ्गविरोधो न भवति । उत्कृष्टैरपि सवनीयदेवतानामेव प्रकाशनादिति ।

विना तन्त्रपदैरेषां प्रयोगो नास्ति तानि च ।
उत्कृष्टानि परार्थत्वादेतान्यपि तथा ततः ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने एकादशस्याध्यायस्य तृतीयः पादः ॥

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने एकादशस्याध्यायस्य चतुर्थः पादः ॥

[ १—राजसूये पृथग्दक्षिणायुक्तानामिष्टीनामतन्त्रताधिकरणम् । ]

**चोदनैकत्वात् राजसूयेऽनुक्तदेशकालानां समवाया-तन्त्रमङ्गानि ॥ १ ॥ पू०**

देशकालभेदाभावात्तन्त्रता । न च कर्तृभेदोऽपि विद्यत इत्युपरितनेऽधिकरणे विवक्ष्यते । न च कर्तृरूपस्यापि भेदः प्रमाणाभावात् । दक्षिणाभेदः प्रमाणमिति चेत् न । अभेदेऽपि तदुपपत्तेः । सह प्रयुक्तानामपि कर्म्मणां त्रिभागेन दक्षिणा वचनाद् भविष्यति । अथवैकैवेयं प्रयोगदक्षिणा तत्र तत्र विभज्य दीयते यथा द्वादशाहेऽन्वहं द्वादशशते दीयमानेऽपि न दक्षिणाभेद इत्युक्तम, एवमिहापि, सर्वं देयं समाहृतं यावद् भवति तावत्येकराजसूयस्य दक्षिणा प्रयोगार्थत्वाद्दक्षिणायाः प्रयोगस्य च फलसामग्रीविषयत्वात् समस्तस्य च सामग्रीत्वादिति प्राप्तेऽभिधीयते—युक्तं द्वादशाहे । तत्र हि न प्रत्यहं दक्षिणाशब्दः श्रूयते, दानमात्रश्रवणात् । इह तु प्रत्येकं दक्षिणाशब्द-श्रवणात्तस्य चोत्साहकरवचनत्वात् । यदि समाहृता दक्षिणा स्यात्ततो दक्षिणा-वयवे दक्षिणाशब्दो लक्षणावृत्त इत्युपगम्येत । न च श्रुतिसम्भवे लक्षणा युक्ता । तस्मात् दक्षिणाभेदादानतिभेदः । तद्भेदाच्च तदधीनस्य कर्तृरूपस्य भेदः वामनानतिर्ह्येकत्राङ्गम् । श्यामानतिरन्यत्र । प्रयोगाङ्गं चानतिर्नासति भेदे घटते । तस्मात्तन्त्रभेदः ॥

[ २—राजसूये ऋत्विङ्नियमाधिकरणम् । ]

## अनियमः स्यादिति चेत् ॥ ४ ॥ पू०

दक्षिणाभेदात्तत्कृतानतिर्विशिष्टेन रूपेण कर्तॄणां भेदात् प्रयोगभेद उक्तः इदानीं तु कर्त्तारो धर्म्मिणश्चिन्त्यन्ते। किन्त एवोत तेवान्ये वेति। तदर्थं च चिन्त्यते किं कारणं तन्त्रमुत पृथगेवेति। पूर्वपक्षमाह—**पवित्रस्य दक्षिणाम्नानात् पवित्रस्य ये कर्तारः ते** केवलपवित्रार्थमुपादीयन्ते **द्वितीयस्य** त्वभिषेचनीयस्य **सोमस्य तेऽनङ्गं** कथम् उत्तरम्—**अनियमेनकर्तॄणामुपादाने प्राप्ते वचनाद्वरणेनैवोपादानं नियम्यते।**

**तच्च नियमवचनं यस्यैव** कर्म्मणोऽर्थेनोपादत्ते उपादापयतीत्यर्थः। **तस्यैव** तेऽङ्गम् कथमित्याह—**द्वितीयस्य** हि कर्म्मणो योऽसौ पूर्वस्मिन कर्म्मणि कृत **उपादाननियमो** वरणाख्यः सोऽङ्गं **न भवति**। कथमित्याह—यथान्ये पदार्था भेदेन क्रियन्ते देशकालदक्षिणाभेदात् **एवं वरणमपि भेदेन प्राप्नोति**। ततः किमित्याह—तत्र वरणान्तरे क्रियमाणे **यदि वा त एव** द्वितीयेऽपि सोमे **वरीतव्याः**, अथवान्ये नास्ति नियमः। [1]एवमैष्टिकेष्वपि।

## नोपदिष्टत्वात् ॥ ५ ॥

**स्वाराज्यकामस्य राजसूयसंज्ञको** यागसमुदाय **उपायत्वेन चोद्यते**। न त्वेकको यागः। तेनासावुपायभूते यागसमुदाये **प्रवर्तमानः** सहायत्वेनादावेवर्त्विजो वृणीते। अनेन मा **राजसूयसंज्ञकेन** कर्मसमुदायेन **याजयतेति**। **तच्च** सर्वादौ क्रियमाणमगृह्यमाणविशेषणत्वात् **सर्वषां कृतं भवतीति** तावत्तन्त्रम्। ततश्च कर्तॄणामपि तदानतानां तन्त्रता। **अपि च समुदायमुदिश्य** क्रियमाणेषु **योऽयं कालो निर्ज्ञातो** यागः स **तत्काल एव**

---

१. अपिशब्दात्पशुष्वपि भेदेनैव वरणं कर्तव्यमिति वरीतव्यानामनियमः। अधिकः पाठः

करिष्यते । [1]अनियमेनोपादाने पूर्ववृत्ताः पुरुषा नेच्छेयुरपि कदाचिद-त्रनच लभ्येरन् तत्र योऽसौ काल उपदिष्टः स बाध्येत [2]ततः कर्म्मवैगुण्यात् फलाभावो भवेत् । तस्मान्न प्रतिकर्म वरणं कर्त्तव्यमिति ।

एवं शास्त्रीयवरणविषयमधिकरणं व्याख्यायाक्षिपति—अयुक्तमिदं व्याख्यानम् तथाहि यः कर्म्माणि विजानाति तस्य राजसूयेनाधिकारः । स चैवं विजानाति ऐष्टिकं वरणमिष्ट्युद्देशेन क्रियमाणमिष्टिष्वेवोपकरोति न सौमिकेषु । यच्च सौमिकं वरणं न तदैष्टिकेष्विति । स कथमेवं जानानः सर्वोद्देशेन वृणीत । यथादावेवाधाने कृते कश्चिदेवं वरणं कुर्यात् अहं कर्म्माणि करिष्ये तत्र मे भवन्त ऋत्विजो भवतेति यथैतदप्रमाणमशास्त्रीयं वरणं तथैतदैष्टिकेष्विति स कथमेवं जानानः सर्वोद्देशेन वरणं कुर्यात् । एवमिदमपि । न कश्चिदनयोर्विशेषः शास्त्रीयत्वाभावात् । नहि, सर्वादौ वरणं शास्त्रेण विहितम् यत्तु चोदकप्राप्तं तद्देशकालभेदात् प्रतिकर्म कर्तव्यम् । न हि पवित्रस्य यः कालः सोऽन्येषां येन भवितुमर्हति कालैक्यात् वरणस्य तन्त्रता स्यात् । न च तस्य पवित्रस्यान्यः सोम इष्टिर्वाङ्गं येन प्रासङ्गिकेन वरणेन वान्यत्र वरणनिवृत्तिः स्यात् । यथादीक्षणीयादीनां ज्यौतिष्टोमिकेन वरणेनात्मीयवरणनिवृत्तिः । तद्वदिह नास्ति । यदप्येतदुच्यते—समुदायमुद्दिश्य व्रियन्त इति तदप्ययुक्तम् न हि समुदायः फले चोद्यते, येन तदर्थं वरणं स्यात् कथं न चोद्यतेऽत आह—कतरो वा शब्दः समुदायस्य वाचको यस्तस्य फलसाधनतामवबोधयेत् राजसूयशब्द इति चेत् तत सोमपशिवष्टिदर्विहोमाः हि निरपेक्षा उत्पन्नाः न समुदायः । ते च निरपेक्षा एव प्रयोजनमपेक्षन्ते । तेषामपेक्षमाणानां संनिधानरूपः (श्रूयमाणः) शिष्यमाणो राज्यसूयेन स्वाराज्य-

---

१. अनियमेन तूपा०

२. तत्र इत्येव पाठः ।

( ) कुण्डलितांशो नास्ति ।

कामो यजेत' इति शब्दः तानेव रूपवतः फले विदधाति । न समुदायम् । ये च फले विधीयन्ते तेषामितिकर्तव्यता । अयमपि च वरणनियम इतिकर्तव्यतांशेन गृह्यते । तेनेदमपि प्रत्येकमेव कर्म्मणामङ्गम् ।

ननु प्रत्येकमप्यङ्गं सत्तन्त्रेणानुष्ठीयमानं न दुष्यतीति । इमामाशंकामपनुदन्नुपसंहरति—तस्माद्यथान्येतिकर्तव्यता देशकालभेदाद् भेदेन क्रियन्ते एवं वरणमपि भेदेनैव कर्तव्यम् । न हि वरणस्य कश्चिद्विशेषः तदपि हि देशकालभेदात् गृह्यमाणविशेषणं तन्त्रं भवितुमर्हति । यथा च दर्शपूर्णमासयोरेकफलसाधनत्वेऽपि कालभेदान्न तन्त्रमृत्विग्वरणं तद्वदत्रापि । तस्मादेकेनैकस्यैव कर्म्मणो भेदेन देशकालभेदेन कर्तव्यं वरणम् । यदि च देशकालभेदमनादृत्य समुदायमुदिश्य [1]वरणमिष्यते ततोऽन्यापीतिकर्तव्यता कस्मात्तन्त्रेणैव न क्रियते कस्तव वरणे पक्षपातः । वरणेन हि सर्वाणि कर्म्माणि तन्त्रेण सद्योपक्रान्तानि भवेयुः । यथोपक्रमं च समापनमित्यन्यापीतिकर्त्तव्यता तन्त्रमेव स्यादित्याक्षेपः । समाधत्ते-यस्मादेवं तस्माद्यदेतदेतदंगभूतं वैदिकं वरणं [2]नैव तच्चिन्त्यते । किन्तु योऽयं लौकिकोऽभ्युपायः कर्मादावर्थादवश्यकर्त्तव्यः स चिन्त्यते किं तन्त्रं पृथग्वा उत तन्त्रमेवेति । तत्र पूर्वपक्षवादी लौकिकस्य शास्त्राभावादर्थलक्षणत्वादर्थस्य च सर्वथा सिद्धेरनियमेनैव लौकिकमप्युपायमिच्छति । सिद्धान्तवादी तु कर्ममध्ये विघ्नप्रसङ्गं परिजिहीर्षुः, लौकिकमप्युपायमादावेव तन्त्रेण नियमेनेच्छति । अन्यथा कदाचित् तेष्वनिच्छया निवृत्तेष्वन्येषां च, अलाभात् कर्म विहन्येत, कालातिपत्तिर्वा स्यात् । न च दर्शपूर्णमासयोरिवान्तरा विरामोऽस्ति येन पुरुषान्तराणि गृह्येरन् । तस्मात्तन्त्रम् । भाष्यमपि लौकिकाभिप्रायं व्याख्येयमिति ॥

---

१. तन्त्रेण वरण ।

२. नैवेदं मु० पा० ।

[ ३—अवेष्टेर्भिन्नतन्त्रताधिकरणम् ]

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥८॥ पू०

ननु दक्षिणाभेदाद् भेद एव युक्तः। कथमेकं तन्त्रमत आह—**बार्हस्पत्यं मध्य इति** मध्यशब्दोऽयं श्रूयते। यदि चान्यान्यपि हवींषि तन्त्रेण क्रियन्ते एवं मध्यशब्दो भवति नान्यथा। **आहुतिमाहुतिं हुत्वेति च तन्त्र एवोपपद्यते वीप्सा**। बह्वपेक्षा हि सा तन्त्रता। इयन्त्वेकैवाहुतिरिति वीप्सा नोपपद्यते। प्रधानहविराहुत्यभिप्रायं चेदमाहुतिमाहुतिं हुत्वेति नाङ्गाहुत्यभिप्रायम्। 'हविषो हविष इष्ट्वा बार्हस्पत्यमभिघारयति' इति शाखान्तरवचनात्। 'एतयान्नाद्यकामो यजेत इति चैकवचनेन प्रयोगः श्रूयते। प्रयोगाभिप्रायं हीदमेकवचनं कर्म्मणां बहुत्वात् तद्यदि भेदेन प्रयोगो भवेत्तथा सति प्रयोगे श्रूयमाणमेकवचनं नाद्रियेतेति। 'तस्मादन्नाद्यकामे विधानं दक्षिणाभेदयुक्तानां चोत्पत्तिः। तद्यदि दक्षिणाभेदो मुख्यः स्यादन्नाद्यकामप्रयोगोऽपि भिद्येत। तच्चायुक्तं विरोधात्। तस्मादुत्पत्तौ मिलितैव दक्षिणा प्रत्येकं तु दक्षिणाशब्दः तदवयाभिप्रायः। तस्माद्राजसूयमध्यप्रयोगेऽपि तन्त्रमेवेति। वचनात् **'प्रतिदक्षिणं वा कर्तृसंयोगा [कर्तृसंबन्धात्] दि**त्यनेन न्यायेन तन्त्रभेदस्तावत् प्राप्नोति। मध्ये निधायेत्यनेन च त्वदुक्तेन लिङ्गेन तन्त्रं प्राप्नोति। तत्र कतरो निर्णयः। भेदेन वा स्यात्तन्त्रं वेति। एवं विमृश्य सिद्धान्ती निर्णयमाह-उच्यते। 'एतयान्नाद्यकामो यजेत' इत्येकवचनेन प्रयोगः कामसंयोगेन श्रूयते। अन्तःप्रयोगे तु नास्त्येकवचनम्। तत्रैवं सति योऽन्नाद्यं कामयमानः करिष्यति, तस्य तन्त्रेण प्रयोगो भविष्यति भेदेन क्रियमाणायां यत् प्रयोग एकवचनं तद्बाध्येत। तस्मादेकवचनान्मध्ये निधायाहुतिमाहुतिमिति चानन्यथासिद्धलिङ्गात् च[२] कामे तन्त्रेण प्रयोगः। क्रत्वर्थायां

---

१. तस्मादन्नाद्यकामप्रयोगस्तावदेकवचननिर्देशमनन्यगतेश्च लिङ्गात्तन्त्रम्। यथोत्पन्नानां वान्नाद्यकामे अधिकः पाठः।

२. च नास्ति।

त्वचेष्टावुभयाभावात् दक्षिणाद्यभेदाच्च भेदेनैव प्रयोगः। यद्यपि यथोत्पन्नाया एव कामे विधानं तथापि तन्त्रलिङ्गविरोधादेकवचनाच्च दक्षिणाभेदो नाश्रीयते। अर्थवाँश्चान्तःप्रयोगे दक्षिणाभेदः। तस्मात्तन्त्रभेदेनैव प्रयोगः। काम्ये तु तन्त्रमिति।

[ ४—काम्यानां पवमानहविषां भिन्नतन्त्रताधिकरणम् ]

**पवमानहविष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ११ ॥ पू०**

अह्नो निरुप्याणीति पूर्वपक्षवादी कालवचनं मन्वानः तन्त्रतामापादयति, कथं कालवचनतया तन्त्रत्वमित्याह—यथा 'पौर्णमास्यां पौर्णमास्या यजेत' इति त्रयाणामपि[1] यागानामेक कालसंयोगात्तन्त्रेणाङ्गानि[2] भवन्ति एवमिहापि तन्त्रता समानबर्हींषि भवन्तीति च तन्त्रता गम्यते 'यः कामयेत वसीयान् श्रेयान् स्याम् इति तस्याग्नये पवमानाय निरुप्याथ पावकाय शुचये [3]चोत्तरे समानबर्हिषी हविषी निर्वपेत्, इति। एतच्च फल[4] समेदादिति। तस्माद्वसुकामप्रयोगेऽपि तन्त्रमिति। सिद्धान्तवादी त्वाह—[5](अह्नःशब्देन सद्य एव यस्मिन्न) हन्याधानं कृतं तस्मिन्नेव कर्त्तव्यानीति विज्ञायते। नत्वनेन वचनेन कालं प्रत्युपादीयन्ते, येन तन्त्रता स्यात्। कथं नोपादीयन्तेऽत आह-अस्मिन् हि वचनेऽह्न-शब्दस्य कालो न वाच्यः। येन कालं प्रत्युपादीयेरन्। इदं हि "सम्वत्सरे निर्वपेद् द्वादशाहे चतुरहे वा" इत्यादि समीपे श्रूयते एकस्य वाह्नो निरूप्याणि" इति। सद्य एवेत्यर्थः। तस्माद्भेदः पवमानाय निरूप्याथपावकाय शुचये चेति वचनात्। समानबर्हींषि भवन्तीत्ययं तु वचनान्तर-

---

१. च नास्ति।

२. तन्त्रमङ्गानि पाठः।

३. उत्तरे नास्ति।

४. फलसंबन्धार्थं वचनं न प्रयोगभेदसिध्यर्थम्। अनुत्पत्तिवाक्यत्वे सत्युभय करणे वाक्यभेदादिति। अधिकः पाठः।

५. कुण्डलितांशो नास्ति।

प्राप्तानुवादः। केन प्राप्तिरित्याह-ब्रह्मवर्चस कामस्य हि[1] सर्वाणि हवींषि सह निरूप्याणीति विहितम्। तत्र निर्वापे सहचोदिते वचनात्तन्त्रं भवति। तस्मात्तदपेक्षयायमनुवादो भवति समानबर्हींषि भवन्तीति! एतच्च तत्त्वकथनार्थमुक्तम्। यद्यपि चाह्नो निरूप्याणि समानबर्हींषि भवन्तीति वचनान्नित्यप्रयोगस्तन्त्रं स्यात् तथापि वसुकामप्रयोगो भेदेनैव स्यात्। न च वाक्यभेदः। प्रयोगभेदाख्यस्य[2] गुणस्य केवलस्य कामे विधानात् गोदोहनवत्। प्रकरणलब्धानुवादस्तु हविषामिति न वाक्यभेदः।

[ ५—द्वादशाहे दीक्षोपसदां स्वस्थानविवृद्ध्यधिकरणम् ]

**द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात्॥१५॥ पू०**

ननु द्वादशाहशब्दे सति कथं द्वादशपञ्चविंशतिरात्रपक्षस्योत्थानमित्याशंक्याह—प्रकृतावुपांशवादेर्हारियोजनपर्य्यन्तस्य सोमयागस्याहःशब्दः परिच्छेदको दृष्टः। तेनतत्राहःपरिच्छेदद्वारेण कर्म्मणि वर्ततेऽहःशब्दः। इहापि द्वादशाहे प्रथममहर्द्वितीयमहरित्येवमाद्यारभ्य यावद्दशममहरित्यहः-शब्दः श्रूयते। सोऽयमहःशब्दः श्रूयमाणोऽहःपरमितं कर्म लक्षयति। यद्यत् कर्म लक्ष्यते तदेतेष्वेव वाक्येषूत्पद्यते। तदेवं दश सौमिकान्यहः संयुक्तानि कर्म्माण्युत्पद्यन्ते। अपरौ च 'प्रायणीयोदयनीयावतिरात्रावभितो दशाहे' श्रूयेते।[3] तावपि लक्षणया तत्संस्थाकं कर्म प्रतिपादयतः। तस्मात द्वादशकर्म्माण्युत्पद्यन्ते। तानि (उत्पन्नानि) च फलं प्रति साकाङ्क्षाणि सन्ति 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यनेन यजिना फले विधीयन्ते। तत्र द्वादशाहशब्दः सामानाधिकरण्याद्यागेनायमपि कर्मवचनो न लौकिकमहर्ब्रवीति। अयमपि द्वादशाहशब्दो यागसामानाधिकरण्यात् कर्मवचन इत्यन्वयः। संख्याशब्दस्तु यागवचनमहःशब्दं विशेषयन्

१. हि नास्ति मु०।
२. तत् नास्ति।
३. श्रूयते इत्येन पाठ शतृप्रयोगः।

द्वादशयागान्प्रतिपादयति न त्वहानि द्वादश येन द्वादशपञ्चविंशतिरात्रपक्षो नाशङ्क्येत। येन वा द्वादशसाद्यस्क्राश्चतुरहे वा दीक्षोपसत्तुल्याः स्युः। यागसंख्यावचनत्वात् द्वादशपञ्चविंशतिरात्रपक्षेऽपि यागानां तावत्वान्नास्ति द्वादशाहशब्दविरोधः। का पुनर्द्वादशपञ्चविंशतिरात्रपक्षस्य युक्तिरित्याह—तत्रैकैको यागः फलसाधनत्वाज्ज्योतिष्टोमविध्यन्तं गृह्णाति। तत्र प्रत्येकमेव चोदकेन ज्यौतिष्टोमिके दीक्षोपसत्परिमाणे 'एका दीक्षा तिस्र उपसदः' इत्यादिके प्राप्ते वचनेन द्वादश दीक्षा विधीयन्ते द्वादशोपसदश्च। प्रकृतिवदेकैकमहः सदीक्षोपसदमपवर्जयितव्यम्। तस्मादेकैको यागः पञ्चविंशतिरात्रः।

**अह्नां वा श्रुतिभूतत्वात् तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १६ ॥**

यदुक्तमेकैकमहः सदीक्षोपसदमपवर्जयितव्यमिति तन्मृष्यते। द्वादशाहशब्दस्तु नामधेयमित्येतन्न मृष्यते, तदाह—यागास्तावत्फले विधीयन्त इति तुल्यमेवावयोः। संख्याशब्दस्त्वहर्विशेषणार्थमुच्चार्य्यते द्वादशाहानि भवन्तीति [1]न तु यागविशेषणार्थम्। तथाहि द्वादशशब्दोऽपि श्रुतिवृत्तो भवति। अहःशब्दोऽपि श्रुत्यैव लौकिकमहः ब्रवीति न कर्मलक्षणार्थः कल्पितो भविष्यति। ननु यजिसामानाधिकरण्याद्यागवचनः स्यादत आह—द्वादशाहेनेति द्वादशभिरहोभिस्ते यागाः कर्तव्या इत्यर्थः। गुणविधिर्द्वादशाहशब्दो न नामधेयमित्यर्थः। न च मत्वर्थलक्षणा बहुव्रीह्याश्रयणेन श्रुत्यैव मत्वर्थलाभादिति भावः। तस्मादनेन द्वादशाहेनेति कालविधानेन साङ्गानां द्वादशाहकालत्वं प्रतिपाद्यते कालस्य साङ्गप्रधानविषयत्वात्। तेन द्वादशसाद्यस्क्राः। [2]ननु प्रकृतितोऽन्यस्मिन्नहनि दीक्षान्यस्मिन्नुपसदोऽन्य-

---

१. तेन।

२. ननु प्रकृतितोन्यस्मिन्नहनिदीक्षा, अन्यस्मिन्नहन्युपसद (अयमेव पाठः)।

स्मिन्सुत्येति प्राप्नोतीत्यत आह—या [1]चासौ चोदकेनान्यादृशी प्राप्तिः सा **प्रत्यक्षयाहर्गतया संख्यया निवार्य्यते**। तदा हि साङ्गा द्वादशस्वहःसु सम्पादयितव्याः। तदेवमुपपद्यते यद्येकैकस्मिन्नहनि दीक्षोपसत्सुत्याः क्रियेरन्। तस्माद् द्वादशाद्यस्क्राः। **एवञ्च प्रधानसन्निधावङ्गानि कृतानि भविष्यन्ति।** तस्मादेकैकं प्रधानं एकैकस्मिन्नहनि स्वीयस्वीयदीक्षोपसद्युक्तं कर्त्तव्यम्।

## अपि वा फलकर्तृसंबन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १७ ॥ पू०

[2]अङ्गीकुर्म एतद्द्वादशाहशब्दो गुणविधिरिति। अपि एकैकस्य तु साङ्गस्य नापवर्गः। तदाह—**यागाः फले चोद्यन्ते।** तेषामङ्गभूता [3]दीक्षादिगता **द्वादशसंख्या प्रत्यक्षा श्रूयते। सा च चोदकप्राप्तां**[4] संख्याम् एका दीक्षा तिस्र उपसदः इत्यादिकां तत्कार्य्यापत्त्या बाधते। तस्मादेकैकस्यैव प्रधानस्य द्वादश दीक्षा द्वादशोपसदः कर्त्तव्या इति साद्यस्क्रपक्षानुपपत्तिः। न खल्वीश्वरोऽपि द्वादश दीक्षोपसद्युक्तां सुत्यां सद्यः शक्नोति कर्त्तुम्। अपि च **तत्रापि ये संख्यायुक्ताः** पदार्थास्त एव **बाध्यन्ते** तेषामेव प्राकृती संख्या बाध्यते। ते च **दीक्षणीयादयः संख्यायुक्ताः** द्वादश दीक्षा द्वादशोपसदः इति **न त्वग्नीषोमीयः** पशुः। न हि तस्य द्वादशसंख्या विहिता **तेनासौ सकृत् कर्त्तव्यः, साद्यस्क्रपक्षे तु सोऽपि द्वादशकृत्वः प्रयुज्येत। तच्चायुक्तम्।**

नन्वसत्यपि द्वादशत्वविधौ प्रधानद्वादशत्वादेव तावत्कृत्व आवृत्तिर्भविष्यति प्रति प्रधानं गुणावृत्तेः। अत आह—**अपि चैकस्मिन् फले चोदितानां**

---

१. च नास्ति।

२. अङ्गीकुर्म एतद्द्वादशाह ( इति पाठः भवेत् )।

३. दीक्षोपसद्गुताद्वा।

४. प्तसं।

तन्त्रेणेतिकर्त्तव्यता भविष्यति । न त्वेकैकमहः साङ्गमपवर्जयितव्यम् । तेन न प्रत्येकं स्वीयदीक्षोपसदग्नीषोमीयादियुक्तं कर्त्तव्यं येन द्वादश पञ्चविंशतिरात्राः साद्यस्का वा भवेयुः । प्रकृतौ चैकत्वात् प्रधानस्य तथा कृतम् । इह तु बहूनामेकफलत्वेन सहप्रयोगत्वावगमान्नैकैकस्यापवर्गः । नन्वेकफलानामपि राजसूयवत्तन्त्रभेदः स्यादत आह—**दक्षिणैक्यात् कर्तृभेदो नास्ति**। कर्तृभेदाभावात्तन्त्रभेदो नास्ति । **तस्मादहीने तावत् सहप्रयोगः सिद्धो भवति । सत्रे च यजमाना एव कर्त्तारः । अतस्तत्रापि कर्तृभेदो नास्ति**। तेन **तत्रापि तन्त्रं** दीक्षोपसदः । अवश्यं च द्वादशस्वहस्सु साङ्गं प्रधानं कर्त्तव्यम् । तेन तन्त्रीभूतद्वादशदीक्षोपसद्युक्ता द्वादशयागा द्वादशस्वहःसु कर्त्तव्या इति चतुरहे दीक्षाः चतुरहे चोपसदः. चतुरहे च सुत्या स्युः । (सम्पाद्याः) एकैकस्मिन्नहनि तिस्रस्तिस्रो दीक्षा उपसदः सुत्याश्च कर्तव्या इति ।

## साङ्गकालश्रुतित्वाद्वा स्वस्थानां विकारः स्यात् ॥ १८ ॥ सि०

यदुक्त तन्त्रेणेतिकर्तव्यतेति तत् सत्यम् । यत्तु द्वादशस्वहःसु साङ्गानामपवर्गः चतुरहे चतुरहे दीक्षोपसत्सुत्या इति तन्न । स्यादेतदेवं यदि द्वादशाहशब्दो गुणविधिः स्यात् न त्वसौ गुणविधिः । अनुत्पत्तिवाक्ये फलसम्बन्धस्य गुणसम्बन्धस्य च विधानेन वाक्यभेदापत्तेः ।

किन्तर्हि ? नामधेयम् । तदाह—**भावयेत् प्रजाः । केन ? यागेन । कतरेण द्वादशाहसंज्ञकेनेत्येवं** यागसामानाधिकरण्यादहःशब्दः कर्म ब्रवीति न कालम् । **संख्याशब्दोऽपि संख्यया कर्मभेद इत्यनेन न्यायेन द्वादश यागान् प्रतिपादयति । तत्रैकेको यागश्चोदकेन धर्म्मान् गृह्णाति । तत्र प्रत्यक्षेण द्वादशदीक्षा इत्यादि [१]संख्यावचनेनैकादीक्षेत्यादिका चोदकेन या दीक्षोपसदां संख्या प्राप्नोति सा बाध्यते ।** तेनैकैकस्यैव यागस्य द्वादश दीक्षा उपसदश्च कर्त्तव्याः । ताः चैकैकस्मिन्नहनि कर्त्तव्याः तथा हि

---

१. संख्यानास्ति ।

प्रकृतौ। नन्वेवं सति द्वादश पञ्चविंशतिरात्रावपि स्युरत आह—**दक्षिणैक्याच्च तन्त्रेण प्रयोग** इत्युक्तम्। **तस्मादीक्षाणामुपसदां च स्वस्थानविवृद्धया** प्रयोगः।

ननु नामधेयमपि प्रवृत्तिनिमित्तशून्यं न सम्भवति। तद्यदि द्वादशस्वहःसु साङ्गोपाङ्गा न भवेयुः कथं द्वादशाहसंज्ञा! अत आह—**द्वादशसंख्या च या द्वादशश्रुतेः**, शब्दस्येति यावत्, प्रवृत्तिनिमित्तत्वेनावगम्यत इति शेषः, **सा कर्मोपकर्मभेदेन उपपन्ना**। कर्मशब्देन प्रधानस्याभिधानम्। उपकर्मशब्देनाङ्गस्य। भिन्ना हि दीक्षा उपसदः सुत्याश्च। ताः प्रत्येकं द्वादशस्वहःसु क्रियन्ते। तदभिप्रायेण द्वादशाहशब्दः, प्रधानान्येवाभिप्रेत्य तेषामेवानन्तरमनुक्रमणात्। तानि हि प्रत्येकमेवैकैकस्मिन्नहनि प्रातर्माध्यन्दिनतृतीयसवनविभागेन क्रियन्ते। तस्मात्तदभिप्रायोऽयं द्वादशाहशब्दः। एवं द्वादशत्वं च **"षट्त्रिंशदहो वा एष यो द्वादशाहः** इत्येतदपि **दर्शनमनुगृहीतं भवतीति**॥ १८॥

[ ६—द्वादशाहे सुत्याकालीनाङ्गानामतन्त्रताधिकरणम् ]

**भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्॥ २३॥ सि०**

यदि दक्षिणैक्यात् ( वाक्या ) त्तन्त्रमङ्गानि [१]सवनीयादयोऽपि तर्हि तन्त्रं भवेयुरित्येतावान्पूर्वपक्षः।

सिद्धान्तस्तु दीक्षादयः पृथक्कालाः। अतस्ते युक्तमगृह्यमाणविशेषत्वात्तन्त्रं भवन्तीति। सवनीयादयस्तु प्रधानकालत्वाद्यस्य काले क्रियन्ते तस्यैव नान्यस्येति विशेषग्रहणाद्भिद्यन्ते। सुत्यापूर्वप्रयुक्तत्वाच्च तन्मध्यपातिनः पदार्थास्तदपवर्गेऽपवृज्यन्ते। तस्माद् भेदेन कर्तव्याः॥ २३॥

[ ७—द्वादशाहे सुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् ]

**सुत्या विवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत्॥ २७॥ पू०**

---

१. सवनीयाः पशवः, सवनीयाः पुरोडाशा इत्यर्थः।

"इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयात् इति ज्योतिष्टोमे सुब्रह्मण्याह्वान-मुपसत्कालं विहितमहर्गणेषु प्राप्तम् । तच्च तन्त्रेण कर्तव्यमिति स्थितम् । तत्राहन्[1]शब्दस्य किमेकधाशब्दस्यैवाभ्यासात्मक ऊहः कर्तव्योऽथवा तन्त्रेणैवाविकृतस्यैव प्रयोग इति चिन्त्यते । पूर्वपक्षमाह—**प्रकृताविंयत्यह्**—इतीतिशब्देन परिमाणवाचिना **चतुरहे सुत्यामागच्छमघवन्नित्या-दिकालेयत्ता विवक्षिता । इह तु चोदकेन तथैव** कालेयत्ता सर्वेषामह्नां[2] भेदेन वक्तव्या प्राप्नोति । **सा चाहःशब्दस्याभ्यासात्मकमूहमन्तरेण न शक्यते विवक्षितुम् । तस्मादूहः कर्तव्यः द्वादशाहे त्रयोदशाह इति ।** अवश्यं हि सर्वेयत्ता वक्तुं द्वादशत्रयोदशादिशब्दाः वक्तव्याः । तद्वशेन चाहःशब्दस्याप्य-भ्यास इति । न चात्र चतुरादिशब्दानामूहः शक्यते । तेषां प्रकृतावपठितत्वात् अहःशब्दस्यैव त्वभ्यासात्मक ऊहः शङ्क्यते । **नन्वेकत्वाद्देवतायाः पुनः** संस्कारोऽनर्थकोऽत आह—**नचैकत्वाद्देवतायाः सकृदुपलक्षणं कर्तव्यमित्य-यमर्थो लभ्यते । कथम्? या प्रथमस्य यागस्य संस्कृता देवता सा द्वितीयस्य यागस्य संस्कृता न भवति, कालभेदाद्** गृह्यमाणविशेषत्वात् । यदा हि कालेयत्ताया विवक्षितत्वात् स्वकालपरिमाणविशिष्टागमनसंस्कृता देवता कर्म्माङ्गमिति स्थितं तदा द्वादशाहे सुत्यामागच्छेत्यनेन न त्रयोदशेऽहनि संस्कृता भवति । तस्मादूहः ।

**अपिवेन्द्राभिधानात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ २८ ॥ सि.**

भाष्योक्तं व्याख्यानमनुभाषते—**इन्द्र आगच्छेत्येतावदिह विवक्षिते चतुरह इति** कालवचनमविवक्षितम् । विवक्षितत्वे **वाक्यभेदभयात्**, **इन्द्र** आगच्छ तच्चतुरह इति । **एवमिन्द्र आगच्छ तत्सुत्यामागच्छेति वाक्यभेदः ।**

---

१. हःशब्द ।

२. षामह्नामियत्ताभेदेन ।

एवं वाक्यभेदभयाच्च सुत्याग्रहणमप्यविवक्षितमेव। तस्मात् प्रकृतावप्यविवक्षितत्वाद्विकृतावप्यविकारेणैव प्रयोग इति। एवमनुभाष्य दूषयति—एतदयुक्तम्। कथम्? यदि हीदृशे विशिष्टविधिसम्भवविषयेऽपि वाक्यभेदो भवताङ्गीक्रियते ततः सर्वत्रैव वाक्यभेदः स्यात्[1]। अपि चाविवक्षितत्वे प्रकृतौ चतुरहे त्र्यह इति किमर्थमुच्चार्य्यतेऽविवक्षितत्वाद्धयेषां सुत्यामागच्छेत्येव प्रयोगः कर्तव्यः स्यात्। एवञ्च स्थिते सति विकारेणाविकारेण वेति संशयाभावादधिकरणमेव नोत्तिष्ठति सुत्यामागच्छेत्येतावता[2] विशेषाग्रहणेन तन्त्रप्रयोगस्य स्पष्टत्वात्। तस्मादन्यथा वर्ण्यते—"इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयात्" इत्यत्र इत्याह इतीतिशब्दोऽयं प्रकारवाची लोके। अस्मिंस्तु वाक्येऽस्य प्रकारवाचित्वं नोपपद्यते, प्रकारस्यासम्भवात्। किन्तर्हि? इयत्तावाची वाक्यशेषादप्यवगम्यते। वाक्यशेषे चतुरहादिशब्दानामियत्तावाचिनां श्रवणात्। इयत्तापि न प्रकार एवेति शक्यत एवेतिशब्देनाभिधातुम्। अहःशब्देन चेतिशब्दस्य सामानाधिकरण्यादहर्गतेयत्तावगम्यते। तच्चाहर्न स्वार्थम्। किन्त्वागमनक्रियाविशेषणार्थमुच्चार्य्यते। सुत्याशब्दोऽप्यागच्छतिक्रियाविशेषणार्थः। एवं इन्द्रस्य करिष्यमाणप्रयोजनत्वाच्चागमनक्रिया तत् उपयोक्ष्यमाणेन्द्रसंस्कारार्था। इयत्यहे—इतीतिश्चायं सामान्येन परिमाणवाची। न च सामान्येन व्यवहारः यथा—आशास्ते[3]। नत्वेतावदह आगच्छेत्युक्ते कश्चिदर्थः प्रतीयते। तस्मात्तस्य परिमाणविशेषवचनशब्दोपलक्षणार्थत्वाद्विशेषशब्दाध्याहारं कृत्वा तेन सोऽहःशब्दो विशेषणीयः। यथाशास्तेऽयं यजमानोऽसावित्यादावसौशब्दस्थाने यजमाननामाध्याह्रियते। अध्याहारे च कर्तव्ये यः समवेतार्थः

---

१. "व्रीहीन्प्रोक्षति" इत्यादिष्वपि प्रोक्षणं कर्तव्यम्, तच्च व्रीहीणामिति वाक्यभेदः—अधिकः पाठः।

२. तो इत्येव पाठः।

३. अयमंशो नास्ति।

शब्दः सोऽध्याह्रियते कालेयत्तामापादयितुम्, तस्याद्यत्र चतुर्ष्वहस्सु सुत्या तत्र चतुरह इत्यध्याह्रियते, यत्र तु त्रिषु तत्र त्र्यह इति। तस्मादित्यहे सुत्यामागच्छमघवन्निति चतुष्पदे मन्त्रे परिमाणविशेषवाचिचतुरहादिशब्दाध्याहारविशिष्टमहःपदमागच्छति क्रियां प्रति [1]शेषभूतम्। तथा सुत्यापदमपि। आगच्छेति पदन्तु मघवत्पदशेषभूतम्। तदेवमहःसुत्याशब्दाभ्यां विशेषितेनागमनेन कर्म्माङ्गभूत इन्द्रः संस्क्रियते। अयन्तावत्प्रकृतावर्थो वृत्तः यदुताहःसुत्याशब्दौ परार्थाविति॥ ततः किमित्याह—यच्च प्रकृतौ चोद्यते प्रधानं च यः समवेतश्च स्वार्थं च प्रकाश्यते तस्योहो भवति अहःसुत्याशब्दौ परार्थौ यज्ञपतिशब्दवत्। तत्राहर्गणे येन केनचिदेकेनाह्नापि कृतः संस्कार[2] उपरितनाहरन्तरप्रकाशनेनार्थः, स चाकर्मकाले[3] क्रियमाणोऽगृह्यमाणविशेषत्वात् सर्वार्थो भवति। तत्र च मुख्यार्थत्वात् प्रथमेनाह्नोपलक्षणमुचितं येन[4] चात्मीययत्ता[5] विशेषितमाह्वानं सगुणं भवति। अकर्मकालत्वाच्चागृह्यमाणविशेषं सर्वेषामुपकरोति। तस्मादाद्य औपसदेऽहनि त्रयोदशाहे सुत्यामागच्छेति वक्तव्यम्। द्वितीये तु द्वादशाह इति। एवं सर्वत्र। तस्मादनेन [6]प्रकारेणोहाभावो न वाक्यभेद भयादिति॥

[ ७—पशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् ]

**पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात्॥ ३०॥ सि.**

उत्तरविवक्षार्थमेतत्।

---

१. विशेषण भूतं मु० पा०।

२. र इति नाह।

३. स चाकाले।

४. तेन।

५. त्ताविशेषितेन अ० पा०।

६. पारार्थ्यादित्यनेन कारणेन अ० पा०।

[ ८—भिन्नदेवताकसमानजातीयपशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् ]

**भेदस्तु सन्देहाद्देवान्तरे स्यात् ॥ ३१ ॥ पू०**

स्थितमेकदेवत्येषु तन्त्रमिति । भिन्नदेवत्येषु व्यामोहनिवृत्तये भेदः स्यात् । सर्वेषां च पशूनामात्मीया वसात्मीययाज्यार्धर्चान्ते होतव्या । न च कुम्भीतन्त्रत्वे तत्सम्भवः । तस्माद्भेद एव युक्त इति पूर्वः पक्षः ।

चिह्नकरणेनापि व्यामोहापगमसंभवात् । संसर्गिण्यां वसायामेकीभूतायां निमित्तभूतया अर्धर्चान्तावृत्त्या हूमानायां सर्वेषामेव स्वेस्वे याज्यार्द्धर्चान्ते स्वीया वसा हुता भवतीति तन्त्रतैव युक्तेति[1] सिद्धान्तः ॥

[ ९—विजातीयपशुगणे कुम्भ्यादीनामतन्त्रताधिकरणम् ]

**जात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् ॥ ३७ ॥ सि.**

नानाजातीयेष्वेकादशिनेष्वपि[2] तर्हि तन्त्रता स्यादित्याशंक्य पक्तिवैषम्यान्न तन्त्रेतेति प्रत्युदाहरणमात्रमेतत् ॥ ३७ ॥

[ १०—अश्वप्रतिग्रहेष्टौ कपालानामतन्त्रताधिकरणम् ]

**कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥ ३९ ॥ पू.**

अवयवद्वारेणाप्यवयविनः साधनता भवत्येव हस्तद्वारेणेवाध्वर्य्योः । तेन दीर्घाणां कपालानामवयवेषु श्रप्यमाणाः पुरोडाशाः सर्व एव चतुष्कपाला भवन्तीति तन्त्रतां मन्यते । न प्रकृताववयवद्वारेण कपालानां साधनता, किन्तु स्वरूपेणैव । तद्वदत्रापि भवितव्यम् । यावत् कपालं च प्रथनं श्रुतमसति भेदे बाध्येत । तस्माद्भेद इति सिद्धान्तः ॥ ३९ ॥

[ ११—दर्शपूर्णमासयोरवघातमन्त्रस्य सकृदनुष्ठानाधिकरणम् ]

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ॥ ४२ ॥ सि.**

अवघाताङ्गं मन्त्रः । अवघातश्चावर्तते । प्रधानावृत्तौ चाङ्गावृत्तिः प्रसिद्धैव

---

१. युक्तमि । २. सौत्रामण्यदिषु इति युक्तः पाठः ।

च। तस्मात् प्रतिप्रहारं मन्त्र इति। स्यादेवं यदि धात्वर्थस्वरूपाङ्गं मन्त्रः स्यात्। तदाहि प्रतिप्रहारं तद्भेदान्मन्त्रोऽपि भेदेन प्रयुज्येत। अयं पुनः सप्तमनवमाद्यन्यायेनावघातकरणिकायास्तण्डुलभावनायाः शेषः। तत्-करणभूतस्यावघातस्याङ्गं साभ्यासश्च तत्करणम्। तेन तादृशस्यैव मन्त्रोऽङ्गमिति नास्ति प्रधानावृत्तिः। तस्मात् सकृन्मन्त्र इति ॥ ४२ ॥

[ १२—नानाबीजेष्ववघातमन्त्रस्यावृत्त्यधिकरणम् ]

**द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य च तद्-गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४३ ॥ सि.**

बीजभेदेऽपि तर्हि सर्वादौ संस्कृन्मन्त्रः प्रयुज्येत। नेति ब्रूमः। तत्र ह्यवघातभावनैव प्रतिबीजं समाप्यते। अतः प्रधानावृत्तेर्मन्त्रावृत्तिरिति ॥४३॥

[ १३—निर्वापादिष्वसकृन्मन्त्रप्रयोगाधिकरणम् ]

**निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैक-त्वात् ॥ ४४ ॥ पू०**

इह चतुर्मुष्टिनिर्वापस्यैकपदार्थत्वात् तदारम्भे सकृदेव मन्त्रः प्रयोक्तव्य इति पूर्वःपक्षः।

सिद्धान्तस्तु—यद्यप्येकः पदार्थस्तथापि प्रत्यभ्यासं संस्कार्य्यभेदो विद्यते। मन्त्रवता च निर्वापेण द्रव्यं संस्कर्त्तव्यम्। अतो यस्मिन्नेव मुष्टौ मन्त्रो नोच्चार्येत तस्यैव मन्त्रकृतेन संस्कारेण हानं स्यात्। कार्यप्रयुक्तो हि संस्कारो न क्रिया-स्वरूपप्रयुक्तः। कार्यं चात्र भिन्नम्। तस्मात् प्रतिमुष्टि मन्त्रावृत्तिः ॥ ४४ ॥

[ १४—वेदिप्रोक्षणमन्त्रस्य सकृत्प्रयोगाधिकरणम् ]

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥ पू०**

---

१. तथाहीत्येवपाठः।

युक्तमवघाते यत्कार्यैक्येन भावनैक्यादार्थिके धात्वर्थाभ्यासे सत्यपि सकृन्मन्त्रः प्रयुज्यत इति। अत्र तु प्रोक्षणभावनादृष्टार्था विधीयते। तस्याः[१] संख्यया भेदोऽवगम्यते। तद्भेदात् कार्यमपि भिद्यते। प्रतिप्रधानं च गुणावृत्तेर्मन्त्रावृत्तिं मन्यते।

सिद्धान्तस्तु नात्र क्रियाभेदः, किन्त्वेकस्या एव क्रियाया गुणत्वेनावृत्तिः श्रूयते। क्रियावृत्तौ हि सुच्प्रत्ययः न तद्भेदे, सगुणा च भावना कार्यसाधनमिति सहकार्येणैका भावना। तदर्थश्च मन्त्रो [२]नाभ्यासार्थः। गुणानां च परार्थत्वादिति यायात्। तस्मात् सकृन्मन्त्रः॥ ४६॥

[ १५—कण्डूयनमन्त्रस्य सकृत्प्रयोगाधिकरणम् ]

## कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४८ ॥ पू०

इह प्रत्यङ्गं कण्ड्वास्तज्जन्यस्य च दुःखस्य भेदात्तदपनयनरूपं कार्यमपि प्रतिकण्डूयनं [३]प्रति भिद्यते। अतस्तदर्थस्य मन्त्रस्यावृत्तिरिति पूर्वः पक्षः। सत्यं प्रतिकण्डूयति दुखं भिद्यते। तथापि सकृदेव मन्त्रः स्यात्। न ह्ययं तदपनयनरूपाङ्गम् नापि तद्द्वारेणाङ्गसंकारार्थः किन्त्वात्मार्थः, कण्डूयनं हि कण्ड्वपनयनद्वारेण आत्मसंस्कारार्थं लोके प्रसिद्धम्। तेन निष्कण्डूवेदनमात्मानं कर्तुं कण्डूयनं क्रियते। तेन चापनीतवेदनेन प्रयोजनम्—अनाकुलः कर्म करिष्यतीति। न चापनीयता कण्ड्वा नाप्यपनीतकण्डूतिनांगेन। ततश्चावघातन्यायेन यावताऽऽत्मापनीतकण्डूतिर्भवति तावत्येका क्रिया। तदर्थं मन्त्र इति तदभेदात् सोऽपि नावर्तते॥ ४८॥

[ १६—स्वप्नादिमन्त्राणामनावृत्त्यधिकरणम् ]

## स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥ सि०

---

१. स्याश्चसंख्यायाः।

२. न नास्ति।

३. प्रति नास्ति।

स्वप्नादिभेदान्मन्त्रभेदं मन्वानस्योत्तरम् । स्वप्ने तावत् सर्वां रात्रिमुद्दिश्य मन्त्रः प्रयुक्त इति यादृच्छिकेऽवान्तरप्रबोधे सत्यपि न मन्त्रस्य पुनः प्रयोगेणार्थः । तथा नद्यैक्ये सति स्रोतोभेदेऽपि तत्तरणमेकं सार्वजनीनमिति नावृत्तिः ।

तथाभिवर्षणेऽपि यावत्येका वृष्टिरुपस्थिता तां सर्वामुद्दिश्य प्रयोगादवान्तरविच्छेदेऽपि सकृन्मन्त्रः । अमेध्यप्रतिमन्त्रणे तु कालैक्यात् स्पष्टमेव तन्त्रत्वमिति ॥ ५० ॥

[ १७—दीक्षितप्रयाणमन्त्रस्य सकृत्प्रयोगाधिकरणम् ]

## प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥ सि०

[1]अत्रत्वादावेवावान्तरविश्रमो निश्चितः । नियतं हि ते तद् भवितव्यम् । [2]अतः प्राग्विश्रामाद् यत् प्रयाणं तदर्थ एव प्राङ्मात्रप्रयोग इति । विशेषग्रहणात् पुनः प्रयाणे पुनर्मन्त्रप्रयोगं मन्यते । समीहितप्राप्त्यर्थस्य प्रयाणस्यायं मन्त्रोऽङ्गम् । तच्चैकमिति सत्यपि तदवयवभेदे सकृदेव मन्त्रः ॥ ५१ ॥

[ १८—उपरवखननमन्त्रहविष्कृदाह्वानादीनामावृत्त्यधिकरणम् ]

## उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ पू०

निर्वापादिवत्कार्य्यभेदे सत्यपि बहुवचनेन तन्त्राभिधानाद् सकृत्प्रयोगः । उच्यते—कार्यभेदस्तावत् स्पष्टः । अनेकोपरवसंस्कारात् प्रतिकार्यं च मन्त्रस्यावर्तनम् । अन्यथाऽन्येषां तत्कृतेन संस्कारेण हानं स्यात् । न च बहुवचन-[3]बलादादावेव प्रयुक्तो मन्त्रः सर्वसंस्काराय पर्य्याप्तोऽस्ति[4] सुब्रह्मण्यावदिति

---

१. यत्रत्वर्थनिवृत्तेरन्तरा विश्रामो निश्चितः ।

२. अतः प्रथमं प्रयुज्यमानो मन्त्रः प्राक्प्राथमिकविश्रामाद्यत्प्रयाणं तदर्थमिति ।

३. लात्सर्वादा ।

४. प्नोति ।

वक्तव्यम् । सन्निपातित्वात् [1]करणमन्त्रस्य; यावदेव हि मन्त्रजनितं ज्ञानमपेक्षितं[2] तावदेव क्रियमाणं कर्म्म तत्करणकं स्यात् । न कालान्तरे क्रियमाणम् । सुब्रह्मण्या त्वकरणत्वात् कालैक्याच्च तन्त्रम् । तस्मात्प्रत्युपरवं तद्भेदः । बहुवचनं तु छान्दसं पूजार्थं वेति ॥ ५३ ॥

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ॥ ५४ ॥ पू०**

प्रत्युदाहरणत्वेन व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातम् । तत्राधिकरणान्तरमनभिमतमेव विशेषाशङ्काभावात् ।

प्रत्युदाहरणत्वेन व्याख्यैव त्वत्र संमता ।
असन्निपातिनां योक्ता कालैक्यात्तन्त्रता पुरा ॥
प्रत्युदाहरणत्वेन तत्रेदमभिधीयते ।
कालभेदेन भेदस्तु तेषामपि भवेदिति ॥

इति श्रीमहामहोपाध्यायपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
एकादशस्याध्यायस्य चतुर्थः पादः ॥

॥ अध्यायश्च समाप्तः ॥



१. कारणमित्येव पाठः ।

२. मनपेतम् ।

# द्वादशोऽध्यायः

[ १—प्रसङ्गस्यारब्धव्यत्वाधिकरणम् ]

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥१॥ पू०**

तन्त्ररूपे प्रयोगपरिमाणे चिन्तितेऽधुना तत्परिमाणमेव प्रसङ्गरूपं चिन्त्यते। एकदेशकालकर्तृकाण्यङ्गानि तादृशानामेव प्रधानानां बहूनामपि सकृत्कृतान्येवोपकर्तुं शक्नुवन्तीत्येतत् पूर्वाध्यायोक्तमुपजीव्योद्देशविशेषात्पृथगनुष्ठानमाशङ्क्य सत्यपि तस्मिन्देशाद्यविशेषादेव सकृत्प्रयोगो लभ्यते। उद्देशविशेषस्त्वतन्त्रमिति प्रतिपाद्यते इति हेतुहेतुमद्भावो लक्षणयोरिति। तत्र प्रसङ्ग एव तावत्किञ्चिदुदाहरणं गृहीत्वा व्याख्यायते। पशावग्नीषोमीये "अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति" इति श्रूयते।[१] तत्र संशयः—किं तस्य पाशुकेभ्योऽङ्गेभ्यः पृथगङ्गानि कर्तव्यानि, उत यानि पशोरर्थेन कृतान्यङ्गानि तान्येव तस्याप्युपकुर्वन्ति प्रसङ्गेनेति। तत एतत्सिध्यर्थं प्रसङ्गोऽस्ति नास्तीति विचार्यते।

परार्थमनुष्ठितस्यापि परोपकारकत्वं प्रसङ्गः। स एव तावत् चिन्त्यते किं परोद्देशेनाप्यनुष्ठितानामङ्गानां परोपकारकत्वं संभवति न वेति। तत्र पूर्वः पक्षः—**नास्ति प्रसङ्ग इति। कुतः?** तदुत्तरत्वेन सूत्रं योजयति—**तन्त्रिसमवाये** साधारणोऽङ्गग्रामस्तन्त्रं येषां ते तन्त्रिणः। तेषां **प्रधानानामाग्नेयाग्नीषोमीयादीनां पशुपुरोडाशादीनां च समवाये** एकदेशकालकर्तृत्वे सति **चोदनातः समानानामेकतन्त्रत्वं** यान्येकप्रधानचोदनया सह चोद्यन्ते तेषां **समानतन्त्रत्वं** साहित्ये (य) बलादेव। एतदेव हि प्रधानानां साहित्यं यदुताङ्गप्रयोगः साधारणो भवतीति। यथा दर्शपूर्णमासयोः। यथा च चित्राया-

१. अत्र मु० पा०।

मिष्टौ दध्यादीनाम्। अतुल्येषु तु भेदः स्यात् यानि पुनश्चोदनातो[1] भिद्यन्ते तेषां भेद एव यथा दर्शस्य पूर्णमासस्य च। तयोर्हि प्रयोगचोदना-भेदात्प्रयोगोऽपि भेदेन भवति। साङ्गस्य प्रयोग इति प्रयोगभेदादङ्गानमपि भेदः। तस्माद्द्विप्रकारात्[2] कारणात् कर्मणां तृतीयः[3] प्रकारो नास्ति। द्वावेव प्रकारौ कर्मणां चोदनातः समानत्वं भेदो वा। न प्रकारान्तरमस्ति। तत्र समानानामैकतन्त्र्यम्, भिन्नानां पृथक्तन्त्रता। एव (वं) सामान्यन्यायमुक्त्वा प्रकृते योजयति—तदिह पशुपुरोडाशो दार्शपौर्णमासिकादग्नीषोमीयात् पुरोडाशात् सादृश्येन विध्यन्तं गृह्णाति पशुरपि साान्नायात्। एतावानति-देशस्य व्यापारः। एकैकस्येतरेतरनिरपेक्षस्य चोदकाद्विध्यन्तः प्राप्यत इत्यर्थः। यथा प्राप्ताङ्गयुक्तश्च प्रयोगश्चोद्यते। तत्र तयोः पशुपुरोडाशयोर्भिन्नप्रयोग-विधिचोदितत्वात् भेदेनैवाङ्गानि कर्त्तव्यानि इति न प्रसङ्गेन पशुतन्त्रं पुरोडाशस्योपकर्तुमर्हतीति। यदि हि न प्रसङ्गः स्यात् ततः साङ्गः पुरोडाशः कर्त्तव्य इत्येव विधिर्बोध्येत। तेन च वचनेन प्रामाण्यादेवाङ्गानां भेदः। ननु यद्यपि साङ्गस्य वचनं तथापि प्रयोजनाभावात् नाङ्गानि क्रियन्ते। उपकाराय हि तानि प्रयुज्यन्ते। अत्र च पश्वर्थैरेवोपकाराः सिध्यन्ति, यथा लोके प्रासादार्थे-नाप्यारोपितस्य प्रदीपस्य राजमार्गोपकारकत्वम्। अत आह-लोके तु युक्तः प्रसङ्गः, प्रत्यक्षगम्यत्वात् उपकारस्य। नत्विह प्रत्यक्षमस्ति। तस्मान्नास्ति प्रसङ्ग इति। यदेतदुक्तं चोदनातः समानानामेकतंत्र्यं यथा दर्शपौर्णमासयोर्यथा च चित्रायामिष्टौ इति—अत्र परिचोद्यते चित्रेष्टिरिहा-नूदाहरणं तन्त्रत्वे बहुयागाभावात्। कथम्? दधि मधु घृतं धाना उदकं तण्डुलास्तत् संसृष्टं प्राजापत्यम् इत्यत्र तदित्येकवचनान्तं सर्वनाम। ततश्च संसृष्टशब्देन सह तत् सम्बध्यते एकवचनान्तेनैव न दध्यादिभिः

---

१. भिन्नानि मु० पा०।

२. प्रकारत्वात् मु० पा०।

३. तृतीयप्र० मु० पा०।

यदि दध्यादिभिः सह सम्बध्यते बहुवचनान्तं स्यात् तानीति। वीप्सा वा स्यात्तत्तदिति। न चेह वीप्सा श्रूयते, न च बहुवचनम्। नपुंसकलिङ्गं च धानादिभिः सम्बन्धेऽनुपपन्नम्। तस्मात् संसृष्टशब्देनैवास्य सम्बन्धो युक्तः। ततः किमित्याह-संसृष्टस्य[1] च तच्छब्दनिर्दिष्टस्य प्रजापतिसम्बन्धः। तथापि किमित्याह—संसृष्टं चैकं वस्तु। तस्माद् द्रव्यदेवतैक्यात् एक एव यागः कुतस्तन्त्रमिति। [2]अत्रोच्यते। दध्यादिभिरेव सर्वनाम सम्बध्यते न संसृष्टेन। निर्दिष्टस्य हि प्रतिनिर्देशकं सर्वनाम भवति। निर्दिष्टानि चेह दध्यादीनि। ननु संसृष्टविशेषणतया तेषां निर्देशो न स्वार्थेनात आह—प्रथमया च विभक्त्या तानि निर्दिष्टानि स्वार्थान्येव। संसृष्टविशेषणत्वे न तु षष्ठ्या निरदेक्ष्यन्त।

अतस्तान्येव दध्यादीनि शब्दोपात्तानि साकांक्षाणि [3]मनसि विपरिवर्तमानानि सर्वनाम्ना प्रतिनिर्दिश्यन्ते न तु केनचिच्छब्देन दध्यादिसंसर्गो निर्दिष्टः, यः सर्वनाम्ना प्रतिनिर्दिश्येत। ननु संसृष्टशब्देन सोऽपि निर्दिष्ट एव सत्यं संसृष्टमात्रं निर्दिष्टम्। न च तन्मात्रं देवतासम्बन्धार्हम्, तद्विशेषस्तु संसर्गिविशेषाधीनः। न चेह दध्यादीनि तद्विशेषणार्थानि प्रथमान्तत्वादित्युक्तम्। तस्मात्तेषामेव निर्देशः। अथ यदुक्तं दध्यादिसम्बन्धे बहुवचनं प्राप्नोति वीप्सा वा लिंगञ्चानुपपन्नं तस्मात् संसृष्टेनैव सम्बन्ध इति।

अत्रोच्यते—नैतद्युक्तम्। कथं, सर्वनामप्रातिपदिकस्य[4] निर्दिष्टप्रतिनिर्देशकत्वशक्तिः[5]। वचनस्य त्वेकार्थप्रतिपादकत्वम्। तस्मादनयोर्विरोधः। तत्र प्रथमोपनिपातात् तस्यां वेलायामविरोधात् प्रधानत्वाच्च

---

१. पुरस्यैव च।

२. तत्रेति मु० पा०।

३. मनसि अधिकः मु० पा०।

४. हि अ० पा०।

५. बहूनि चात्र निर्दिष्टानि अ० पा०।

प्रातिपदिकस्य । लिङ्गसंख्ययोश्च तदर्थत्वात् प्रातिपदिकार्थत्वाद्यथाश्रुतं प्रातिपदकं गृह्णीमः । उत्तरकालभावित्वाच्च लिङ्गसंख्ययोर्मुख्यविरोधादविवक्षैव युक्ता । योऽयं पाशन्यायो गुणेत्वन्याय्यकल्पनैकदेशत्वात् इति स एवात्रापि न्यायः । अथ [1]वैकदेवतात्वाल्लक्षणया लक्षितलक्षणया वोपपन्नमेकवचनं लिङ्गं च । नन्वेवं लक्षणैव दोषोऽत आह–सर्वत्रैव हि लक्षणया लिङ्गसंख्ये प्रवर्तते । तथा हि–वृक्षो वृक्षावित्यादिषु प्रातिपदिकं जातिं ब्रूते, लक्षणया तु द्रव्यं गम्यते । तद्गतं च लिङ्गसंख्यम् । तदिहापि तच्छब्दो यदि सन्निधानाख्यगुणवचनस्ततस्तल्लक्षितसन्निहितदध्यादिलक्षितदेवताभिप्रायं लक्षितलक्षणयैकवचनम् ।

अथ सन्निहितद्रव्यवचनस्ततो लक्षणया लिङ्गन्त्वेकदेशगतं लक्षणया समस्तेषु दध्यादिषूपचर्यप्रयुक्तम् अथवा नपुंसकं नपुंसकेनैकवचान्यतरस्याम्[2] इति स्मरणात् नपुंसकानपुंसकानेकाभिप्रायमपि युक्तमेव तदिति नपुंसकैकवचनम् । एवं प्राजापत्यदमपि द्रष्टव्यम् । संसृष्टं पदं च । देवतैक्याच्चार्थप्राप्तः संसर्गोऽनूद्यते । यत्त्वष्टमे द्रव्यमेव वर्णितम (?) सन्निहितत्वात् तण्डुलानामेव निर्देशः स्यात् । अथवा नपुंसकलिङ्गबलाद् दध्यादीनामेव स्यान्न धानातण्डुलयोरिति तदपि प्रथमं यानि निर्दिष्टानि दध्यादीनीत्यनेनैव परिहृतम् । तानि हि निर्दिष्टान्यनर्थकानि कार्ययोगमाकाङ्क्षन्ति । तत्र कतिपयनिर्देशेऽन्यत् साकांक्षमेवावतिष्ठेत । तस्मात्सर्वप्रतिनिर्देश इति युक्तमुदाहरणम् ॥ १ ॥

## गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

न केवलं विधिप्रक्रमतादर्थ्यात् प्रसङ्गाभावः । इतश्च नास्ति प्रसङ्गः, यतः कालगुणविकृताश्च[3] प्रयाजानूयाजाः पशौ "तिष्ठन्तं पशुं प्रयजन्ति ।"

---

१. ता नास्ति ।

२. पा० सू० १-२-६९ ।

३. गुणविकृताश्च अ० पा० ।

'एकादशप्रयाजान्यजति' 'एकादशानुयाजान्यजति' 'पृषदाज्येनानूयाजान्यजतीति' वचनात् ।

अतस्तेऽन्यस्य[१] पशुपुरोडाशस्य नोपकुर्वन्ति । तस्य हविरासदनोत्तरकालैः पञ्चसंख्याकैश्च प्रयाजैः केवलाज्यद्रव्यकैश्चानुयाजैस्त्रिसंख्यैश्चोपकर्त्तव्यम् । तस्मात्प्रसङ्गाभावात् पृथक् तन्त्रः पुरोडाशः ।

## तन्त्रमध्ये विधानात् वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ सि०

अस्ति प्रसङ्गः । तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे प्रतते यदन्यत्तत्तुल्यधर्मकमापतति कर्म प्रसङ्गस्य विषयः, तत्र हि तस्य मध्यपतितस्य कर्मणः पूर्वभाविकर्म्मणोऽर्थे येतिकर्त्तव्यता प्रवृत्ता सैव प्रसज्यतेति यथा पशौ प्रतते [२]पशुपुरोडाश आपतति, तस्य पाशुकीतिकर्त्तव्यता प्रसज्यते । कथं प्रसज्यते तस्य सा ? तदुच्यते—भावयेत् किं पशूपकारम्, केन पशुपुरोडाशयागेन कथमित्यनेन कथंभावेन यागगतो व्यापारोऽभिलक्षितः । स च यागगतो व्यापार उपमितलक्षितप्रापणेन पौर्णमासिकस्याग्नीषोमीयस्य यो यागगतो व्यापारः प्रयाजादिजन्यदृष्टादृष्टोपकारवत्तासंपादनाख्यस्तद्द्रव्यदेवतासादृश्येनाकाङ्क्षति । तत्र[३] यदेतदग्नीषोमीययागगतो व्यापारविशेषनियमनमष्टमलक्षणसिद्धं तदुत्पत्तिरेवोत्पत्तिः प्रथमालोचनत्वात्तस्य चालोचितस्य व्यापारस्य[४] यदितरेण पशुपुरोडाशयागेन सम्बन्धकरणं अयमपि व्यापारस्तादृश इति सा प्राप्तिर्विनियोग इति । द्वावपि चेमावुत्पत्ति-विनियोगरूपौ यागगतव्यापारविशेषविषयौ चोदकस्य व्यापारौ ।

---

१. पशु नास्ति ।

२. पशु नास्ति ।

३. पदे नास्ति ।

४. व्यापारस्य नास्ति ।

तत उत्तरकालमुपसंग्रहः। कः पुनरुपसंग्रहो नाम ? अत आह—उप इति समीपेकरणमनुष्ठापनम्, समिति तस्य नानाविधाङ्गजुष्टस्य प्रकारस्य साकल्येन ग्रहणम्। एष च प्रयोगवचनस्य व्यापारः। भवत्वेवम्। प्रकृते तु किमायातमित्याह—सः प्रयोगवचन इह पाशुकेन प्रयोगवचनेन तस्य प्रकारस्य समीपे कृतत्वात्। न भूयः पौरोडाशिकः समीपे कृतत्वात्[1] करोति। तस्मात् पौरोडाशिकः प्रयोगवचनो लुप्यते। एष प्रसङ्गः—यदन्यार्थैः कृतार्थत्वेन स्वीयप्रयोगवचनलोपः। ननु यदि प्रयोगवचनो लुप्येत[2] करणांशस्यानुष्ठानं न स्यात्। तस्यापि प्रयोगवचनाधीनत्वात् उच्यते। न प्रयोगवचनस्वरूपं लुप्यते यस्तस्य प्रकारसामीप्यकरोंऽशः स लुप्यते। तथाहि—पदार्थावान्तरोपकारः प्रकृते प्रकारः। स इहातिदेशेन पुरोडाशयागविशेषणत्वेन विनियुज्यते। विनियुक्तेन च तेन विशिष्टप्रयोगं प्रयोगवचनो विधत्ते पुरोडाशयागः। प्राकृताङ्गावान्तरव्यापारवान् कर्त्तव्य इति। एवं श्रुत्या विशिष्टं विदधत्प्रयोगवचनोऽर्थात् विशेषणभूतां तद्वत्तामनुष्ठापयति नान्यथा तद्वान् कृतो भवतीति। तद्यत्रान्यार्थानुष्ठितैरेवोपकारैस्तद्वत्ता लब्धा तद्वत्तयैव यागस्तद्वान् भवतीति कृते श्रुत्यर्थेऽन्यथानुपपत्त्यतिक्षयात् प्रयोगवचनस्य प्रकारानुष्ठापकत्वं लुप्यते। कथं पुनरिदमवगम्यते पाशुकः प्रयोगवचनः प्राकृतं प्रकारं पुरोडाशस्यापि समीपे करोतीति पशुसमीपे हि सोऽनेन कृतः न पशुपुरोडाशसमीप इति प्रश्नाभिप्रायः। उत्तरम्—अग्नीषोमीयं पशुमालभेत इत्येतस्मादेवावगम्यते। कथम् ? उत्तरम्—अस्य हि वाक्यस्यायमर्थः—भावयेत् किं ज्योतिष्टोमोपकारं अवान्तरोपकारम् अग्नीषोमीयापूर्वमित्यर्थः। केन पशुयागेन। कथमित्यंशेन प्रयाजादीतिकर्त्तव्यता सम्बध्यते। तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमोपकारो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेन पशुयागेन भाव्यते।

---

१. कृतत्वात् नास्ति।

२. लुप्यते।

तस्मिन्नेव क्षणे इतिकर्तव्यता करणमनुगृह्णती भाव्यमानेन सम्बध्यते। तस्मात् त्रयाणामेतेषां तुल्यकालत्वं, भवन्तं ज्योतिष्टोमोपकारं यागेनेत्थं भावयेदिति। किमिति तुल्यकालतात आह–यदि च भूते [१]भविष्यतीति वा भाव्ये करणेतिकर्त्तव्यते स्याताम्। ततस्तयोस्तेन सह सम्बन्ध एव न स्यात्। एव ( करणेतिकर्तव्यते स्यातां ततस्तेदत्रयोस्तेन सह सम्बन्ध एव न स्यात्[२]। ) एवं करणेतिकर्त्तव्यतयोरपि। तस्मात्तुल्यकालता। कः पुनरेषां कालः? नह्युपकारस्यादृष्टस्य कालावधारणं शक्यम्। अत आह–तत्र यद्यप्युपकारस्य भाव्यस्य कालो नावधार्य्यते तथापि त्रयाणामेककाल-सम्बन्धात् करणेतिकर्त्तव्यताकालेन परिच्छिद्यते यस्तयोः कालः स तस्यापीति। सहितानि चाङ्गानीतिकर्त्तव्यतेत्युक्तम्। ततश्च यावत् पशोरङ्गं क्रियते तावत्पूर्वाण्यङ्गानि स्वावान्तरोपकाररूपेणावतिष्ठन्ते। ततः किमित्याह–पशोश्च दीर्घकालत्वात्तन्मध्यपाती पुरोडाशः स्वसमीपे कृतान् बर्हिस्तर-णादिदृष्टोपकारान् प्रयाजादिजन्यान्यपूर्वाणि च पाशुकेन प्रयोगवचनेन केवलमुपसङ्गृह्णाति स्वीकरोति पाशुकेन प्रयोगवचनेनसमीपे कृतानीत्यन्वयः। न तु स्वयं पृथक्त्वेन समीपे [३]स्वीकरोति प्रयोजनाभावात्। अन्यार्थैरेवा-त्मनस्तद्वत्वसिद्धेः न हि स्वोद्देशेनैवानुष्ठितैस्तद्वत्तया भवितव्यम् उद्देश्यस्या-विधानादनङ्गत्वात्। नन्वेवमवहन्त्यादीनामर्थकरणं स्यादित्याशंक्योत्तरमुप-रितनेनाधिकरणे वक्ष्यमाणं दर्शयति यानि च तेन पाशुवेन न समीपे क्रियन्ते तान्याज्यभागावहन्त्यादीनि पृथगुपसङ्गृह्णाति। कथमित्याह—'नचेदन्येन शिष्टाः' इति न्यायात्। येऽन्येन न विहिताः पदार्थास्तान्

---

१. ष्यति वा।

२. अयमंशो नास्ति।

३. शोरन्यमङ्गं।

४. करोति।

विदधातीति पौर्णमासीकाङ्क्षयुक्तः[1] पशुपुरोडाशयागः कर्तव्य इति योऽयं विशिष्टविधिः सोऽन्यथानुपपत्त्या विशेषणान्यस्कन्दन् यान्यन्यतो लब्धानि तानि[2] परिहाय विशेषणान्तरं विधत्ते इति। अथ यदुक्तं द्रव्यसंख्याकालभेदात् न प्रसज्यते वैगुण्यं हि तथा पुरोडाशस्य यागस्य स्यात्। यथा—वस्थिताङ्गालाभादिति—तदुच्यते—सर्वः कथंभाव उपकारमाकाङ्क्षति। यदवस्थं करणं स्वकार्य्याय पर्य्याप्तं भवति तदवस्थं तद्येन व्यापारेण भवति स एवमपेक्ष्यते कथमिति। स चोपकारः सम्पादनात्मा उपकारैरेव हि तद्वत्ता भवति नाङ्गस्वरूपैः अयुगपद्भावात् [3]तमुपकारं चोदकः साद्दश्येनोत्पादयति प्रापयति [4]च तन्तूत्पादितं प्रापितं च प्रयोगवचन उपसङ्गृह्णाति। ते चोपकाराः शास्त्राण्यन्तरेण न संभवन्ति इति शास्त्राणामुत्पत्तिं च प्राप्तिं च करोति। पदार्थानामप्युपलक्षणार्थं शास्त्रग्रहणम्। पूर्ववच्चोत्पत्तिप्राप्त्युत्तरकालमर्थाच्छास्त्राणामपि प्रयोगवचनोपसंग्रहः। तदिह पाशुकौ चोदकप्रयोगवचनौ सर्वमिदं कुरुतः। पौरोडाशिकस्तु चोदक उत्पत्तिप्राप्ती करोत्येव। प्रयोगवचनस्तु पाशुकेन प्रयोगवचनेनोपसंगृहीतत्वान्न[5] पृथगुपसंगृह्णाति उपकारान्। न चेदुपकारानुपसंगृह्णाति ते पदार्था एवात्र पुरोडाशे न सन्ति। न कर्त्तव्या इत्यर्थः। उपकारानुपपत्त्या हि तेषां प्राप्तिः। इह च परकीयैरुपकारैः कृतार्थः पुरोडाशो न स्वयं तानुपसङ्गृह्णाति। नतरां पदार्थानां गुणाः। तस्मान्नास्ति वैगुण्यम्। कर्त्तव्यस्य हि गुणस्य लोपो वैगुण्यम्। ननु पञ्चसंख्यैः प्रयाजैराज्यद्रव्यकै (त्रिसंख्याकै) श्चानुयाजैर्जनितमुपकारं पुरोडाशः प्रार्थयते। न चासौ पशावस्ति। तेनापेक्षितस्योपकारस्या-

---

१. काग्नीषोमीयाङ्ग।

२. तानि नास्ति।

३. तं तूप।

४. च नास्ति।

५. गृहीतान्न इति पाठः।

लाभात् पृथक् कर्त्तव्या एव प्रयाजादयः। अत आह—**न च संख्याभेदेन द्रव्यभेदेन वा** पशौ प्राकृतादपूर्वादपूर्वान्तरं **भवति। किं तर्हि ? प्राकृती संख्या प्राकृतं च द्रव्यं केवलमपनीयते। उपकारस्त्वपूर्वाख्यः स एव** स्थितः। तेन च पुरोडाशस्यापि प्रयोजनमिति न स्वगुणादरस्तस्य कार्य्यार्थ-त्वात्। कार्यस्य चान्यतो लब्धत्वात्।

एवं कालभेदोऽपि न दोष इत्याह—**प्रयाजोपकाराश्चादौ** तिष्ठति पशौ य उत्पद्यन्ते **ते चाफलनिष्पत्तेः** फलभूतपश्वपूर्वनिर्वृत्तेर्विद्यन्ते न त्वपगताः। विद्यन्ते चेत्तैरेव पुरोडाशस्यानुग्रहसिद्धेरदोष **एव कालभेदः**। तस्मादस्ति प्रसङ्ग इति ॥ **३** ॥

[ २—पशुपुरोडाशे आज्यभागादिकर्तव्यत्वाधिकरणम् ]

## जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७॥ सि०

भाष्यकारीयमुदाहरणं प्रदर्शनार्थमिति दर्शयन्नाह—**अस्यैव[1] पुरोडाशस्य** यत् पशावविद्यमानमाज्यभागनिर्वापप्रोक्षणादि तत् **कर्तव्यं न वेति संशयः। अतस्तत्** सिध्यर्थमिदमाह—भाष्यकारः **किं प्रयोगवचनेन न[2] चोदको बाध्यते उत प्रयोगवचनश्चोदकेनेति**। नेमे तृतीये कर्तरि, किन्तु सहयोगे। तदयमर्थः—किं प्रयोगवचनसहित एव पुरोडाशयागः (इति) न तु स लुप्यते चोदकस्तु लुप्यतेऽथवा विपर्य्यय इति। तदिह **चोदकबाधेऽव** घातादेरकरणं **प्रयोगवचनबाधे तु करणम्। तत्रानुमानिकत्वात् चोदको बाध्यते न तु प्रयोगवचनः। तस्य प्रत्यक्षत्वादिति पूर्वः पक्षः**। प्रयोगवचनो हि लिङ्प्रत्ययः प्रत्यक्षः। प्रकृतिवच्छब्दस्तु चोदक आनुमानिकः। तेन पाशुकेन चोदकेन प्राकृतस्य विध्यन्तस्य प्रापितत्वात् पौरोडाशिकश्चोदकः कृतकरत्वान्नि-वर्तते। प्रयोगवचनस्तु पौरोडाशिकः पाशुकेनापि प्रापितानुपकरान्सन्निहितान्

---

१. पशु पु०।

२. न नास्ति।

स्वार्थतयापि स्वीकुरुत इति मन्यते न च तेनाज्यभागादिप्रापितमिति तेषामकरणम्। अपि च प्रयोगवचने[1] बाधे प्रापितमपि पौरोडाशिकं न किञ्चिदप्यनुष्ठीयेत, प्रयोजकाभावात्, तस्माच्चोदकबाधः। सिद्धान्तस्तु-पाशुकेन प्रयोगवचनेन पौरोडाशिकस्य **प्रयोगवचनस्यैकदेशो बाध्यते**। एकदेशशब्देन समस्तबाधो नास्तीति दर्शयति। तेन न किञ्चिदप्यनुष्ठीयतेति चोद्यं परिहृतं भवति। **कतरोऽसावेकदेशः**। उच्यते-उपसङ्ग्राहकः प्रयोगवचनः। तत्रोपशब्दः **समीपवचनः। संशब्दः साकल्यवचनः। ग्रहशब्दो गृह्णातिवचनः।** अनुष्ठापनवचन इत्यर्थः। **एवं त्र्यंशः प्रयोगवचनः।** तत्रायं प्रयोगवचनो **ग्रहणात्मकस्वरूपः** ये ते त्रयोंऽशाः तेषु यो ग्रहणांशः सोऽस्य स्वरूपम्। **इतरे त्वस्य समीपकरणसाकल्ये विशेषणे। ताभ्यां हि स विशिष्टः सर्वत्रोपलभ्यते।** प्रयोगवचनो हि समीपस्थसकलाङ्गयुक्तं प्रधानमनुष्ठापयति। तदेवं[2] विशेषणविशेष्यात् भावेनांशत्रयात्मा प्रयोगवचनः। तत्र बाध्यमंशं सन्दर्शयति-**विशेषणं च विशिष्टान्यथानुपपत्त्या गृह्यते।** तमेवाह-**इतरथाहं साकल्यसामीप्यविशिष्टो न भवामीत्येवमर्थात् सामीप्यं साकल्यं च करोति न श्रुत्या।** ततः किमित्याह—**इह च पाशुकेन प्रयोगवचनेन केषांचित्** प्रयाजाद्येषु[3] **येषामपूर्वाणां सामीप्यं कृतम्।** अत**स्तेषामन्यथानुपपत्तिः** क्षीणा। **येषां त्वाज्यभागनिर्वापप्रोक्षणावहननादीनां न कृतं** पशुना **सामीप्यं तेषामन्यथानुपपत्त्या सामीप्यं करोत्येव। तस्मात्** प्रयाजादिविषयः **सामीप्यकरणैकदेशो**[4] **बाध्यते प्रसङ्गेनास्य** प्रयोगवचनस्य। अथ **यदुक्तमानुमानिकत्वाच्चोदकस्यैव दुर्बलस्य बाधो युक्त इति तन्न।** नहि चोदको दुर्बलः। कुतः? **यदि हि चोदक उत्पत्तिप्राप्ती न करोति** ततः प्रयोगवचनेन **कस्य सामीप्यकरणं**

---

१. वचनबाधे।

२. तदेव विशेष्यांशकत्रयात्मा प्र०।

३. प्रयाजाद्यपूर्वाणां।

४. करैकदेश।

कस्य च साकल्येनोपसंग्रहः । तस्मात्प्रत्यक्षोऽपि प्रयोगवचनश्चोदकाद् दुर्बलः तदुत्तरकालभावित्वात्[१] तदधीनात्मलाभत्वात् दुर्बलत्वस्य च बाध इति प्रयोगवचनस्यैव बाधः ।[२] अपि च सति चोदके प्रसङ्ग आत्मानं लभते नान्यथा । तथाहि—यदि चोदक आघारादीन्यङ्गानि पत्नीसंयाजान्तानि पशुपुरोडाशस्य कल्पयति संबन्धित्वेन आघारादिजन्यानुपकारानित्यर्थः ।

तत उत्तरकालं प्रयोगवचनः समीपे करोति । तच्च समीपेकरणं पाशुकेन प्रयोगवचनेन कृतमिति कृत्वा न स्वयं करोत्येवं प्रसङ्गस्यात्मलाभः स्यान्नान्यथा । कथमित्याह—यदि च तस्य पुरोडाशस्य चोदकेनाङ्गानामुत्पत्तिप्राप्ती नस्तस्तथा सत्यनुत्पन्नानाम[३] प्राप्तानामङ्गानामङ्गत्वाभावात् पाशुकेन[४] चोदकेन पुरोडाशाङ्गत्वादेः[५] प्रयोगवचनस्य समीपकरणशक्तिरेव नास्ति । नह्यनङ्गेषु तस्य शक्तिः । अङ्गं सत्प्रयोगवचनेन गृह्यत इत्युक्तम्, समीपकरणाभावाच्चान्येन सामीप्यं कृतमित्येतन्नैवोपपद्यते । अनाकाङ्क्षितत्वात् । आकाङ्क्षितस्य सामीप्यकरणस्यान्येन लाभात् प्रसङ्गो भवति नचानङ्गानां समीपकरणमाकाङ्क्षितम् । तस्मादङ्गत्वाय चोदकोऽङ्गीकर्त्तव्यः । प्रयोगवचनस्त्वंशे कृतकरत्वाद्बाध्यते । यदि प्रयुक्तिबाधः कस्तह्यप्रयोजकात् प्रसङ्गस्य विशेषः । शक्त्यशक्तिकृत इति ब्रूमः । वाजिनं हि दध्यानयनं प्रयोक्तुमसमर्थमेव । अतस्तस्यान्यतः तदलाभे लोप एव भवति । पुरोडाशस्तु प्रयाजादीन् समर्थ एव प्रयोक्तुं अन्यतस्तूपकारसिद्धेः समर्थोऽपि न प्रयुङ्क्ते । अत एवाज्यभागावयं प्रयुङ्क्तेऽन्यतोऽलाभादिति ॥ ७ ॥

---

१. तदुत्तरकालत्वात् ।

२. बाधनः ।

३. पन्नाप्राप्ताना ।

४. पाशुकेन स्तः ।

५. गत्वासिद्धे ।

[ ३—सोमे महावेदेः प्रसङ्गोपकारकत्वाधिकरणम् ]

## नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ पू०

यद्यप्यङ्गप्रधानार्थां वेदिरिति स्थितं तथापि द्यति शक्ष्यामहेऽस्यां कर्तुमिति प्रचारार्थत्वावगमात् हविरासादनार्था प्राकृती वेदिः प्रवर्तते एवेति मन्यते। यद्यपि तावत् केवलप्रचारार्था[1] स्यात्तथापि हविरासादनमपि तत्रैव सम्भवति। वेद्यां हि हविरासादितव्यं न तदर्थाय मतदर्थायामिति वा विशेषः श्रूयते। प्रचारार्थापि च वेदिर्वेदिरेवेति तस्यामेव प्रसङ्गात् आसादने सिद्धे प्रयोजनाभावात् प्राकृतीह निवर्तते। अपि च प्राप्तें वेदिकार्य्येऽतिदेशेन प्राप्नुवन्तीं दार्शपौर्णमासिकीं वेदिं विकृत्य पश्वादिषु सौमिकी निविशत इत्युक्तम्। अतोऽस्या एवासादनार्थत्वाद्बाधादपि निवतते एव प्राकृती वेदिरिति सिद्धान्तः ॥ ८ ॥

[ ४—सोमे ऐष्टिककार्याणामैष्टिकपात्रैरनुष्ठानाधिकरणम् ]

## पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥ पू०

यद्यप्यन्यार्थेनाप्यन्यत् क्रियते पात्रैरपि[2] सौमिकैरेवैष्टिकहोमादिकार्य्यसिद्धेर्जुह्वादीनां निवृत्तिः स्यात्। सत्यं यदि वैगुण्यं न स्यात्। इह तु जुहूसाधनको होमस्तया विना विगुणः स्यात्। न स्वकार्य्यं साधयेत्। न चात्र पात्रान्तरेण प्राकृतकार्य्यं सिद्धं पृषदाज्यद्रव्यकैरिवानुयाजैः प्राकृतमनूयाजकार्य्यं येन स्वगुणानादरः स्यात्। तस्मादिह नास्ति प्रसङ्ग इति ॥ १० ॥

[ ५—शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् ]

## शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥ सि०

---

१. स्यात्तथा नास्ति०।

२. तर्हि अ० पा०।

सोमाहुतिः सवनीयाद्याहुतिश्चार्थान्तरम् । तत्र युक्तं सोमाहुत्यर्थेभ्यः पात्रेभ्यः, पात्रान्तराणि स्वार्थान्युपादीयन्ते इति । अत्र तु नास्ति चोदकेन प्राकृत एव पाकः पशौ पुरोडाशे च प्राप्यते । यत्र पशोः शामित्रः साधनतया विहित इति पुरोडाशोऽपि तत्रैव श्रपयितव्य इति । एतावती विशेषाशंका । पूर्ववत्तूत्तरम् ( इति पूर्वः पक्षः । उत्तरं ) वैगुण्यपरिहाराय शालामुखीये श्रपणमिति ॥ १२ ॥

[ ६—कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् ]

## श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥ सि०

शालामुखीय एवात ऊर्ध्वं गार्हपत्यो भवतीत्यस्य [१]चोदकेनैव प्राप्नोति । नामातिदेशात्तु प्राजहितः । स च बलीयान् दुर्बलाच्चोदकादित्युक्तम् । उपदेशप्राप्तिस्तु प्राजहितस्य या कैश्चिदुच्यते न सा संभवति । तथाहि यद्यपि अनारभ्यवादोऽयं गार्हपत्ये हवींषि श्रपयति' इति तथापि श्रपणद्वारत्वात् यत्र श्रपणं तत्र गार्हपत्यः । प्रकृतौ च श्रपण विहितम् । विकृतौ तु यावदतिदेशेन श्रपणं प्राप्यते तावद्गार्हपत्येऽपि प्राप्यत एवेति द्विरुक्तत्वान्नोपदेशसम्भवः । तस्मान्नामातिदेशप्राबल्यमेव वक्तव्यमिति ॥ १३ ॥

[ ७—सोमे ऐष्टिकनिर्वापायानोन्तरसम्पादनाधिकरणम् ]

## हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १४ ॥ पू०

अनसोऽधिनिर्वपतीत्यस्य हविर्धानयोरपि संभवात् प्रसङ्ग मन्यते । अपरेण गार्हपत्यमित्यस्य देशस्यानुपसंहारात् वैगुण्यापत्तेर्नास्ति प्रसङ्ग इति सिद्धान्तः ॥ १४ ॥

---

१. चोदकात्कुण्डपायिनामयनेऽपि प्राप्तेरग्निहोत्रद्रव्यमपि तत्रैव श्रपयितव्यमिति पूर्वपक्षः । सिद्धान्तस्तु सत्यं अ० पा० ।

[ ८—प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् ]

## तद्युक्तं च कालभेदात् ॥ १७ ॥ सि०

दीक्षाकालजागर्य्यजनित उपकारो यावत्क्रतुसमाप्त्यवतिष्ठते प्रयाजोपकार इवापशुसमाप्तेः । अतस्तेनैव कृतार्थाः प्रायणीयादयो न स्वीयं जागरणमाद्रियन्ते । तस्मादस्ति प्रसङ्गः । नैवं दृष्टार्थं जागरणं दर्शपूर्णमासयोः ज्योतिष्टोमे च यज्ञसाधनरक्षणार्थम् । न च दीक्षाकालेन जागरणेन प्रायणीयादिकालानि रक्षितानि भवन्ति । यद्यप्यदृष्टार्थो जागरणं तथापि सोमस्यापूर्वत्वाज्जागरणं तत्र विहितं न दर्शितम् । अतस्तेन प्राकृतकार्य्यासिद्धेर्नास्ति प्रसङ्गः ॥ १७ ॥

[ ९—वरुणप्रघासेषु विहारभेदेन मन्त्रभेदाधिकरणम् ]

## मन्त्राश्च संनिपातित्वात् ॥ १८ ॥ सि०

प्रयोगपरिमाणसामान्या तु तंत्रावापचिन्तापीयं क्रियते । नात्रापूर्वपक्षाशङ्का काचिदस्ति । शिष्यहितार्थन्तु तत्त्वकथनमिति वेदितव्यम् ॥ १८ ॥

[ १०—सोमाङ्गेष्टिष्वन्वाधानाभावाधिकरणम् ]

## धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥ सि०

गार्हपत्यात् प्रणयेननापयति[1]तस्याहवनीयस्य धारणार्थं बलवत्करणमन्वाधानम् तच्च पुनः पुनरपि शक्यं कर्तुमित्यावृत्तिं मन्यते । सत्यं शक्यं न तु प्रयोजनमस्ति । सोमार्थेनैव तस्यासमाप्तेर्धृतत्वात् । न हि धृतस्य धारणार्थः प्रयासोऽर्थवान् । तस्मान्निवृत्तिः प्राकृतस्यान्वाधानस्येति ॥ १९ ॥

[ ११—दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् ]

## तथाव्रतमुपेतत्वात् ॥ २० ॥ सि०

अग्ने व्रतपते व्रतं चरिष्यामि इति मन्त्रोच्चारणमेव व्रतम् । अदृष्टार्थं च

---

१. नाथंप्रणति ।

तत्। न च सौमिकेन व्रतेन तददृष्टं कृतमिति प्रमाणमस्तीति नास्ति प्रसङ्ग इति पूर्वःपक्षः।

सिद्धान्तस्तु कर्माङ्गभूता यमनियमा व्रतम्। तदुपगमनार्थोऽयं मन्त्रो लिङ्गाद्विज्ञायमानो नादृष्टार्थः शक्यः कल्पयितुम्। प्रयोगाङ्गभूताश्च यमनियमाः कर्तृद्वारेण प्रयोगश्च साङ्गस्येति दीक्षाकाले एतेनैव सौमिकेन व्रतेन सिद्धार्थत्वात् प्राक्कृतं व्रतं निवर्तत इति ॥ २० ॥

[ १२—ऐष्टिकेऽग्न्यन्वाधानाननुष्ठाधिकरणम् ]

## ग्रहणार्थश्च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥ सि०

धारणार्थत्वाद् अन्वाधानं निवर्तत इत्युक्तम्। तदाक्षिप्यते। मा भूद्धारणार्थतया प्रवृत्तिः। देवतापरिग्राह्यतया तु प्रवर्तते। तादर्थ्यमपि हि तस्य श्रूयते देवता एव [१]तत्पूर्वेद्युर्गृहीत्वा श्वो भूते यजते इति। न च दीक्षणीयया देवतापरिग्रहसिद्धिः। तस्याः केवलप्रधानदेवतापरिग्रहार्थत्वात्। न च प्रधाने वैश्वदेवग्रहे सर्वासां समवायोऽस्ति विश्वदेवशब्दस्य गणवाचित्वात् इत्येवमाक्षिप्य सिद्धान्तितम् यथैवान्वाधानस्य देवतापरिग्रहार्थता वाक्यशेषादवगता तथैव दीक्षणीयाया अपि। न च केवलप्रधानदेवतापरिग्रहार्थतास्या[२] तथापि विश्वदेवशब्दस्य प्रसिद्धावयवार्थत्वेन कृत्स्नदेवतावाचित्वाद्रूढिकल्पने गणवाचित्वमप्रमाणकमिति तत्रैवाङ्गदेवतानामप्यन्तर्भावात् सिद्धे परिग्रहे नार्थोऽन्वाधानेनेति। सर्वं चैतदभ्युपेत्यापि देवतापरिग्रहार्थं शक्यते प्रसङ्गो वक्तुम्। सर्वेषां नाशेपत्वस्यात्त प्रयुक्तत्वात् (?) इत्यनेन बर्हिर्धर्मवद्वाक्येन सर्वदेवतापरिग्रहार्थत्वावगमात् यद्यपि च केवलप्रधानदेवतापरिग्रहार्थता स्यात् प्रसङ्गो वक्तुमित्यभिप्रेत्योक्तम् परमार्थतस्तु **नदेवतापरिग्रहार्थत्वमस्तीति** दर्शयति—[३]अग्न्यन्वाधानं न वस्तुतः स्वसामर्थ्यालोचनेन

---

१. तत् नास्ति।

२. अतः परं अन्तिमा पङ्क्तिरस्ति। तत्समाप्त्यनन्तरं अर्थात् स्यादित्यनन्तरं तथापीति पङ्क्तिद्वयमुल्लिखितम्।

३. अग्निशब्दो नास्ति।

देवतापरिग्रहार्थमवगम्यते । नापि शब्दतः । तथाहि—वस्तुतस्ताव-
द्देवतापरिग्रहार्थमवगम्यते । प्रत्यक्षेण हि तदग्निधारणार्थं चावगम्यते,
प्रयोजनम्[१] यदि परं ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्नि (परि)
गृह्णाति देवता एव तत् पूर्वेद्युर्गृहीत्वा श्वोभूते यजते इत्ययं शब्दो
देवतापरिग्रहार्थत्वमवबोधयेत् न चेदृशेन वर्तमानापदेशेन शब्देन
देवतापरिग्रहार्थत्वं प्रतिपादयितुं शक्यते । अर्थवादत्वादस्य वाक्यस्य
केवलमग्न्यन्वाधानमेवानेन स्तूयते । एवञ्चादृष्टप्रयोजनकल्पना न
भविष्यति दृष्टमेव त्वग्निधारणम् प्रयोजनम् । मन्त्रोऽपि स्वसामर्थ्ये-
नाग्निमेवाभिवदति[२] ममाग्नेवर्च इति । नान्यत् किञ्चित् । तेन मन्त्र-
लिङ्गात् आत्मलिङ्गाच्चाग्निधारणमेवास्य अग्न्यन्वाधानस्य कार्य्यं न देवता-
परिग्रहः । यदप्युक्तं दीक्षणीययैव देवतापरिग्रहः कृत इति [३]तदप्य-
युक्तम् । कथम् ? दीक्षिष्यमाण इति पदेन शानचा कर्ताभिधीयते । लृटा
भविष्यत्कालः दीक्षाशब्देन मुण्डन[४] वपनादिकं संस्कारजातं लक्ष्यते ।
तेन तद्विषयः संकल्पो लक्ष्यते । संकल्पो हि क्रत्वर्थधर्मनियमविषयो दीक्षा-
शब्देनोच्यते । तस्मादीदृशस्य भविष्यद्दीक्षाकर्तुः पुरुषस्य संस्कारतयाग्ना-
वैष्णवो विधीयते । अतः श्रुत्यासौ दीक्षां सम्पादयितुं क्रियते । लृट्-
प्रत्ययो हि क्रियार्थायां क्रियायामुपपदे विहितस्तुमुन् श्रुत्यैव दीक्षार्थतामिष्टेर्वद-
तीति । न देवतापरिग्रहार्थता । ननु तादर्थ्यमपि श्रूयते । अत आह—तस्य
विधीयमानस्य सर्वाश्चैता देवताः परिगृह्णातीति अर्थवादोऽयमाग्ना-
वैष्णवस्तुत्यर्थः[५] । कस्मादित्याह—न चेदृशेन शब्देन देवतापरिग्रहः
शक्यते फलतया विधातुं साध्यत्वे प्रतिपत्त्यभावात् । देवतापरिग्रहार्थायां

१. प्रयोजनं नास्ति ।

२. दधति मु० पा० ।

३. एतत् मु० पा० ।

४. डनं वप० ।

५. वैष्णवस्य स्तु० मु० पा० ।

च सत्यां पुरुषसंस्कारिका देवतापरिग्रहार्था चेति वाक्यभेदः स्यात्, द्विरदृष्टकल्पना च स्यात्। तस्मादभ्युपेत्यवाद एवायम्। तदयमर्थः, यद्यपि देवतापरिग्रहार्थं तथापि दीक्षणीयया तत्सिद्धेर्निवर्तेत। यथैवह्यग्न्यन्वाधानं वाक्यशेषप्रामाण्याद्देवतापरिग्रहार्थं तथा दीक्षणीयापि वाक्यशेषादेवेति। तथा च सूत्रं ग्रहणार्थं च पूर्वमिति। चशब्दोऽप्यर्थे। यद्यपि ग्रहणार्थं तथापि निवर्तेतेत्यर्थः॥ २८॥

[ १३—सौमिकेष्टिषु पत्नीसन्नहनाननुष्ठानाधिकरणम् ]

## सन्नहनं च वृत्तत्वात्॥ २९॥ सि०

सौमिकेनैव सन्नहनेन कृतकरत्वात् प्राकृतं सन्नहनं निवर्तेत इति शिष्यहितार्थमुक्तम्। न तु निराकरणीयं किञ्चिदप्यस्ति॥ २९॥

[ १४—सौमिकेष्टिष्वारण्याशनाभावाधिकरणम् ]

## अन्यविधानादारण्यभोजनं न स्यात् उभयं हि वृत्त्यर्थम्॥ ३०॥ सि०

उभयोर्वृत्त्यर्थत्वात् प्रधानार्थस्य प्रत्यक्षश्रुतस्य च पयोव्रतस्यावर्जनीयत्वात्तेनैव कृतकरमारण्यभोजनं निवर्तेत इत्येतदपि स्पष्टीकरणमेव शिष्यहितार्थम्॥३०॥

[ १५—सौमिकेष्टिषु शेषभक्षाननुष्ठानाधिकरणम् ]

## शेषभक्षास्तथेति चेन्नान्यार्थत्वात्॥ ३१॥ सि०

होमाभिषवभक्षणं च तद्वत्[1] इत्यत्र ( शेषभक्षाश्च तद्वत् ) यदुक्तं शेषभक्षा द्रव्यप्रतिपत्त्यर्था न पुरुषप्रीत्यर्था इति तस्येदं प्रयोजनम्। प्रासङ्गिकत्वादिहाभिधीयते। प्रीत्यर्थत्वे व्रतेनैव तत्सिद्धे र्निवर्तेरन्। प्रतिपत्त्यर्थत्वेऽनिवृत्तिरिति॥ ३१॥

---

1. [ ]वाक्यमिदं नास्ति।

[ १६—सौमिकेष्टिषु प्राकृतदक्षिणाभावाधिकरणम् ]

**भृतत्वाच्च परिक्रयः ॥ ३२ ॥ सि०**

दक्षिणाः सोमस्येति वचनात् प्रधानार्थैव दक्षिणेत्युक्तं तृतीये । अतश्चाङ्गेषु भवितव्यं प्राकृत्या दक्षिणयेति पूर्वः पक्षः ॥

सिद्धान्तस्तु—सत्यं प्रधानार्था दक्षिणा । अतः सैवाङ्गेषु प्रसज्यते । प्रधानार्था ह्यानतिरुपक्रमप्रभृत्यापवर्गादनुवर्तते । तन्मध्यवर्तीनि चाङ्गानि । तान्यन्यार्थामेवानतिमासाद्य कृतार्थानि नात्मार्थमानतिं प्रयुञ्जते । तस्मात् प्रधानार्थयैव दक्षिणया तदन्तर्भूतानामङ्गानामपि प्रसङ्गात्कार्य्यसिद्धेः प्राकृती निवर्तत इति ॥ ३२ ॥

[ १७—सौमिकेष्टिषु शेषभक्षस्य कतव्यत्वाधिकरणम् ]

**शेषभक्षास्तथेति चेन्न कर्मसंयोगात् ॥ ३३ ॥ सि०**

इदमपि दशमे यदुक्तं शेषभक्षाश्च तद्वदित्यत्र न परिक्रयार्था भक्षा इति तस्य प्रयोजनकथनम् ॥ ३३ ॥

[ १८—सौमिकेष्ट्यादिषु होतृवरणानुष्ठानाधिकरणम् ]

**प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३५ ॥ सि०**

दृष्टार्थं ब्रह्मवरणमित्यविवादम् । सोऽपि चामावास्यायां पूर्वेद्युरेव वेदिकरणेप्रसवे प्रवृत्तः पश्चादपरेद्युः प्रणीताप्रणयनकाले व्रियते । तेन यथैव ब्रह्मणः प्रवृत्तेऽपि कर्म्मणि दृष्टार्थं वरणमेवं होतुरपि दृष्टार्थमेवेति तुल्यतां मन्वानः सौमिकेन वरणेन प्रसङ्गसिद्धिमाह । सिद्धान्तस्तु न प्रवृत्ते कर्म्मणि ब्रह्मा व्रियते । ब्रह्मवरणं हि प्रणीताप्रणयनकाले पाठक्रमेण प्राप्तम् । वेदिकरणमपि हविरभिवासनोत्तरकालम् । आनतिश्च वरणस्य प्रयोजनम् दृष्टत्वात् प्राप्तम् । तत्र वेदिकरणममावास्यायां प्रतिकृष्यते । तत्र किं प्रयोजनानुसारेण पाठक्रमं बाधित्वा ब्रह्मवरणमपकृष्यताम् उत तदनुरोधेन प्रयोजनं बाध्यतामित्यत्र लिङ्गावगतार्थबलात् पाठप्राप्तक्रमबाधो युक्त इति दृष्टार्थमेव तस्य वरणम्

होतुस्तु अवृतः सामिधेनीमन्वाह इति वचनात् प्रागेव वरणात् कर्मप्रवृत्तेः पश्चाद्वरणमदृष्टार्थमेवेति सोमेऽप्यकृतार्थत्वात् प्रतितन्त्रं कर्तव्यमिति। तथा-पूर्वाधिकरणे वेद्यपकर्षणमेव निर्णीतम्। ततः प्राचामङ्गानाममावास्यायामेवानुष्ठानम्। न तदन्तापकर्ष इति ॥ ३५ ॥

[ १९—आतिथ्याबर्हिःसंस्काराणां प्रसङ्गोपकारकत्वाधिकरणम् ]

**यज्ञोत्पत्त्युपदेशे निष्ठितकर्म प्रयोगभेदात्प्रतितन्त्रं क्रियेत ॥ ४२ ॥ पू०**

प्रयोगमध्ये क्रियमाणानां गृह्यमाणविशेषत्वान्न तन्त्रता। तन्त्रमध्यपाताभावाच्च प्रसङ्गोऽपि नास्ति। तस्मादावृत्तिः। सत्यं नास्ति तन्त्रम्। प्रसङ्गस्तु न निवार्य्यते। यद्यपि ह्यातिथ्याप्रयोगमध्ये तत्प्रयुक्ताः संस्काराः क्रियन्ते तथापि बर्हिर्द्वारत्वात्तेषां तस्य न सर्वार्थत्वात् अन्यप्रयुक्तैरपि संस्कारैः संस्कृतस्य यत्[1] स्वप्रयोजनं तस्यानपवर्गान्न भूयः संस्कारः[2] कार्यः। अयं च न्यायः कथित एवैकादशे यूपधर्माणामग्नीषोमीयकालकृतानामपि सवनीयानूबन्ध्ययोरप्युपकारकत्वाभिधानात् इति। किमर्थं तर्हीदमधिकरणम्? यो नाम दीक्षाकालत्वाद्यूपधर्म्माणामगृह्यमाणविशेषत्वात् तन्त्रतां मन्यते, तस्य बुद्धिं व्यावर्त्तयितुमिदमुच्यते। एकप्रयोगावसरेऽपि क्रियमाणाः साधारणद्रव्यविषयाः संस्काराः सर्वेषामुपकुर्वन्तीति। तेन यूपधर्म्माणां द्रव्यसाधारण्यादेव सकृत् करणं नाकर्मकालत्वादिति प्रकटितं भवति ॥ ४२ ॥

[ २०—अग्नीषोमीयबर्हिःस्तरणमन्त्रावृत्त्यधिकरणम् ]

**देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ४४ ॥ सि०**

पूर्वेण न्यायेन पूर्वः पक्षः। सिद्धान्तस्तु यदि बर्हिरर्थं स्तरणमन्त्रश्च स्यात् सकृत्करणम्। इदं तु बर्हिषा वेदिं स्तृणाति इति द्वितीयाश्रुत्या वेद्यर्थं

१. या च।

२. संस्कारैः कार्यम्।

स्तरणम् । मन्त्रोऽपि तद्द्वारेण तदर्थ एव । अतो वेदिभेदात् स्तरणावृत्तौ मन्त्रावृत्तिरिति ॥ ४४ ॥

[ २१—अग्नीषोमीये संनहनहरणमन्त्रयोरप्रयोगाधिकरणम् ]

## सन्नहनहरणे तथेति चेत् ॥ ४५ ॥ पू०

इह यद्यपि बर्हिरर्थः सन्नहनं[1] हरणं च तथापि सकृत्कृतयोस्तयोरनुपकारकत्वादावृत्तिः तावत् सिद्धा । तदावृत्तौ च तदर्थस्यापि मन्त्रस्यावृत्तिः स्यादिति मन्यते । सत्यमत्र सन्नहनहरणे क्रियेते । ते त्वप्राकृतत्वात् न मन्त्रं गृह्णीतः । प्रकृतौ हि यल्लूनस्य बर्हिषो विहारदेशप्रापणार्थं सन्नहनं हरणं च तदर्थोऽयं मन्त्रः । इह तु विहारदेशं प्रापितस्य बर्हिषः स्तरणदेशे नयनम् । तेन यथा प्रकृतावेव गार्हपत्यादाहवनीयं नीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तथेहापि ।

तस्मात् कार्यप्रयुक्तत्वाद्धर्माणामन्यकार्यके ।
मन्त्रोऽयं न प्रयुज्येत सन्नाहादाविति स्थितम् ॥ ४५ ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य प्रथमः पादः ।

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशस्याध्यायस्य द्वितीयः पादः ।

[ १—गार्हपत्त्यादेःश्रौतकर्ममात्रार्थताधिकरणम् ]

## विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥ पू०

किमाहवनीयादिभिर्यद्यच्छक्यते कर्तुं लौकिकं पार्वणस्थालीपाकहोमादि पचनप्रकाशनादि च वैदिकं च पुरोडाशश्रपणहोमादि तत् सर्वं कर्त्तव्यम्? उत यदेव निर्दिष्टं वैदिकं तदेव कर्त्तव्यमिति चिन्त्यते । तत्र लिङ्गेन सामर्थ्यात्मकेन प्रमाणेन यद्यच्छक्यते[2] तत्तकर्तव्यं[3] वैदिकं

---

१. स्तरणसन्नहनं पाठा० ।

२. यच्छक्य ।

३. तत्क० ।

**लौकिकं** चाग्निसाध्यम् । आधानेन ह्यार्जितानामग्नीनां प्रयोजनापेक्षायां सामर्थ्येन सर्वाग्निकार्यार्थता विज्ञायते । तस्मात् सर्वेषां तन्त्रेणाहवनीयाद्यर्जनमिति । **एवं प्राप्त आह—आहवनीयादय उत्पन्नाः साकाङ्क्षाः सन्तः प्रत्येक्षेणैव वाक्येन निराकाङ्क्षीक्रियन्ते, यदाहवनीये जुह्वति 'गार्हपत्ये हवींषि श्रपयति' दक्षिणाग्नावन्वाहार्यं पचति इति।** तेन निराकाङ्क्षेषु न लिङ्गेन सर्वार्थतया विनियोगः कल्पयितुं शक्यते । मा भूल्लिङ्गेन विनियोगः । वाक्येनैव तु लौकिकानामपि पार्वणस्थालीपाकादिहोमानां भवत्वित्यत आह—**न च लौकिकेषु** होमेषु **शक्या विधातुम् । ते हि सहैवाऽऽधारेणौपासनेनोत्पद्यन्ते होमादयः। यथा पदहोमः। तस्माद् वैदिकेष्वेति।** निरस्ते चात्र लिङ्गविनियोगेऽग्निं [1]समाधायेत्यादि सामान्यविनियोगेष्वाहवनीयादिग्रहणनिरासार्थं साप्तमिकमधिकरणमिति विवेकः ।

[ २—सवनीये पशुपुरोडाशकर्तव्यत्वाधिकरणम् ]

## सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ पू०

पशुपुरोडाशे सवनीयेषु चोभयत्रापि छिद्रापिधानार्थवाददर्शनादैकार्थ्यात् सवनीयैः पशुपुरोडाशस्य निवृत्तिः । पुरोडाशेन माध्यन्दिने सवन इति लिङ्गात्त्वनिवृत्तिः । अतः सवनीयैः पुरोडाशस्य विकल्प इति केचित् कल्पसूत्रकाराः । तन्निवृत्त्यर्थमिदमधिकरणम् । प्रत्यक्षविरोधादनपेक्षितत्वाच्च न छिद्रापिधानार्थत्वम् । अर्थवादमात्रं तु तत् । तस्मादैकार्थ्याभावात्तु प्रवृत्तिरेव न निवृत्तिः । एवञ्च पुरोडाशेन माध्यन्दिने सवन इत्येतदपाक्षिकं भविष्यति । अयं च बाधाबाधविचारोऽपि प्रयोगपरिमाणं फलतीति फलतः सङ्गतिः ॥ ८ ॥

---

१. मुपनिधा०

[ ३—सवनीये पशुपुरोडाशे हविष्कृदाह्वानाधिकरणम् ]

**हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥ सि०**

प्रकृतावाज्यौषधसान्नाय्यधर्मता हविष्कृदाह्वानस्य कृत्वा चिन्त्यते । तदा हि सान्नाय्यविकारे पशावपि हविष्कृदाह्वानमस्ति । तत्तु पशुमध्यपातिनां सवनीयानां प्रसङ्गेनैवोपकरोतीति न पुनराह्वातव्येति सिद्धमेवोत्तरविवक्षया प्राप्यते ॥ ११ ॥

[ ४—तार्तीयसवनिकसवनीयपुरोडाशेषु हविष्कृदाह्वानाभावाधिकरणम् ]

**पशौ तु संस्कृतेविधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ पू०**

हविष्कृत्समाख्यानात् हविःकरणमेव तस्याः कार्य्यम् । अतः पक्वे पशौ कृतार्थापवृक्तेति तदुत्तरकालेषु तार्तीयसवनिकेषु सौम्याश्विनयोश्च[1] भेदेनाह्वातव्येति पूर्वः पक्षः ।

सिद्धान्तस्तु—'हविष्कृदेहीति त्रिरवघ्नन्नाह्वायति' इति वचनादवघातकालेऽसावाहूता यज्ञेन सम्बन्धिता । सा तु किमर्थेति यद्यत् किञ्चित् यज्ञेऽत्र साहायकं तदर्थेति विज्ञायते, सामर्थ्यात् । न चैवं सामर्थ्यावगतां सर्वार्थतां समाख्या बाधितुमर्हति । मुख्यत्वात्तु हविष्करणेनासौ समाख्यायते । तेन पक्वेऽपि पशौ हविष्कृदापशुप्रयोगसमाप्तेरवस्थितेति प्रसङ्गेनैव तार्तीयसवनिकेष्वप्युपकरोतीति न पुनराह्वातव्या ॥ १२ ॥

[ ५—निशियज्ञाधिकरणम् ]

**निशि यज्ञे प्राकृतस्यावृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ॥१४॥ पू०**

---

१. अतिरात्रक्रतौ पर्यायस्तोत्रेषु समाप्तेषु सन्धिस्तोत्रात्पूर्वं "आश्विनं द्विकपाल निर्वपति" इति वाक्यविहित आश्विनः पुरोडाशः तृतीयसवने भवति ।

अमावास्याया निशीति सामानाधिकरण्यलाभात् कालवचनोऽयममावास्या-शब्दः न कर्मवचनः। प्रकरणान्तरत्वाच्च निशीष्टेर्दर्शस्य च न मिथः समीक्षणमस्ति। तेन यथा दर्शस्तन्त्रमात्मीयं प्रयुङ्क्ते तथा निशीष्टिरपि विशेषाभावात् तस्मात्तन्त्रिणीति उच्यते। सत्यं कालवचनोऽसौ। सत्यं च प्रकरणान्तरम्। तथाप्यवश्यं तावत् प्रवृत्ते दर्शे तन्मध्ये निशीष्टिरापतिता। तेन फलतस्तन्त्रमध्यविधानात्[1] दार्शिकमेव तन्त्रं लब्ध्वा कृतार्था निशीष्टिर्न स्वीयं तन्त्रं प्रयोक्तुमुत्सहते, प्रयोजनाभावात्। यत्विध्माबर्हिरादिप्रसङ्गेनोपकर्तुं न शक्नोति तन्मात्रं पृथक् प्रयुज्यते। अन्यत्तु प्रासङ्गिकमेवेति ॥ १४ ॥

[ ६—विकृतिष्वारम्भणीयानुष्ठानाधिकरणम् ]

## आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ १९ ॥

[2]यावज्जीवस्य प्रयोगस्यैकत्वात् तन्मध्यपतितासु विकृतिषु प्रसङ्गसिद्धेरारम्भणीया न पृथक् कर्त्तव्येति पूर्वपक्षमभिधाय नायं कालविधिर्यावज्जीवमिति कर्तृधर्मो नियमोऽसावित्युक्तम्।

अतः पर्वणि पर्वणि भिन्नाः प्रयोगाः। न तु यावज्जीवमेवमेकः[3] प्रयोगः। तेन तन्त्रमध्यपाताभावात् न प्रसङ्गः सम्भवतीति पृथक् कर्तव्येति सिद्धान्तितम्। तत्र पुनश्चोदितम् अन्यथा कृत्वा दोष उक्तोऽन्यथा कृत्वा परिहारः, सिद्धान्त इति। तत्रोत्तरम् पक्षान्तरैरपि परिहारो भवतीति। अस्यार्थः—पूर्वपक्षवादिना कालविधिपक्षं मत्वा प्रसङ्गेऽभिहिते नायं पक्षः साधीयान् अभ्यासलक्षणप्रसङ्गात्। तेन कर्तृधर्मोऽयं चोद्यत इति पक्षान्तरमालम्ब्य परिहाराभिधानं न दुष्यतीति। ननु द्वितीय एवायमर्थः साधित इति किमर्थमिदमधिकरणम्। तदुच्यते। प्रकृतौ तावत् प्रतिप्रयोगमारम्भणीया न कर्तव्या

---

१. विधानत्वाभावात् पाठा०।

२. ज्जीवप्रयो०।

३. एव नास्ति।

किन्तु सकृदेवादावित्युक्तं नवमे । तेन यो नाम मन्यते नूनमादौ कृतः संस्कारो यावज्जीवमवतिष्ठते । कथमन्यथा प्रतिप्रयोगमावृत्तिर्निवार्यते । ततश्च विकृतयोऽपि तेनैव संस्कारेण सिद्धार्था नारम्भणीयां प्रयुञ्जत इति भ्रमापनुत्तये इदमधिकरणम्। न संस्कारावस्थनात् प्रकृतौ पुनः प्रयोगाभावः किंत्वारम्भाभावात् । तदर्थत्वाच्चारम्भणीयायाः । तदुक्तं एकः पुनरारम्भो यावज्जीवप्रयोगादिति । इह त्वारम्भविभागात्कर्त्तव्यैवेष्टिरिति ।

[ ७ —भूयोऽनुग्रहाधिकरणम् ]

## विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् ॥ २२ ॥ सि०

अत्र भाष्यकारेण पञ्चदशरात्रमुदाहृत्य चिन्तितम्। तत्राग्निष्टुत् प्रथममहः । ततो ज्योतिर्गौरायुरिति त्र्यहः, परिशिष्टान्येकादशाहानि द्वादशाहिकानि (प्राकृतीनि इति।) तत्राग्निष्टुत्याग्नेयी सुब्रह्मण्या नामधेयात् प्राप्ता। द्वादशाहिकेष्वैकादशस्वहःसु चोदकेनैन्द्री । तत्र बलाबलं चिन्त्यते। ननु सिद्धमेव नामधेयप्राबल्यं सप्तमे, सत्यम् । तत्तु न्यायान्तरेणाक्षिप्यते । न हि नामधेयेन चोदकप्राप्तिरेकादशस्वहःसु निराकर्त्तुं शक्यते । तस्याग्निष्टुद्विषयत्वात् । भिन्नविषययोश्च बाध्यबाधकभावाभावात् । तेन चोदकतस्तेषु नामधेयं तत्राग्निष्टुति यथायथं विध्यन्ते प्राप्ते यत्र विरोधो भवति, तत्र भूयस्त्वेन कारणेन नामप्राप्तोऽपि बाध्यतेऽथवा नाम्नामेव मिथश्चिन्त्यते[१] । अत्रैव हि ज्योतिर्गौरायुरितिनामभिस्त्र्यहेऽपि सुब्रह्मण्यैन्द्री प्राप्नोति । अग्निष्टुति चाग्नेयी । तत्र बलाबलं चिन्त्यत इति । तदिदमुदाहरणमाक्षिपति—अस्मिन् सूत्रे पञ्चदशरात्रस्तावदनुदाहरणम् । कथम् ? या तावद् वसतीवरीपरिग्रहणोत्तरकाला सुब्रह्मण्या सा प्रतिदिवसं क्रियते तत्कालात्वावर्ततेति ह्युक्तम्। यथादेवतं च सा कर्त्तव्या आग्नेयी अग्निष्टुति । अन्येषु त्वैन्द्री । तेन तत्र तावत् संशय एव नास्ति भेदेन कारणादविरोधात् । यात्वाति-

---

१. यश्चिन्त्या ।

थ्यान्ते उपसत्सु च क्रियते तस्यां तन्त्रेण क्रियमाणायां **विरोधः** सम्भाव्यते। तत्रापि तु देवतासंस्कारात्मकत्वान्निगदस्य **यथादेवतमेव तन्त्रभेदः** प्रयोगभेदः **नास्ति तु तन्त्रेणेहोच्चारणम्**। यत्र हि सकृत्कृतं सर्वेषामुपकरोति तत्र तन्त्रता। न चेन्द्राग्न्योरन्यतरे संस्कृतेऽन्यतरः संस्कृतो भवति। अत एव प्रसङ्गोऽपि न युज्यते। अन्यार्थेनाङ्गेनान्यस्याप्युपकारे सिध्यति स्यात् प्रसङ्गः। न चैन्द्रया सुब्रह्मण्ययाग्नेः संस्कारः सिध्यति। **तद्यथा निर्वापमन्त्रः संस्कारकत्वात् प्रतिनिर्वापं भिद्यते एवमियमपीति।** तस्माद् द्वे अपि सुब्रह्मण्ये आह्वातव्येत्यनुदाहरणम्। **किं तर्ह्युदाहरणम्?** यत्र पञ्च यागाः सह चोद्यन्ते फलं प्रति तत्र च त्रयाणां **पौर्णमासिको** विध्यन्तः। द्वयोः **दार्शिकस्तदुदाहरणम्।** यथा अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानाः प्राजापत्यम् इति सप्त यागाः। तेषु योऽयमग्नये दात्रे पुरोडाशो याश्च धानाः प्राजापत्याः तत्राग्नेयविध्यन्तः प्रवर्तते। तेनाग्नेयस्य पौर्णमास्यमावास्ययोर्भावाद् विरोधाभावात्तदपोह्येतरे पञ्च यागाश्चिन्त्यन्ते। तेषु योऽयमिन्द्राय प्रदात्रे पुरोडाशः यच्च प्राजापत्यं दधि तयोर्दार्शिको विध्यन्तः। मधुघृतापान्तुपांशुयाजविकारत्वात् पौर्णमासिकः। **तत्राभिमर्शनाज्यभागमन्त्रयोर्विरोधः** मन्त्रयोरिति प्रत्येकमभिसम्बन्ध्यते। अभिमर्शनमन्त्रयोराज्यभागमन्त्रयोश्च विरोधः। 'चतुर्होत्रा पौर्णमासीमभिमृशेत्' पञ्चहोत्रामावास्याम् इत्यभिमर्शनमन्त्रौ। वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम् इत्याज्यभागमन्त्रौ। तत्राज्यभागमन्त्रयोः स्पष्टो विरोधः। अभिमर्शनमन्त्रयोरपि संसृष्टत्वाद्धिविषां सकृदेवाभिमर्शनम्। न ह्यभिमर्शनद्वयमस्ति येनैकं कृत्वापरमपि क्रियेत। वाक्यान्तरविहिते ह्यभिमर्शने मन्त्रद्वयमिदं व्यवस्थया विधीयते इत्यष्टमे वर्णितम्। न च कृतस्याभिमर्शनस्य मन्त्रार्थमावृत्तिर्युक्ता। तेन सकृदभिमर्शने कर्त्तव्ये तत्स्मरणार्थयोर्मन्त्रयोरस्ति विरोधः। तत्रैकेन मन्त्रेण [1]कृते कार्य्येऽन्यस्य प्रसङ्गसिद्धकार्य्यत्वान्निवृत्तिः। यद्यपि चात्र सर्वे

---

१. वृति (त्ते ?)।

तन्त्रिणस्तथापि विरुद्धेषु धर्मेषु प्रसङ्गसिद्धिरेवाङ्गीकार्या । तत्राविशेषाद-नियमे मुख्यत्वादैन्द्रदध्नोर्दाशिके विध्यन्ते प्राप्ते सिद्धान्तमाह—तत्र भूयसां धर्मानुग्रहः प्रयोगवचनानुग्रहाय । प्रयोगवचनो हि फलाय सर्वाणि साङ्गान्युप-सङ्गृह्णन्नवश्यं भाविनि कस्यचिद्गुणस्य लोपे भूयसां गुणहानिर्मा भूदिति अल्पवैगुण्यमङ्गीकरोति । यद्यपि मुख्यस्य धर्मोऽसञ्जातविरोधित्वात् प्रथम-मवगम्यते तथापि प्राप्तोऽप्यसौ पश्चाद् भूयस्त्वेन कारणेन बाध्यते । प्राप्तस्यापि हि बाधः प्राकृतवैकृतादिवदुपपन्न एव । तस्माद् भूयसामनुग्रहः ॥ २२ ॥

[ ८—समसंख्यानां धर्मविरोधे मुख्यधर्मस्यानुष्ठानाधिकरणम् ]

## मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥ सि०

इति समसंख्ययोः प्रधानयोर्धर्म्मणां विरोधेऽनियममाशङ्क्य मुख्यस्य साधर्म्यमनेन सूत्रेणोच्यते । तर्हि तत्र हि प्रथमस्य तावदविरुद्धावस्थायां धर्मोऽवगतः । तस्य परित्यागे न किञ्चित् कारणमस्ति । यदि हि पाश्चात्यस्य केनापि प्रकारेण भूयस्त्वादिना बलीयस्त्वं स्यात्ततः प्रथमावगतमपि पूर्वं बाध्येत । न तु तदिहास्ति । तस्माद्यत्र सर्वे तन्त्रिणस्तत्राल्पभूयो विरोधे भूयसां साधर्म्यमल्पे (न्ये? अल्पाः?) तु तद्धर्मजनितमुपकारं प्रसङ्गादुपजीवन्ति । समसंख्य विरोधे तु मुख्यस्य साधर्म्यम् इतरे तु प्रसङ्गोपजीविन इति । यस्मादेवं न्याययो-र्विषयभेदः तस्माद्भिन्नकाले[1] एवैते अधिकरणे न तु वाशब्दश्रवणमात्रेणै-काधिकरण्यं वृत्तिकारान्तरकृतं सम्यगिति मन्तव्यम् । विकल्पार्थस्त्वयं वा-शब्दः । धर्मविप्रतिषेधे भूयसां[2] तुल्यसंख्यत्वे तु मुख्यस्येति भाष्यकारोऽप्यै-काधिकरण्यं त्वेके मन्यन्त इति वदन्स्वानभिप्रेतत्वं दर्शयति ॥ २३ ॥

[ ९—अङ्गगुणविरोधाधिकरणम् । ]

## अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥ सि०

---

१. काले नास्ति ( भिन्ने एवै० ) ।

२. भूयसां मुख्यस्य चाधर्मं ( ? ) इति विकल्पश्च विषयव्यवस्थया द्रष्टव्यः । सा च दर्शिता । अल्पभूयो विरोधे ( भूयसां ) अधिकः पाठः ।

अङ्गमपि प्रधानस्योपकारकम्, अङ्गाङ्गमपि । तस्मादनियमः । मुख्यत्वाद्वा दीक्षणीयाधर्मानुग्रहः । नैवम्, प्रधानविधिर्हि साक्षात्तावत् प्रधाने प्रयुङ्क्ते । पश्चादङ्गेष्ववतरति । ततोऽपि पश्चादङ्गाङ्गेषु । तत्र प्रथमं प्रधानस्याङ्गे प्रयुक्ते पश्चाद्विरुद्धमङ्गाङ्गं न प्रयोक्तुं क्षमते । प्रधानसाद्गुण्याय चेदं सर्वं क्रियते । तच्च न साक्षात् गुणवत्तामनादृत्य परम्परामाश्रयति । तस्मान्मुख्यधर्म्मः । मुखे आरम्भे भवं मुख्यम् । तस्य धर्मः प्राप्तोऽपि प्रधानानाश्रितत्वेन कारणेन बाध्यत इति ॥ २५ ॥

[ १०—परिधौ धर्मद्वयानुष्ठानाधिकरणम् । ]

## परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥ सि०

उभयार्थत्वादुभयधर्मत्वं सिद्धमेवोत्तरविवक्षया प्राप्यते ॥ २६ ॥

[ ११—परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् । ]

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ पू०

विरुद्धेषु धर्म्मेषु प्रधानप्रत्यासत्त्या यूपधर्मानुग्रहं मन्यते । न तावदत्राङ्ग-गुणन्यायोऽस्ति, द्वयोरपि पश्वङ्गत्वात् । न च प्रत्यासत्तिमात्रेण कश्चिद्विशेषः । तस्मान्न तावद् यूपधर्म्माणां प्राबल्यम्, नाप्यविशेषः । परिधित्वानुपमर्देन यूपत्वविधानात् परिधिधर्माणामेव बलीयस्त्वमिति ॥ २७ ॥

[ १२—सवनीयपशोरेव तन्त्रिताधिकरणम् ]

## पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोर श्रुतिभूतत्वात् ॥ ३० ॥ पू०

सवनीयस्य पशोः सवनीयानां चेतरेषु वा पुरोडाशेषु इतरस्य पशो-स्तन्त्रं प्रसज्यते । इतरेषां वा पुरोडाशानां तन्त्रमितरस्मिन् पशौ प्रसज्यते । कुतः ? यतो नास्तीदृशी चोदना सवनीयं पशुमुपक्रम्य सवनीयाः पुरोडाशा निर्वप्तव्या इति । यथा पशुपुरोडाशस्य पशावुपक्रान्ते श्रवणम्, येन तन्त्रमध्यपातात् पशुतन्त्रं पुरोडाशेषु प्रसज्येत । नन्वसत्यपि श्रवणे

तन्मध्यपातित्वं तावदस्तीति निशीष्टिवत् प्रसङ्गः स्यात् । अत आह— **निशीष्टिन्यायोऽप्यत्र नास्ति ।** तत्र हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः पूर्वकृतैः सति ततो निमित्तेन नैमित्तिकी निशीष्टिरापतति । तेन सापि तन्त्रमध्ये पतत्येवासत्यपि श्रवणे । **इह तु प्रातरनुवाककाले पशुसवनीययोः समानकालः प्रक्रमः । तस्माद्विकल्पस्तन्त्रस्य ॥ ३० ॥**

## पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥ सि०

"इषिता दैव्या होतार" इत्ययं दार्शिकः सूक्तवाकप्रैषोऽग्नीषोमीये पशौ अग्निमद्यहोतारमवृणीतेत्येवं विकृतः, पुनः सवनीये पशौ विक्रियते— विकृत्याम्नायते—"अग्निमद्य होतारमवृणीतायं, यजमानः सुतासुती" इति । तद्यदि पौरोडाशिकं तन्त्रं कदाचित् स्यात्, तत इदं नित्यवद्विकृतप्रैषाम्नानं पाक्षिकं कृतं[1] स्यात् । तस्मान्नित्यवदाम्नानसामर्थ्यात् नित्यमसौ प्रैषः प्रयोक्तव्यः[2] । ननु प्रसज्यतामसौ पौरोडाशिकेऽपि तन्त्रेऽत आह—**तस्य च मैत्रावरुणेन कर्त्रा क्रियमाणस्य पशोः साद्गुण्यम्** साद्गुण्यमिति प्रत्येकं सम्बध्यते । तस्य मैत्रावरुणेन क्रियमाणस्य साद्गुण्यं तादृशेन च तेन पशोः साद्गुण्यमिति[3] । **न च सवनीयानां[4] मैत्रावरुणोऽस्ति ।** तस्माद्वैगुण्यपरिहाराय पशुस्तन्त्रीति[5] । तथा हि न किञ्चिद्द्विगुणं भवति ॥ ३१ ॥

## पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

---

१. कृतं नास्ति ।

२. प्रयोक्तव्यः ।

३. इति अ० पा० ।

४. पुरोडाशानां ।

५. इति नास्ति ।

पशुमन्ति त्रीण्यपि सवनीयानि[१] कर्तव्यानि सवनीयसमाख्यया सर्वसवनार्थत्वावगमात्। तत्र कथमेकेन पशुना सर्वेषां पशुमत्त्वमित्यपेक्षयामिदं विभागवाक्यं [२]वचनं 'वपया प्रातः सवने [३]चरन्ति पुरोडाशेन माध्यन्दिने सवनेऽङ्गैस्तृतीयसवने' इति। तदेवं पशोर्विप्रकर्षः। ततश्च प्रातःसवनादारभ्या तृतीयसवनाद्ध्रियते पशुः। पुरोडाशेषु पुनः अनुसवनं सवनीया निरूप्यन्ते[४] इति वचनम्। तत्र माध्यन्दिने सवने ये पुरोडाशाः सवनीयास्ते तस्मिन्नेव प्रक्रम्यन्ते परिसमाप्यन्ते च। कुतः? प्रातः सवनकाले तेषां प्रक्रमस्याविधानात्। तार्तीयसवनिकानामप्ययमेव न्यायः। तस्मादेतेषां[५] तावत्तयोरेव सवनयोः प्रारम्भपरिसमाप्ती[६]। तेषान्तु पशुना सह चिन्तैव नास्ति प्रसङ्गं प्रति। तेषां हि पशुरेव तन्त्रीत्यसन्दिग्धम्, तन्मध्यपातित्वात्तेषाम्। येऽपि प्रातःसवने सवनीयास्तेऽपि नैव तन्त्रिणः। कथम्? तेऽपि हि प्रातः सवनकाले[७] एव प्रक्रम्यन्ते परिसमाप्यन्ते च। न तु ते पशुवद्दीर्घकालाः वचनाभावात्। दीर्घकालश्च तन्त्री भवति। तत्तन्त्रं ह्यनपवृक्तं मध्यवर्तिभिरुपजीवितुं शक्यम्। अल्पकालस्य तु तन्त्रं तत् समाप्तावपवृक्तं न दीर्घकालेनोपजीवितुं शक्यते। पशुश्च दीर्घकाल इत्युक्तम्। तस्मात् स एव तन्त्री। ननु प्रातःसवनीयानामपि पुरोडाशानां दीर्घकालता सम्भवति। 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति'॥ इति। अयं पौरोडाशिकानामनुयाजानां उत्कर्षविधिर्भवतु। न हि विशेषः श्रूयते।

---

१. सवनानि।

२. वचनं नास्ति ( वाक्यमित्येव पाठः )

३. प्रचरन्ति।

४. सवनीयाः इत्येव पाठः।

५. येषां माध्यन्दिनतृतीयसवनयोः मु० पा० ( अयं पाठः कोशे नास्ति )

६. इति अ० पा०।

७. काले नास्ति मु० पु०।

आग्निमारुतादूर्ध्वं पाशुकैरनुयाजैरित्यत आह—यदि चैषां दीर्घकालता विधीयेत[१] अनूयाजास्तृतीयसवने कर्तव्या इति[२] विधातव्यं स्यात्। ते चाग्निमारुतादूर्ध्वं कर्तव्या नानियमेनेत्यपि विधातव्यं स्यात्। तत्र वाक्यं भिद्येत गौरवात्। पशोस्तु[३] पुनस्तन्त्रित्वे सति अङ्गैस्तृतीयसवने इत्यङ्ग-प्रचारोत्कर्षात्तदादि वाभिसम्बन्धादिति न्यायात् अनूयाजा अपि तृतीयसवन उत्कृष्यन्ते। तेषां तृतीयसवनसम्बन्धानामनियते[४] काले प्रचारे प्राप्ते विशेषमात्रमिदं विधीयते आग्निमारुतादूर्ध्वमिति। तत्र लाघवमपे-क्षितविधानं च स्यात्। तस्मात् पाशुकानामुत्कर्षः। यत्त्वत्र भाष्यकारेण कारणान्तरमुक्तं सोमान्ते स्वरोः प्रतिपत्तिदर्शनादिति तदयुक्तम्। न ह्यनुयाजो-त्कर्षापेक्षमिदं दर्शनं स्वरूपसाधारण्यादेवोपपन्नत्वात्। त्रयाणामपि[५] पशूनां यूपसाधारण्यात् ( स्वरूपसाधारण्यात् )[६] स्वरुसाधारण्यमुक्तम्। तेन प्रागनु-बन्ध्यायाः स्वरोरकृतार्थत्वान्न प्रतिपत्तिः। तस्यां तु समाप्तायां यज्ञान्ते प्रति-पत्तिर्भविष्यति विनाप्यनुयाजोत्कर्षेण। तस्माल्लाघवमेवात्र परिहारः। अन्यत्तु परमतम्। तस्मात् पशुरेव तन्त्रीति ॥ ३२ ॥

[ १३—प्रकृतिविकृत्योस्समानतन्त्रत्वे विकृतितन्त्रानुष्ठानाधिकरणम् ]

**अपूर्वं च प्रकृतौ समानतंत्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥ सि०**

प्रकृतिविकृत्योः समानतन्त्रत्वे विरुद्धेषु धर्म्मेषु प्रसङ्गावश्यंभावात्

---

१. तथा सति अ० पा०।
२. इत्यपि।
३. तु नास्ति।
४. अनियतकाले।
५. अपि हि।
६. अयमंशो नास्ति।

किमीयं तन्त्रं क्व प्रसज्यत इति चिन्त्यते। तत्र[1] प्रकृतेर्नित्यत्वात्सा पूर्वमुपतिष्ठते, तस्यामुपस्थितायां पश्चात्कामेन वा निमित्तेन वा विकृतिरापतन्ती तन्त्रोपजीविनीति प्राप्ते ब्रूमः। प्राप्तायां नित्यचिकीर्षायामापतन्ती नैमित्तिकी चिकीर्षा तामबाधित्वाभिनिवेशमलभमाना बाधते। अन्यथा[2] विशेषविधानमनवकाशत्वादप्रमाणं स्यात्। तस्माद् विकृतितन्त्रोपजीविनी प्रकृतिरिति ॥ ३३ ॥

[ १४—प्रसूनबर्हिषामेव ग्रहणाधिकरणम् ]

## अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवद्-मुख्येऽपि ॥ ३४ ॥ सि०

ऐन्द्राग्नादेर्मुख्यत्वाद्भूयस्त्वाच्च तदीय एव नियमो बर्हिषः स्यात्। न त्वल्पस्य च जघन्यस्य च द्यावापृथिव्यस्य धर्मः प्रसूननियम आदर्तव्यः। उच्यते—प्रसूनोपादानेऽपीतरेषामविरोधात्। अनियमे तु द्यावापृथिव्यस्य वैगुण्यप्रसङ्गात्। सम्भवति च सवसाद्गुण्ये वैगुण्यायोगात् प्रसूनानामेवोपादानम् ॥ ३४ ॥

[ १५—आग्रयणे द्यावापृथिव्यादीनां तन्त्रित्वाधिकरणम् ]

## तन्त्रप्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुक-सूक्तवाकेन ॥ ३५ ॥ पू०

यथा पशौ वैशेषिकसूक्तवाकदर्शनात्तस्य तन्त्रित्वमेवं द्यावापृथिव्यवैशेषिक प्रसूनदर्शनात्तस्य तन्त्रित्वम्। इतरे तु प्रसङ्गिनः। ततश्च विरुद्धेष्वपि धर्मेषु द्यावापृथिव्यस्यैव धर्मोऽनुग्राह्य इति मन्यते। उच्यते। न तावदत्र पशुवदेकस्य तन्त्रित्वमितरेषां च प्रासङ्गिकत्वमस्ति। सर्वेषामेकोपक्रमावसानत्वेन तन्त्रित्वात्।

---

१. अत्र।

२. विकृतेर्वि अ० पा०।

तत्र विरुद्धेषु धर्म्मेषु मुख्यानां भूयसां तथा ।
धर्म्मोऽनुगृह्यतेऽन्यस्य धर्मो बाध्य इति स्थितम् ॥
प्रसूनमविरुद्धत्वादेकधर्मोऽपि गृह्यते ।
न तावता विरुद्धोऽपि धर्मसङ्ग्रहमर्हति ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य द्वितीयः पादः ।

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य तृतीयः पादः ।

[ १—वत्सत्वगहतवाससोस्समुच्चयाधिकरणम् ]

## विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ पू०

ऐकाहिके हि विश्वजिति वत्सत्वक् परिधानं विहितमाष्टरात्रिकेऽपि विश्वजिति नामातिदेशेन प्राप्तम् । अवशिष्टेषु सप्तस्वहस्सु ज्यौतिष्टोमिकमहतं वासः परिधानं प्राप्तम् । तयोर्विरोधे भूयसां साधर्म्यादहतमेव स्यादिति स्पष्टं सूत्रम् ।[१] अत्र भाष्यकारेण कथमेवं विस्पष्टे सूत्रकारेण भूयोऽनुग्रहे व्यवह्रियमाणे वृत्तिकारान्तरैरैकाधिकरण्यमाश्रित्य भूयेभ्योऽपि मुख्यस्य बलीयस्त्वमाश्रितमित्याशंक्य तन्मते सूत्रान्यथाभावेन व्याख्यानमिति दर्शितमिति । सिद्धान्तस्तु विरोधाभावादुभयोः समुच्चयःसंभवन्नैकस्यापि बाधः । वत्सत्वचो हितार्थस्यैवोपरिवासःकार्य्ये विधानम् । तत्रापि परिदधाति प्रयोगात् । कौपीनाच्छादने च वत्सत्वचोऽयोग्यत्वादुपरिवासःकार्य्ये च योग्यत्वात्तत्रैव विधानम् । अहतं तु कौपीनाच्छादनाय योग्यमिति तत्रैव विधीयते । तस्मादुभयोः समुच्चयः ॥ १ ॥

---

१. अयमंशः भाष्ये नोलभ्यते । "ऐकाधिकरण्यं त्वेके मन्यन्ते" इति १२-२-२३ सूत्रभाष्ये उक्तम् । शास्त्रदीपिकायामप्यस्मिन्नेवाधिकरणे वृत्त्यन्तरकाराणां मतं भाष्यकारेण व्याख्यातमिति "ऐकाधिकरण्यवादिमते" इत्यादिना प्रकटयामास ।

[ २—अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गोपकारकत्वाधिकरणम् ]

## अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ ॥ पू०

उक्तमतुल्यसंख्येषु भूयसामनुग्रह इति । तेनानुनिर्वाप्येष्वपि भूयोऽनुग्रहे प्राप्तेऽपवादः क्रियते—यत्र सर्वे तन्त्रिणः तत्रासौ न्यायः । यत्रत्वेकस्तन्त्री इतरे प्रसङ्गिनः तत्रैकस्यापि तन्त्रिण एव धर्मः कर्त्तव्यः । प्रसङ्गिनस्तु प्रासङ्गिकत्वादेव तन्त्रोपजीविनो न स्वीयं धर्मं प्रयुञ्जते । तन्त्रिणैव तु प्रयुक्तेष्वङ्गेषु तज्जनितमुपकारं केवलं स्वीकुर्वते । अत एव बहवोऽपि सवनीयाः पुरोडाशाः स्वधर्म्मं पञ्चप्रयाजादिकमनादृत्य प्राप्तमेकादशप्रयाजादिजन्यमुपकारमनुमन्यन्ते । अनुनिर्वाप्याश्च प्रसङ्गिनः । तेऽपि ह्यन्यस्य प्रवृत्ततन्त्रतामङ्गीकृत्य तदनुविधीयन्ते । तस्मादिह मुख्यानुग्रहः । ये तु तन्त्रिष्वपि भूयोऽनुग्रहमनादृत्य मुख्यानुग्रहमेवैकाधिकरण्यमंगीकृत्य(करणीयं)मन्यन्ते तेषामनुनिर्वाप्येषु सुतरां मुख्यानुग्रहसिद्धेर्गतार्थमिदमधिकरणं स्यादिति ॥ ३ ॥

[ ३—ऊर्ध्वत्वादिगुणानां समुच्चयाधिकरणम् ]

## एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥ सि०

एकादशे प्रकरणविनियोज्यानां समुच्चयः कथितः, प्रकरणस्यापर्य्यायव्यापारत्वात् । संततादीनां तु निरपेक्षवाक्यविधानाद्विकल्प इति मन्यमानस्योत्तरम्—संभवात् प्रयोगवचनानुग्रहात् चैककर्माङ्गतया विहितानां सर्वाङ्गाणां समुच्चय इति ॥ ९ ॥

[ ४—एकार्थानां विकल्पाधिकरणम् ]

## एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥ सि०

पूर्ववद्व्रीहियवादिष्वपि समुच्चयः प्राप्नोति । सभवति च सोमयागस्येव प्रधानस्यापि यागस्याभ्यासमाश्रित्य समुच्चयः । मिश्रैर्वा क्रियताम् । उच्यते । युक्तं सोमे । तत्र हि भिन्ना अदृष्टद्वारा द्रव्यदेवतासंयोगाः ।

सर्व एव प्रकरणेन युगपद् गृहीता अभ्यासमन्तरेण सम्पादयितुं न शक्यन्ते। व्रीहियवयोस्तु एकं द्वारम्। नह्यत्रव्रीहियवविधिवशेन द्वारकल्पना येन प्रयाजादिवत् ऐन्द्रवायवादिवच्च पृथक् पृथक्[1] द्वारकल्पना स्यात्। वाक्यान्तरविहितयागनिर्वर्तकतया तयोर्विधानादेकं प्रयोजनं यागनिर्वृत्तिः। सा चैकैकेनेतरेतरनिरपेक्षेण दृश्यते। प्रयोगवचनोऽपि द्वारापेक्षया गृह्णन्नैकैकमेव पर्य्यायेण गृह्णाति। न युगपत् उभयम्। तदभावाच्च प्रधानावृत्तिरप्रमाणिकी। न च मिश्रैः पुरोडाशकरणं युक्तम्। यावता पुरोडाशः सम्पद्यते, तावत् प्रकृतिद्रव्यमपेक्षितम्। तस्यां चापेक्षायामन्योन्यनिरपेक्षाभ्यां वाक्याभ्यां व्रीहियवौ विधीयमानौ एकैकश एव कृत्स्नं पुरोडाशं व्याप्नुतः। व्याप्तिवशाच्च द्रव्यान्तरनिवृत्तिरर्थात्प्रतीयते। तस्मादनयोर्मिथः [2]प्रसङ्गः ॥ १० ॥

[ ५—दोषनिर्घातार्थप्रायश्चित्तानां विकल्पाधिकरणम् ]

## प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः ॥ १६ ॥ सि.

यज्ञाङ्गाति[3]क्रमे विहितानि प्रायश्चित्तानि तत्समाधित्सायां विधीयमानानि तत्समाधानार्थानि भवन्ति। समाधानं चादृष्टं नैकेन कृतमिति शक्यं वक्तुम्। तेन प्रयाजातिवदेतेषां समुच्चयः। उच्यते। युक्तं प्रयाजादिषु तेषां भिन्नकार्य्यत्वात्। नहि यत् समिधा क्रियते तत्तनूनपातेनेति प्रमाणमस्ति। ननु सर्वे करणानुग्रहार्थाः। सत्यम्। तत्र तु सर्वेषां युगपदेकेन प्रमाणेन साधनत्वमवगम्येत न पर्य्यायेण। प्रधानविधिना हि तेषां विधानम्। सच द्वारैक्यानवगमाद्युगपदेव सर्वैः सम्बध्यते। तद्वशेन च सर्वजन्यावान्तरकार्य्यैः करणानुग्रहः सिध्य-

---

१. एकवारमेवपृथक्पदम्

२. अन्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः। अत्र तु द्वयोराग्नेयार्थत्वान्नास्ति प्रसङ्गरूपम्। सत्यमेतावान्विशेषः तथाप्यन्येन कार्यसिद्धेरन्यस्य निवृत्तिरित्येतावता सामान्येन प्रसङ्गताकथनम्।

३. ज्ञानपूर्वातिक्रमे विहितानां प्रायश्चित्तानां विकल्प अत्र निर्णीयते।

तीति कल्प्यते। प्रायश्चित्तानि तु वैगुण्यमेकं निमित्तीकृत्य वाक्येनैव निरपेक्षेण विधीयमानानि प्रत्येकमेव तत्समाधानार्थानि विज्ञायन्ते। तेन तेषां द्वारैक्यात् व्रीहियवादिवद्विकल्पः॥ १६॥

[ ६—प्रायश्चित्तेषु समुच्चयाधिकरणम् ]

## समुच्चयस्त्वदोषार्थेषु ॥ १७॥ सि०

यानि तु [१]दोषनिर्घातार्थानि केवलं निमित्ते कर्म्माङ्गभूतानि तेषु द्वारैक्यानवगमात् प्रयोगवचनावगतसर्वाङ्गोपसंहारवशेन प्रयाजादिवत् समुच्चय इति प्रत्युदाहरणमात्रमेतदिति॥ १७॥

[ ७—कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम् ]

## मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात्॥ १८॥ पू०

पर्वण्यध्ययननिषेधात् कर्मकाले पर्वणि मन्त्राध्ययनमयुक्तमिति एतावती शङ्का। सिद्धान्तस्तु स्वाध्यायोऽध्येतव्यः इति विहितस्य ग्रहणार्थस्याध्ययनस्याविघ्नसमाप्त्युपकारेणायं धर्मः प्रकरणात्। तस्मात् कर्मकाले (मन्त्र) प्रयोगस्य पर्वण्यध्यविरोधः॥ १८॥

[ ८—मन्त्राम्नानस्वरस्यैव कर्मकाले नियमानाधिकरणम् ]

## भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात्॥ २०॥ पू०

पूर्वपक्षमाह **सामर्थ्येन मन्त्रो यच्छक्नोत्यभिधातुं तत्र न विधीयते प्राप्तत्वादेव, किन्तु भाषिकस्वरस्तस्याप्राप्तः। स विधीयते ब्राह्मणेन। अथवा विधीयमानोऽपि स्वरविशिष्ट एव मन्त्रो विधीयते न केवलः** सस्वरकस्य श्रवणात्। सर्वथाप्यध्ययनसिद्धस्य स्वरस्य निवृत्तिः। स हि मन्त्रो-

---

१. प्रकान्तकर्मणि मध्येसंभावितन्यूनातिरिक्तादिविध्यपराधविहितानि प्रायश्चित्तानि दोषनिर्घातार्थानि।

च्चारणाङ्गम् । उच्चारणं च भाषिकेणैव स्वरेण कृतमिति प्रसंगसिद्धेः प्रावचनिकस्य निवृत्तिः । सः स्वरः । प्रावचनिकस्य प्रवचनकालगृहीतस्य त्रैस्वर्यस्य ॥ २० ॥

**मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिक-श्रुतिः ॥ २१ ॥ सि०**

**ये तावन्मन्त्रा लिङ्गेन** [1]**प्राप्नुवन्ति ते यादृशा** यत्स्वरयुक्ता **एव निर्ज्ञातास्तादृशा एव प्रयोक्तव्याः** । कुतः । तत्र हि **ब्राह्मणस्य व्यापार एव नास्ति** । तत्र हि—पुनःश्रवणं गुणार्थं परिसंख्यार्थमर्थवादार्थं चेत्युक्तम्[2] **ये पुनर्लिङ्गेनाप्राप्ता वचनेन विधीयन्ते, तेषामप्राप्तत्वादेव मन्त्र-विधानेनैव कृतार्थं वाक्यं न भूयः स्वरमपि विधत्ते, वाक्यभेदभयात्** । नह्येकं वाक्यमर्थे मन्त्रं मन्त्रे च स्वरं शक्नोति विधातुम् ।

अथ स्वरेण मन्त्रेण च विशिष्टमर्थप्रकाशनं विधीयते । अरुणैकहायनीवत् स्वरमन्त्रयोः परस्परनियमो भवतीत्युच्यते । अत आह—**न चारुणाधिकरण-न्यायोऽत्र युक्तः । स्वरान्तरस्य स्वाध्याये सिद्धस्य द्वितीयस्यादृष्टार्थत्व-प्रसङ्गात्** । दृष्टेन च कर्मोपयोगे सति तदयोगात् । ब्राह्मणस्य च मन्त्र-विधानेनैवार्थवत्वात् न स्वरविधायकता । भाषिकस्वरोपादनं तु तस्य प्रवृत्तस्या-विच्छेदार्थम् । तस्मात् प्रावचनेन स्वरेण प्रयोग इति ॥ २१ ॥

[ ९—ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरवत्वाधिकरणम् ]

**तन्न्याय्यत्वाददृष्टोऽप्येवम् ॥ २२ ॥ पू०**

यदि ब्राह्मणं मन्त्रोपदेशपरं ततो येऽप्यदृष्टाः प्रवचने न तेषामपि भाषिकः स्वरः स्यात् । नैष दोषः । यद्यपि मन्त्रोपदेशपरं ब्राह्मणं तथापि मन्त्रो यथा-

---

१. विनिपुज्यन्ते मु० पा० ।

२. गुणार्थेन पुनः श्रुतिपरिसंख्या अर्थवादो वा १।२।३३-३५ ।

विज्ञात एव प्रयोक्तव्यः। स च भाषिकेणैव स्वरेण निर्ज्ञातो न स्वरान्तरेण। तस्मात्तत्र भाषिक एव स्वरः॥ २३॥

[ १०—करणमन्त्रान्ते पदार्थानुष्ठानाधिकरणम् ]

## मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात्सर्वस्य वचनार्थत्वात्॥ २५॥ सि०

यदेव समवेतार्थाभिधायि पदं तदनन्तरमेव कर्म कर्त्तव्यम् अथवोच्चारितेऽपि मन्त्रे कियन्तचित् काल स्थित्वापि कर्म्मकरणं न दुष्यतीति पूर्वपक्षद्वयम्।

सिद्धान्तस्तु सर्वस्य मन्त्रस्यार्थप्रकाशनाङ्गत्वान्न पदानन्तरमेव प्रयोगः सम्भवति। नापि कालान्तरे। प्रकाशनद्वारेण हि मन्त्रस्य करणत्वम्। अतो यावदेव मन्त्रजनितं ज्ञानमनपभ्रष्टं तावदेव कर्म्म कर्तव्यम्। अतो मन्त्रान्तेन कर्म्मादेः सन्निपात इति॥ २५॥

[ ११—वसोर्धाराकर्मसु मन्त्रकर्मादिसन्निपातित्वाधिकरणम् ]

## संतते वचनाद्धारायामादिसंयोगः॥ २६॥ पू०

मन्त्रस्य कर्म्मणश्च सह तननं विधीयत इति मत्वा, आदिसंयोगमाह। सिद्धान्तस्तु द्वादश द्वादशानि जुहोति इति संख्यया भिन्नानां कर्म्मणामिदं सातत्यमुच्यते। न हि क्षणिकस्य कर्म्मणो मन्त्रेण सातत्यं सम्भवति। तेनात्रापि मन्त्रान्तेनैव सन्निपातः॥ २६॥

[ १२—आघारे मन्त्रान्तेन कर्मादिसन्निपाताधिकरणम् ]

## आघारे च दीर्घधारत्वात्॥ २८॥ सि०

अत्र तु बहुकर्म्माभावान्मन्त्रसाहित्यमेव विधीयत इति मन्यते। धारायास्त्विदं सातत्यं विधीयत इति सिद्धान्तः॥ २८॥

[ १३—एककार्याणां मन्त्राणां विकल्पाधिकरणम् ]

## मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥ सि०

उत्तरविवक्षयेदं प्राप्तिसूत्रम् ॥ २६ ॥

[ १४—संख्याविहितमन्त्राणां समुच्चयाधिकरणम् ]

## संख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ ३० ॥ सि०

'चतुर्भिरादत्ते' इति य एते चत्वारो मन्त्रास्तैरादत्त इत्युच्यते। न तु संख्यैव कर्म्माङ्गतया विधीयते येन समुच्चयस्स्यात्। तस्मान्निरपेक्षत्वाद्विकल्पः। यदि च समुच्चयः स्यात् ततो येनैव मन्त्रेण सन्निपतितं कर्म तस्यैव करणत्वम्। अन्येषान्त्वदृष्टार्थत्वं स्यात्। तत्र चतुर्भिरिति सर्वेषां करणत्वं गम्यमानं बाध्येत। तस्माद्विकल्पः।

सिद्धान्तस्तु सामर्थ्यप्राप्तत्वान्मन्त्राणां संख्याविधानार्थमेवेदं वचनम्। यत्रापि सामर्थ्यप्राप्तिर्नाऽस्ति, तत्रापि श्रूयमाणा संख्या सम्भवत्यङ्गत्वेनोपलक्षणतया व्याख्यातुं युक्ता। तस्मात् संख्याङ्गत्ववशात् समुच्चयः। न चैवमेकस्यैव करणत्वम्, सर्वेषां करणत्वावगमात्। सम्भवति च तेषामपि संस्कारद्वारेण करणत्वम्, तेन सत्यपि निरपेक्षत्वे वचनबलात् पूर्वमन्त्रजनितसंस्कारसहितेनोत्तरमन्त्राभिधानेन जनितं स्मरणं कर्माङ्गमिति कल्प्यते। तस्मात् समुच्चयः ॥ ३० ॥

[ १५—ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ]

## ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥ पू०

मन्त्राणां लिङ्गप्राप्तत्वात् समुच्चयार्थान्येव वचनानीति मन्यते। सिद्धान्तस्तु ये तावन्मन्त्रेण लिङ्गेन च प्राप्तास्तेषु मन्त्रविनियोगेनैव कृतार्थं वाक्यं न

समुचये प्रमाणं भवति । लिङ्गप्राप्तेष्वपि गुणाद्यर्थं पुनः श्रवणमित्युक्तं मन्त्राधिकरणे । तस्मादत्र विकल्पः ।[१]

[ १६—हौत्राणां मन्त्राणां समुच्चयाधिकरणम् ]

## हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ पू०

करणानामिव क्रियमाणानुवादिनामप्येकैकस्यैव सामर्थ्यात् विकल्प इति पूर्वः पक्षः । सिद्धान्तस्तु—युक्तं यत् करणा विकल्पन्ते. ते हि कर्तव्यस्यार्थस्योपस्थापकाः ; न चैकेनोपस्थितेऽपरेणार्थः । क्रियमाणानुवादिनस्तु कर्म्मणः क्रियमाणस्य स्मृत्यविच्छेदार्थाः । यावत्समाप्ति चाविच्छेदोऽपेक्षितः । तस्मादेकस्मिन्नेव प्रयोगे सर्वेषां प्रयोजनमस्तीति समुच्चयः ।

करणाना विकल्पः स्यात् संख्या येषु न विद्यते ।<br>
अर्थभेदेन हौत्राणां समुच्चय इति स्थितम् ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य तृतीयः पादः ।

अथ श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने द्वादशाध्यायस्य चतुर्थः पादः ।

[ १ - जपादीनां समुच्चयाधिकरणम् ]

## जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥ सि०

वैष्णवीमनूच्य वाग्यन्तव्येत्येवमादीन्युदाहरणानि । एतेषां मन्त्राणां विकल्पः समुच्चयो वेति चिन्त्यते । तत्र पूर्वेण न्यायेन ब्राह्मणविहितेषु उक्तेन न्यायेन विकल्पे प्राप्त उच्यते समुच्चय इति । कुतः ?

---

१. शास्त्रदीपिकात इदमवगम्यते—अस्य भाष्यस्य वार्तिकमस्तीति । मुद्रित पुस्तके वार्तिकं नोट्टङ्कितम् । वार्तिके यद्यन्यत्रायं विस्तृतो भवेदत्र पुनरुक्तिभियोपेक्षित इति वक्तुं शक्यते । सोमनाथदीक्षितास्त्वत्र किमपि न वदन्ति ।

**अन्यकार्यत्वात्** । तथाहि—**वैष्णव्यामृचि ये वर्णास्तेषामुच्चारणमात्रमदृष्टार्थं कर्त्तव्यम्** । न च तददृष्टमन्येन क्रियत इति प्रमाणमस्ति । कथमुच्चारणमात्रम् ? इत्याह—**इदं हि जपशब्देनोच्यते** । "जप व्यक्तायां वाचि" इति स्मरणात् । नन्वर्थप्रत्यायनार्थमुच्चारणम् । नादृष्टार्थमत आह—**यः पुनस्तत्र पदैरुच्चार्य्यमाणैः स्वाभाविकोऽर्थप्रत्ययः सोऽचोदितत्वादविवक्षित एव । अथवायमर्थप्रत्ययः संयुक्तत्वाद्वर्णोच्चारणस्यैवाङ्गं** भवतु । यद्यवश्यं विवक्षितव्य इति शेषः । तस्माज्जपादीनां समुच्चयः । कः पुनर्जपादीनां विशेषः ? तत्र जप उच्चारणमात्रमित्युक्तम् । स्तुतिं दर्शयति—**यत्र पुनः आज्यैः स्तुवत इति चोदना तत्र कानिचित् पदानि गुणं प्रत्याययन्ति कानिचिद् गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति** । गुणकीर्तनं स्तुतिः । न च गुण्युपादानमन्तरेण गुणकीर्तनं कृतं स्यात् इति गुणिनोप्युच्चारणं भवति । अभिधानस्य स्तुतितो विशेषं दर्शयति—**स्तुतिचोदनासु स्तुतिमात्रस्य गुणाभिधानात्मकस्य चोदितत्वाद्विपरिवृत्त्या न गुण्यर्थव्याप्तिर्विवक्ष्येत । करणेष्वभिधानेष्वित्यर्थः । विपरिवृत्त्या स्तुतिर्गुणिनं व्यापयति । तत्र गुणिसम्बन्धितया गुणकीर्तनं न स्वात्मनि पर्य्यवसितम् । किन्तु गुणसम्बन्धितया गुणी कथं नाम प्रकाशितः स्यादित्येवमर्थम्** । तेन गुणविशिष्टतया गुणिप्रकाशनमभिधानमित्यर्थः । आशीःस्वरूपं दर्शयति—**गुणी व्याप्तो यत्र किञ्चित्प्रार्थ्यते ते मन्त्रा आशिष इत्युच्यन्ते** ॥ १ ॥

[ २—ऐन्द्राबार्हस्पत्ये याज्यानुवाक्यायुगलद्वयस्य विकल्पाधिकरणम् ]

## याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ सि०

पूर्ववत् समुच्चयप्राप्तावुच्यते एकार्थत्वादत्र विकल्पः स्यात्[१] न पुरोऽनुवाक्यासमाख्यया समुच्चयावगमादिति ॥ ३ ॥

---

१. **देवतोपलक्षणार्थत्वाद्याज्यानुवाक्यानां एकैकांशतश्च तत्सिद्धेः । एवं तर्हि याज्यानुवाक्ययोर्मिथो विकल्पः स्यात्—अधिकः पाठः ।**

[ ३—सोमक्रयणद्रव्याणां समुच्चयाधिकरणम् ]

## क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ पू०

अविकलेन व्रीहियवन्यायेन क्रयणानां विकल्पः प्राप्नोति। तत उच्यते। नैषां विकल्पः कार्यभेदात्। एकेन यानतिः क्रियते न सा समुदितैः, येनैकस्मिन्दत्ते कृतकार्यतया परं निवर्तेत। प्रत्यक्षं हि विक्रेतुर्द्रव्यबाहुल्येनानत्यन्तरम्। न च व्रीहियववत् प्रधानावृत्तिदोषः। न च सम्भवति समुच्चयेऽष्टदोषनिदानविकल्पाङ्गीकारो युक्तः। तेनानेकाम्नानबलात् स्वानता(विराजा)क्रीतः सोमोऽङ्गमिति कल्प्यते। अपि चाश्वशफादीनां निरपेक्षाणां क्रयसाधनत्वानुपपत्तेः. तद्बलेनेतरेषां सापेक्षाणामेव करणत्वमभ्युपेयम्। तस्मात् समुच्चयः। ननु वाससा क्रीणाति इत्यादिषु वाक्येषु सर्वेषु गुणश्रवणाद्गुणतो भिन्नानि क्रयणानि। न हि निर्गुणः क्रयः श्रूयते यत्रैते गुणविधयः स्युः। तस्माद् द्रव्याणामैकार्थ्याभावात् केयं चिन्ता। एवन्तर्हि क्रयणामेव विकल्पसमुच्चयाविह चिन्त्येते न द्रव्याणाम्। तस्माद् अदोषः ॥ ५ ॥

[ ४—चतुर्थमुपयजनाधिकरणम् ]

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥ सि०

उत्पत्तौ येन संयुक्तमित्यनेन न्यायेन सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमात्रमेतत्। न तु किञ्चिचिन्त्यमस्ति ॥ ८ ॥

[ ५—अग्न्याधेये दक्षिणानां विकल्पाधिकरणम् ]

## संख्यासु तु विकल्पः स्याच्छ्रुतिप्रतिषेधात् ॥९॥ सि०

क्रयणवद् दक्षिणाद्रव्येष्वपि आनतिभेदात् समुच्चयः प्राप्तो वचनादपोद्यते। संख्याश्रवणं हि समुच्चये बाध्येत। तस्मादत्र विकल्पः ॥ ९ ॥

[ ६—पशुगणे जाघनीनां विकल्पाधिकरणम् ]

## द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ सि०

**पशुगणे जाघनीनां विकल्पोऽथ समुच्चय इति** चिन्त्यते। विकल्पे व्रीहियवादिवदितेरतरप्रसङ्गः। समुच्चये तु नास्ति प्रसङ्गः इति। एवं सर्वत्र विकल्पसमुच्चयविचारे संगतिर्द्रष्टव्या। पूर्वपक्षमाह—**समुच्चय इति ब्रूमः। कथम्? अग्नीषोमीये पशावाज्यं च जाघनी च** पत्नीसंयाजद्रव्यतया **विकल्पेन** प्रकृतितः **प्राप्येते। तत्र पुनरुच्यते 'जाघन्या पत्नीः** संयाजयन्ति'[1] इति। **तच्च पुनर्वचनं** विकल्पेन प्राप्तां **जाघनीं नियमयति। स चायं नियमो दृष्टार्थः** जाघनीप्रतिपत्त्यर्थः। कथम्? **यावता विशसनेनोत्पादिता** जाघन्यः प्रयोजनमपेक्षन्ते तेन प्रतिपत्तिः। विशसनेन हृदयादीन्युत्पादितानि। हृदयाद्युत्पादनमात्रार्थं **पशोर्विशसनमिति न** जाघन्युत्पादनार्थमपि। कथमित्याह—**तानि हि वाक्यान्तरैः** हृदयस्याग्रेऽवद्यति इत्यादिभिरग्नीषोमीययागार्थत्वेन **विनियुक्तानि**। पशुश्चाग्नीषोमार्थमालब्धः। तस्माद्यान्यग्नीषोमार्थानि **द्रव्याणि तदर्थं विशसनम्, हृदयादीनि च तत्र विनियुक्तानि। जाघनी तु तत्राविनियुक्ता**। देवतान्तरयोगिनी **हि सा। तेन सा परार्था** लब्धपश्वनुनिष्पादिनी शकृल्लोहितवत्**प्रतिपत्त्यर्हा**। तेन तत्प्रतिपत्तिर्दृष्टमेव नियमस्य **प्रयोजनमिति**। ननु साधनतया विकल्पेन जाघनी प्राप्ता। यथा प्राप्तैव च नियम्यते। कथं प्रतिपाद्यत्वमत आह—**साधनतयापि नियतया तया यागे क्रियमाणे यासौ प्रतिपत्तिरपेक्षिता जाघन्याः सा भवत्येव।** तस्मिन् दृष्टे सति प्रयोजने नादृष्टमुपकल्प्यम्। अवश्यं चास्य नियमस्य किञ्चित्प्रयोजनमङ्गीकर्त्तव्यम्। तच्च दृष्टत्वात् प्रतिपत्तिरेव भवतीति। **ननु यदि देवतान्तरसंयुक्तस्य द्रव्यस्य देवतान्तरसंयोगः प्रतिपत्तिः तथासत्यभ्युदयेष्टावपीन्द्रार्थायोत्पन्नस्य सान्नाय्यादेर्विष्णवादिगमनं प्रतिपत्तिः स्यात्।** अत्र आह—**सान्नाय्ये तु** तण्डुलोपलक्षणार्थं सान्नाय्यग्रहणम्, **यागादपूर्वं न प्रतिपत्तिः।** उपयुक्तावशिष्टं हि द्रव्य प्रतिपत्त्यर्हम्। **सान्नाय्यादि तु** क्वचिदप्यनुपयुक्तं **पूर्वदेवतात आच्छिन्नं न प्रतिपत्त्यर्हमिति**। ननु यद्यत्र जाघनी प्रतिपाद्यते दर्श-

---

१. संयाजयति।

पूर्णमासयोरपि तर्हि तथा स्यात् । आह—**योऽप्ययं प्रकृतावाज्यजाघन्यो-विधाननियमः सोऽप्यदृष्टार्थ एव** सान्नाय्यवत् प्रतिपत्त्यनर्हत्वात् । इहापि तर्हि तथा स्यादत आह—**पशौ तु यागादपूर्वं** पत्नीसंयाजयागः प्रकृतिवद-दृष्टार्थ एव । जाघनीनियमस्तु द्रव्यसंस्कारकः दृष्टत्वात् संस्कारस्य । भवत्वेवं प्रकृते[1] तु तथापि कथं समुच्चयोऽत आह—**पशुगणेष्वप्येवमेव** संस्कारतया नियमः **प्राप्यते चोदकेन । तस्मात् सर्वा** जाघन्यस्संस्कर्त्तव्याः । अत्र भाष्यम्—जाघन्याः प्राधान्यं युक्तमित्यादि तस्मात् प्रतिपत्तिरित्येवमन्तम् । तदर्थतोऽनुभाष्यं दूषयति—**यदेतत्तस्यैकदेशोऽन्यदेवत्यः स्यादिति पूर्वपक्ष-वादी सिद्धान्ते दोषमुपन्यस्यति तदयुक्तम् ।** हृदयादीनामेवाग्नीषोमदेवत-त्वान्न कृत्स्नस्य तद्देवत्यता पशोः **तदुक्तं दशमे । तस्मात् पूर्वोक्तः** सूत्रोक्त एव **पूर्वः पक्षः नेतरो** भाष्योक्तः ।

**एवम्प्राप्ते ब्रूमः । नास्ति समुच्चयो जाघनीनाम् । कुतो ?** गुणत्वाज्जा-घन्याः । संस्कार्यत्वे हि **यागोऽपूर्वार्थः । दृष्टार्थं द्रव्यम् । नियमाच्च पुन-र्यागः** प्रधानभूत एव सन् द्रव्यसंस्कारोऽपीति **विवक्षाद्वयमङ्गीकर्तव्यम् ।** तच्च **न लभ्यते एकेन वाक्येन ।** विवक्षाभेदे हि वाक्यं भिद्येत । नन्वपूर्वं यागात्कल्पिते[2] द्रव्यनियमस्यावश्यं प्रयोजनेन भवितव्यम् । तस्यां चावस्थायां दृष्टत्वात् प्रतिपत्तिमेव प्रयोजनं गृह्णीमो नादृष्टं कल्पयामः । सत्यम् यदि नियमस्य प्रयोजनमिह कल्प्यं स्यात् । तत्तु क्लृप्तमेव प्रकृतौ जाघनीनियमाद-दृष्टम् । तत्तु प्रकृतावाज्येनापि कदाचित् सिध्यति, कदाचिज्जाघन्या । तत्रेह पुनर्विधानाज्जाघनी सर्वदा साधनं भवति नान्यमित्येतावत्कल्प्यते । न तु प्रयोजनान्तरं कल्प्यम् । **अपि च यागादपूर्वं प्रधानभूतं** यागमपेक्ष्य अपूर्वं प्रधानभूतम् । **द्रव्याच्च यागः** प्रधानभूतः । **नियमाच्च द्रव्यं** प्रधान-भूतम् । द्रव्यधर्मो हि नियमः । ततः किमित्याह—**तेन भवता प्रधानमङ्गा-ङ्गार्थं कृतं स्यात् ।** प्रधानभूतो यागः स्वाङ्गभूतद्रव्याङ्गभूतनियमार्थः स्यात् ।

---

१. प्रकृते तु नास्ति ।

२. कल्पितेऽपि ।

नियमकल्पितद्रव्यसंस्कारार्थस्स्यादित्यर्थः। तदपि च विना कारणेनानुचित-मिति। यदि चैतद्दोषपरिहाराय केवलं संस्कार्य्यैव जाघनी ततोऽप्राकृत-कार्य्यत्वात्पत्नीसंयाजाख्यं कर्मान्तरं पशौ प्राप्नोति। चोदकेन चान्ये पत्नी-संयाजाः प्राकृताः प्राप्नुवन्ति। न च वचनबलात् सौत्रामणी पशुपुरोडाशवत् प्राकृतानामेव कार्य्यान्तरं युक्तमाश्रयितुं वचनस्य नियमार्थतयाप्युपपत्तेः। तदेव-मेतं दोषाः पूर्वपक्षे प्रादुष्युः। तस्माद्यथा येन प्रकारेण आरादुपकारकत्वेन निर्ज्ञाताः पत्नीसंयाजाः प्रकृतौ तथैव प्राप्तानां पशौ जाघनी वैकल्पिकी साधनतया प्राप्ता तथैव नियम्यते न तु संस्कार्य्या। तस्मात् पशुगणे यया कयाचित् प्रकृतया जाघन्या कृतानां पत्नीसंयाजानामवैगुण्यात् जाघनीनां विकल्पः ॥ १० ॥

[ ७—काम्येन नित्यस्य बाधाधिकरणम् ]

## उखायां काम्यनिमित्तसमुच्चयो नियोगे काम-दर्शनात् ॥ १७ ॥ पू०

वृक्षाग्राज्ज्वलतो ब्रह्मवचसकामस्याहृत्यावदध्यादित्यत्र विचार्य्यते। किमुख्यस्य वार्क्षाग्रस्य च समुच्चय उत [1]वार्क्षाग्रेणोख्योऽन्यार्थेनापि[2] प्रसंगा-द्गोदोहनेनेव[3] चमसो बाध्यत इति। तत्र पूर्वः पक्षः। समुच्चय उभयोः। कुतः समुच्चयः? यावता गोदोहनचमसन्यायेन बाध एव नित्यस्य युक्त इति उत्तरं नियोगे कामदर्शनात्। 'ब्रह्मवर्चसकामस्याहृत्यावदध्यात्' इति ह्यवधाना-न्नियोग[4]परिचर्य्यादि कामः श्रूयते नाग्न्यन्तरात्। ब्रह्मवर्चसकामो वार्क्षा-

---

१. लाक्षाग्रेण।

२. अन्यार्थेपिना प्र०।

३. इव नास्ति।

४. पर्यायादिहका०।

ग्रमग्निं होमार्थं कुर्य्यादित्येवं न श्रूयते । येनोख्यो होमार्थो बाध्येत चमसवत् प्रणयनसाधनेन गोदोहनेन । किन्त्ववधानमात्रं श्रुतम् ।

एवं चेदवधानमात्रं कृत्वा[1] कृतार्थः शब्दो नाग्न्यन्तरं होमार्थं निर्वर्तयितुं शक्नोति । तस्मात्सत्येवोख्ये होमार्थे तस्योपर्यग्न्यन्तरावधानमात्रात् फलमिति समुच्चयः ॥ १७ ॥

## विकारो वा तदुक्तहेतुः ॥ २० ॥ सि०

[2]स्वाश्रयेष्वव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसम्भवादिति भाष्यमनुभाष्य व्याचष्टे—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादौ स्वाश्रयेषु ब्राह्मणपिण्डेषु अव्यावृत्तिविषयस्य सामान्यस्य कोऽर्थः ? अपरिच्छिन्नविषयस्य सर्वपिण्डेष्वनुस्यूतं न तु केभ्यश्चित् परिच्छिन्नं ब्राह्मणत्वं विषयो यस्य सामान्यशास्त्रस्य तत्तथोक्तम् तस्यान्यत्रापि वृत्तिसम्भवादिति । कुतोऽन्यत्रेत्याह—कौण्डिन्याख्यविशेषापेक्षया ततोऽन्यत्रापि वृत्तिसंभवाद्विशेषं कौंडिन्यमपेक्ष्य । तस्माद्विशेषात् कौंडिन्यादन्यत्रापि ब्राह्मणपिण्डेषु वृत्तिः सम्भवत्येव सामान्यशास्त्रस्य ।

तस्मात् सामान्यशास्त्रं कृतार्थमन्यस्मिन्विषये । अपरमपि भाष्यं—विशेषस्य चान्यतः परिच्छिन्नस्य [3]तदवसायिनः [4]केवलकौंडिन्य पर्यवसायिनः तदसम्भवे [5]तस्मिन्नसम्भवे विषयाभावप्रसङ्गात् उपदेश वैय्यर्थ्यं मा भूदिति । तदनुभाष्य व्याचष्टे—विशेषस्य पुनः कौडिन्यादेः शास्त्रस्यान्येभ्यो ब्राह्मणपिंडेभ्योऽवच्छिन्नस्य तदवसायिनः केवल कौण्डि-

---

१. कृता ।

२. ष्वव्या० ।

३. दविसा० ।

४. के ·· ··पर्यवसायिनः । अत्रैव कोशे १११ पृष्ठे अयं पाठ समुपलभ्यते ।

५. त ······ भवे नास्ति ।

न्यपर्यवसायिनः तदसम्भवे तस्मिन्नसम्भवे विषयाभावप्रसंगात् [१]उपदेश-वैयर्थ्यं स्यात् । तस्माद्वैयर्थ्यं माभूदिति तदपि विशेषशास्त्रमवश्यमानुग्रहीतव्यम् । ततः सामान्य तद्विषये बाध्यते ।

एवं व्याख्याय भाष्यं दूषयति—एवं यो बाधो वर्णितः सोऽयुक्तः । यत्कारणं शास्त्रानुग्रहः कार्य इति नास्ति चोदना येनानुगृह्येत । यदि च शास्त्रानुग्रहमात्रमदृष्टार्थं कार्यं स्यात् ततो दधि दाने कृतेऽनुगृहीतं शास्त्रमित्युभयत्र दधिदानमेव स्यात्—कौंडिन्येऽन्यत्र च तावतैव शास्त्रानुग्रहस्य कर्तव्यस्य कृतत्वात् दधिदान[२]शास्त्रमपि हि शास्त्रमेव । तस्मिन्ननुगृहीते कृतमेव कर्त्तव्यलब्ध[३] फलमिति किमिति शास्त्रान्तरमाश्रीयते । भवत्विति चेत्तत्राह—एतत्तु नेष्यते तस्माद्यथा[४] चास्माभिः ।

पुरुषार्थसमासक्तेः काम्यं नित्यस्य बाधकम् ।

विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनात् ।

इत्यादिना बाधो वर्णितो नित्यनैमित्तिकयोः स एव युक्तः ५ ।

अथ यदुक्तं पूर्वपक्षेऽभ्याधानमात्रात् फलमिति । अत्रोच्यते । तानि द्वैधमित्यनेन न्यायेन संस्कारकर्म प्रकृतमभ्याधानम् । अभ्याधानेन हि द्रव्यं चिकीर्ष्यते । तेन हि दृष्ट एव संस्कारोऽग्नेः क्रियते । तस्मान्नादृष्टार्थम् [५]फलार्थमभ्याधानम् । तत्रैव गुणविशेषोऽस्य फलाय विधीयते दध्नेन्द्रियकामधिकरणन्यायात् । न कर्म्मान्तरम् । तच्च होमार्थस्याग्नेरभ्याधानमिति तादृश एव तस्मिन् वृक्षाग्रादित्येतावन्मात्रं फलाय विधीयते । तस्माद्धोमार्थस्य नित्यस्य बाध इति सिद्धम् ॥ २० ॥

---

१. वैयर्थ्यं स्यात् ।

२. दानमपिशास्त्र० ।

३. तं० यं ल० ।

४. य एवास्मा० ।

५. फलार्थाभ्याधानम् । यंत्तु प्रकृताभ्याधानं तत्रैव० ।

[ ८—काम्यस्याग्नेराहवनीयत्वाभावाधिकरणम् ]

**स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥ पू०**

प्रासङ्गिकमेतत् । योऽसौ काम्योऽग्निः तस्याहवनीयशब्दो वाचकः स्यात्, आहूयतेऽस्मिन्निति । न वाचकः । संस्कारनिमित्तो ह्यसौ न वार्क्ष्याग्रादौ वर्तितुमर्हति । तेनाहवनीयधर्मा नित्यो गतश्रियो धार्य इत्येवमादयो न प्रवर्तेरन् ॥२६॥

[ ९—काम्याग्नेराधानिकसंस्कारलोपाधिकरम् ]

**तस्मिन् संस्कारकर्मशिष्टत्वात् ॥ २८ ॥ पू०**

काम्येऽग्नावाधानादिसंस्काराः कर्तव्याः । तेषां [१]सर्वकर्मार्थत्वावगमात् । अत आहवनीयत्वमप्यस्येवेति मन्यते । न वा कर्तव्याः न हि ते [२]कर्मार्थाः किन्त्वाहवनीयोत्पत्त्यर्थाः कर्मार्थश्चायमाहवनीयः । किञ्चाधान सहाग्निद्वयमुत्पादयति नैकैकम् । इह च गार्हपत्योऽवस्थितः । तस्मान्न कर्तव्यमाधानम् । क्रत्वपूर्वार्थास्तु संस्काराः कर्तव्या एवेति ॥ २८ ॥

[ १०—उख्याग्नेर्नित्यधारणाभावाधिकरणम् ]

**नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ ३० ॥ पू०**

गतः काम्याग्निप्रसङ्गः । नित्ये तूख्ये चिन्त्यते । स किं गतश्रियोऽगतश्रियश्च विकल्पेन धारयितव्य उत नैव धारयितव्य इति । तत्र न प्रतिसमिध्येदिति[३] । धारणप्रतिषेधो नासत्यां प्राप्तौ घटते । प्राप्तिश्च विध्यधीनेति विधिरनुमीयते तेन च विहितं प्रतिषेधेन[४] च प्रतिषिद्धं धारणं विकल्पितुमर्हतीति पूर्वः पक्षः ॥

---

१. सर्वकामार्थ० ।

२. कामार्थाः ।

३. न्ध्यादि ।

४. प्रतिषेधेन च नास्ति ।

सिद्धान्तस्तु—आहवनीय एवासौ सन्तापेनोख्यतामुपगतः । स च गतश्रियो धार्य एव विहित इति । तस्यायं प्रतिषेधो नान्येषामपि धारणप्राप्तिमनुमापयितुमर्हति । गतश्रियस्तु सामान्यप्राप्तं धारणमुख्येन न[१] पर्युदस्यत इति । अनियमः[२] ।

[ ११—सत्रे शुक्रान्वारम्भणादीनामेककर्तृकत्वाधिकरणम् ]

## परार्थान्येको यजमानगणे ॥ ३२ ॥ सि०

क्रत्वर्थेषु शुक्रान्वारम्भणादिषु याजमानेष्वेक एव यजमानगणे[3] कर्ता स्यादित्युत्तरविवक्षयैतत्प्राप्यत इति । उत्तरविवक्षया प्राप्तिसूत्रमेतत् ॥ ३२ ॥

[ १२—अहीने शुक्रान्वारम्भादीनामनियतयजमानकर्तृकत्वाधिकरणम् ]

## अनियमोऽविशेषात् ॥ ३३ ॥ सि०

यः कश्चित् कुर्य्यादविशेषादितीदमेव स्थितम् । अहीनेषु गृहपत्यभावात् ॥

[ १३—सत्रे शुक्रान्वारम्भणादौ गृहपतेरेव कर्तृत्वाधिकरणम् ]

## मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥ सि०

सत्रे त्विदं पूर्वपक्षीकृत्य सिद्धान्तोऽभिधीयते । गृहपतिरेव तत्रार्त्विज्य परिहार[४] विरोधपरिजिहीर्षया नियम्येतेति ॥ ३४ ॥

[ १४—सत्रे सर्वेषां यजमानानां संस्कृत्यधिकरणम् ]

## सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥ पू०

---

१. मुख्य तेन ।

२. अनियमः नास्ति ।

३. यद्यपि प्रकृतौ अध्वर्युगणः होतृगणः ब्रह्मगणः उद्गातृगण इति गणचतुष्टय न तु पञ्चमो गणस्तथापि अहीने द्वौ वा त्रयो यजमानाः पूर्वोक्तगणेष्वनन्तर्भूतैः पञ्चमो गणः सम्भवति । तस्य च यजमानगण इति नाम ।

४. परिहार नास्ति ।

गृहपतिरिति गृहशब्देन कर्म्मोच्यते। तस्य पतिर्गृहपतिः। तच्च सर्वेषां स्वाम्ये सत्यपि विशेषत एकस्यैवेयं समाख्या फलभूयस्त्वनिमित्ता। तच्च संस्कारयोगनिमित्तमित्यन्येषां संस्कारा न भवेयुरिति पूर्वः पक्षः॥

सिद्धान्तस्तु सर्वेषां फलित्वान्न संस्कारहानियुक्ता। गृहपतिसमाख्यात्वकर्म-करत्वनिमित्ता। भवतु वा फलभूयस्त्वनिमित्ता। तत्तु (सा तु) न संस्काराधिक्यात् किन्तु वचनात् 'सः सत्रस्य प्रत्येता स हि भूयिष्ठामध्नोति' इति। तस्मात् सर्वे संस्कारान्कुर्य्युः॥

यत्र तु याजनमार्त्विज्येन विरुध्यते तत्रार्त्विज्यमेव कुर्य्युः प्रत्यक्षविधानात् ये 'यजमानास्ते ऋत्विजः' इति हि यजमानानामार्त्विज्ये विधानम्। याजमानं तु तेषां चोदकेन प्राप्तम्। तस्मात्तद्विरोधे सत्यार्त्विज्यम्। अविरुद्धास्तु सर्वे संस्काराः कर्त्तव्या इति॥ ३५॥

[ १५—ब्राह्मणस्यार्त्विज्याधिकरणम् ]

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात्॥ ४२॥ पू०**

उक्तमधस्तात् 'विप्रतिषेधे[2] परम्' इति सूत्रे विरोधे सत्यार्त्विज्यमिति। तत्[3]—प्रसङ्गादार्त्विज्यस्य कर्ता चिन्त्यते।

तत्र याजनादयो ब्राह्मणस्य वृत्त्युपाया इति पुरुषार्थोऽयं नियमः ब्राह्मण एभिरेवोपायैर्जीवेत्। क्षत्रियादयोऽपि युद्धादिभिरेवेति। न तु क्रत्वर्थः। तेन[4] तदतिक्रमे पुरुषस्यैव प्रत्यवायः न क्रतोः। तेन यो नाम विधिमति-

---

१. आर्त्विज्येन।

२. जै० सू० १२.४.३३।

३. अयमंश ११३ पृष्ठे सन्निवेशनीयः।

४. एतद्वाक्यं नास्ति।

५. प्रच्युतिः।

क्रम्यापि क्षत्रियो वैश्यो वा याजयति तेनापि न क्रतोः किञ्चिद्वैगुण्यमस्ति। तस्मात् सर्वेषामार्त्विज्यमिति प्राप्ते अभिधीयते—स्यादेवं यदि

षण्णां तु कर्म्मणामस्य त्रीणि कर्माणि[1] जीविका।

षट्कर्मैको भवत्येषां [2]त्रिभिरन्यः प्रवर्तते इति।

एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहान् परिहाप्येत्येवमाद्येव वचनं न स्यात्।

अन्यदपि स्मृतिवचनं क्रतुसंयुक्तमस्त्येव—ब्राह्मणानामार्त्विज्यमिति। तच्चार्त्विज्याङ्गतया ब्राह्मण्यं विधत्ते। अतः तल्लोपे क्रतुरेव विगुणः स्यात्। तथा भारतेऽपि

राजयाजकयाज्येषु[3] यथादत्तं हविर्नश्येदिति हविषो विनाशवचनात् क्रतुवैगुण्यमेव दर्शितम्। लिङ्गानि[4] च दर्शितानि ब्राह्मणानामिदं हविरित्येवमादीनि।

आर्त्विज्यं न भवेत्कर्म स्वतः क्षत्रियवैश्ययोः।
ब्राह्मणानां तु विदुषामार्त्विज्यं स्यादिति स्थितम्॥

इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
द्वादशाध्यायस्य चतुर्थः पादः॥
समाप्तो द्वादशोऽध्यायः॥

॥ तन्त्ररत्नं समाप्तम्॥

---

१. कर्माणि अधिकः।

२. द्वात्रिभिः मूलपाठः।

३. यस्यविदश्ययि यथा हविः। इति।

४. लिङ्गदर्शनानिः।

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

| क्रमसंख्या | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | शुक्लयजुर्वेदकाण्वसंहिता— | [ उत्तरविंशतिः ] संहितेयं सायणभाष्यसहिता प्रकाशिता। सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— | २२-०० |
| २. | वाक्यपदीयम्— | [ तृतीयकाण्डस्य द्वितीयो भागः ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— | १०७-०० |
| ३. | महाभाष्यनिगूढाकूतयः — | अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ४. | व्याकरणदर्शनप्रतिमा— | आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति— | ३६-६० |
| ५. | बौधायनशुल्वसूत्रम्— | ग्रन्थोऽयं श्रीव्येंकटेश्वरदीक्षितविरचितया बोधायनशुल्वमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्वसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— | |
| ६. | तन्त्ररत्नम्— | [ पञ्चमभागः ] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते— | ४६-६० |
| ७. | तन्त्रसङ्ग्रहः— | [ तृतीयो भागः ] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— | ६२-२० |
| ८. | योगिनीहृदयम्— | [ तृतीयसंस्करणम् ] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— | ३३-४० |
| ९. | रुद्रयामलम्— | तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्— | |
| १०. | यन्त्रराजविचारविंशाध्यायी— | आचार्यनयनसुखोपाध्यायविरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां खलु सैद्धान्तिकं प्रायोगिकञ्च विवेचनं कृतं वर्तते— | ११-०० |
| ११. | पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः— | अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च साङ्ख्य-योगपदार्था विवेचिताः— | ३२-८० |
| १२. | भारतीयविचारदर्शनम्— | [ द्वितीयो भागः ] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाराणाम् ऐतिहासिकं तुलाबोधकञ्च विवेचनं कृतम्— | १५५-६० |
| १३. | पालितिपिटकसद्दानुक्रमणिका— | पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽस्मिन् ग्रन्थे कृतो वर्तते— | १००-६० |

प्रकाशकः—निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी—२२१००२.
मुद्रकः—मुद्रणालय-व्यवस्थापकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२.